भिन्दति । **गडि वदनैकदेशे** । गण्डति । **चदि आह्लादने** । चन्दति । **त्रदि चेष्टायाम्** । त्रन्दति । **क्लिदि क्रदि क्लदि आह्वाने रोदने च** । **क्लिदि परिदेवने** । **तकि कृच्छ्रजीवने** ।। **युगि जिगि वुगि वर्जने** । **मघि मण्डने** । **शिघि आघ्राणे** । **मन्थ विलोडने** । मन्थति । ममन्थ । कित्वान्नलोपः । मथ्यात् ।

**अर्च पूजायाम्** । अर्चति ।। **तस्मान्नुड् द्विहलः** ।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट् । आनर्च । आनर्चतुः । आनर्चुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् । एवम्—**अर्द गतौ याचने च** । **अति अदि बन्धने** । **वन षण संभक्तौ** । वनति । ववान ।। **न शसददवादिगुणानाम्** ।६।४।१२६। शसेर्ददेर्वकारादीनां गुणशब्देन भावितो योऽत् तस्य च एत्वाभ्यासलोपौ न । ववनतुः । ववनुः । सनति । ससान । सेनतुः । सेनुः ।। **ये विभाषा** ।६।४।४३। जनसनखनामात्वं वा यादौ क्ङिति । सायात् । सन्यात् ।।

**वज व्रज गतौ** । व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ।। **वदव्रजहलन्तस्याचः** ।७।२।३। एषामचो वृद्धिः परस्मैपदे सिचि । अव्राजीत् । अव्रजिष्यत् ।

---

वदनैकदेशे—मुखक्रियायामित्यर्थः ।

कित्वात् = यासुटः कित्वादनिदितामिति—**नलोप** इत्यर्थः । **तस्मादिति** । तच्छब्देन दीर्घीभूताकारपरामर्शः । **सायादिति** । सनधातोराशीर्लिङि रूपद्वयमेतत् । **अव्राजीदिति** । हलन्तत्वादेव सिद्धे वदव्रजोर्ग्रहणं 'नेटी'ति निषेधबाधनार्थम् ।

**कटे वर्षाऽऽवरणयोः** । कटति । चकाट । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्** ।७।२।५। हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि परस्मैपदेषु । अकटीत् । अकटिष्यत् । **गुपू रक्षणे** । **गुपूधूपविच्छिपणिपनिभ्य आयः** ।३।१।२८। स्वार्थे । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'ति न्यायात् ॥ **सनाद्यन्ता धातवः** ।३।१।३२। सनादयः कर्मेणिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः स्युः ।

**सन् क्यच् काम्यच् क्यङ् क्यषोऽथाचारक्विब् णिज्यङौ तथा ।**
**यगाय ईयङ् णिङ् चेति द्वादशाऽमी सनादयः ॥ १ ॥**

'सनाद्यन्ता धातव' इत्यस्यानन्तरं 'भूवादय' इत्येव सूत्रयितुं युक्तम् । धातुत्वाल्लडादयः । गोपायति ॥ **आयादय आर्धधातुके वा** ।३।१।३१। आर्धधातुकविवक्षायामायेयङ्णिङो वा स्युः । ***कास्यनेकाच आम्वक्तव्यो लिटि** । कास आम्विधानान्मस्य नेत्त्वम् ॥ **अतो लोपः** ।६।४।४८। आर्धधातुकोपदेशे यदन्तं तस्याऽतो लोप आर्धधातुके ॥ **आमः** ।२।४।८१। आमः परस्य लुक् ॥

---

हमयान्तस्य—हकारमकारयकारान्तस्य । गुपूधूपेति । एभ्य आयप्रत्ययः स्यात्स्वार्थे इत्यर्थः । **धातुत्वात्** = गोपायेत्यस्यानेन धातुत्वात् । 'आर्धधातुके'इति विषयसप्तमी, तदाह—**विवक्षायामिति** । **नेत्त्वमिति** । आमो मित्त्वे 'मिदचोऽन्त्या'दिति परिभाषया कास आकारात्पर आम् स्यात्, ततश्च सवर्णदीर्घे सति आमि सत्यसति वा विशेषाभावादास्कासोराम्विधानं व्यर्थं स्यात्, तदेवमास्कासोराम्विधानान्मस्य नेत्त्वमिति लभ्यते इति भावः ।

**कृञ्चानुप्रयुज्यते लिटि** ।३।१।४०। आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते, तेषां द्वित्वादि ॥ **उरत्** ।७।४।६६। अभ्यासस्य ऋतोऽत्स्यात्प्रत्यये । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते ॥ **द्विर्वचनेऽचि** ।१।१।५९। द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः । गोपायांचक्रुः ॥ **एकाच उपदेशेऽनुदात्तात्** ।७।२।१०। उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्य वलादेरार्धधातुकस्येण् न ।

**ऊदॄदन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः ।**

**वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥१॥**

**कान्तेषु**-शक्लेकः । **चान्तेषु**-पच्-मुच्-रिच्-वच्-विच्-सिचः-षट् । **छान्तेषु** प्रच्छ्येकः ॥ **जान्तेषु**-त्यज्-निजिर्-भज्-भञ्ज्-भुज्-भ्रस्ज्-मस्ज्-यज्-युज्-रुज्-रञ्ज्-विजिर्-सञ्ज-स्वञ्ज-सृजः-पञ्चदश । **दान्तेषु**-अद्-क्षुद्-खिद्-छिद्-तुद्-नुद्-पद्य-भिद्-विद्य-विनद्-विन्द-शद्-सद्-स्विद्य-स्कन्द-हदः-षोडश ॥ **धान्तेषु**-क्रुध्-क्षुध्-बुध्य-बन्ध्-युध्-रुध्-राध्-व्यध्-शुध्-साध्-सिध्या-एकादश । **नान्तेषु**-

---

**कृञ्चेति** । कृञिति प्रत्याहारः, स च 'कृभ्वस्तियोगे सम्पद्य कर्त्तरिच्वि'रित्यत आरभ्य 'कृञो द्वितीयतृतीयशम्वबीजात्कृषा'विति ञकारेण । तेन कृभ्वस्तिसम्पदीनां लाभः, तत्र कृभ्वस्तय एवानुप्रयुज्यन्ते, सम्पदिस्तु कृञ्प्रत्याहारेऽन्तर्भूतोऽप्यनन्वितार्थत्वान्न प्रयुज्यते, आम्प्रकृतीनां क्रियाविशेषवाचित्वात्कृभ्वस्तीनां क्रियासामान्यवाचित्वात्तेषामभेदान्वयः, 'सामान्यविशेषयोरभेदान्वय' इत्यभियुक्तोक्तेः । सम्पदेस्तु क्रियाविशेषवाचितयाऽऽम्प्रकृत्या सहाऽभेदान्वयासम्भवात्स नानुप्रयुज्यते इत्याशयः ॥ **तेषाम्** = अनुप्रयुज्यमानकृञादीनाम् । **द्वित्वादि** = द्वित्वमभ्यासकार्यञ्च ।

मन्यहनौ द्वौ ॥ पान्तेषु-आप्-क्षिप्-छुप्-तप्-तिप्-तृप्य-दृश्य-लिप्-लुप्-वप्-शप्-स्वप्-सृपस्त्रयोदश ॥ भान्तेषु-यभ्-रभ्-लभस्त्रयः ॥ मान्तेषु-गम्-नम्-रम्-यमश्चत्वारः ॥ शान्तेषु-क्रुश्-दंश्-दिश्-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशोदश ॥ षान्तेषु-कृष्-त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्या-एकादश। सान्तेषु-घस्वसती द्वौ॥ हान्तेषु-दह्-दुह्-दिह्-नह्-मिह्-रुह्-लिह्-वहोऽष्टौ।

**अनुदात्ता हलन्तेषु धातवो ह्यधिकं शतम्[1] ॥**

गोपायांचकर्थ। गोपायांचक्रथुः। गोपायाञ्चक्र। गोपायांचकार। गोपायाञ्चकर। गोपायांचकृव। गोपायांचकृम। गोपायांबभूव। गोपायामास। जुगोप। जुगुपतुः जुगुपुः॥ **स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।** स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा। जुगोपिथ। जुगोप्थ। गोपायिता। गोपिता। गोप्ता। गोपायिष्यति। गोपिष्यति। गोप्स्यति। गोपायतु। अगोपायत्। गोपायेत्। गोपाय्यात्। गुप्यात्। अगोपायीत्॥ **नेटि ।७।२।४।** इडादौ सिचि हलन्तलक्षणा वृद्धिर्न। अगोपीत्। अगौप्सीत्॥ **झलो झलि ।८।२।२६।** झलः परस्य सस्य लोपः स्याज्झलि। अगौप्ताम्। अगौप्सुः। अगौप्सीः। अगौप्तम्। अगौप्त। अगौप्सम्। अगौप्स्व। अगौप्स्म। अगोपायिष्यत्। अगोपिष्यत्। अगोप्स्यत्।

---

जुगोप्थेति। ऊदित्त्वादिड्वा। 'अगोपी'दित्यत्र 'वदव्रजहलन्तस्याचः' इति हलन्तलक्षणा वृद्धिः प्राप्ता, तन्निरासाय सूत्रमवतारयति—**नेटीति**।

---

१ 'धातवस्त्र्यधिकं शत'मिति पाठान्तरम्। विन्दन्तेर्ग्रहणादियं १०३ संख्या।

**क्षि क्षये**। क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । 'एकाच' इति निषेधे प्राप्ते ॥ **कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि** ।७।२।१३। क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥ **अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः परस्य थल इण्न ॥

**उपदेशेऽत्वतः** ।७।२।६२। उपदेशेऽकारवतस्तासौ नित्यानिटः परस्यथल इण्न । **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ नित्यानिट ऋदन्तस्यैव थलो नेट् भारद्वाजस्य मतेन । तेनान्यस्य तु स्यादेव । अयमत्र सङ्ग्रहः—

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।**
**ऋदन्त ईदृङ् नित्यानिट्, क्राद्यन्यो लिटि सेड्भवेत् ॥१॥**

चिक्षयिथ । चिक्षेथ । चिक्षियथुः । चिक्षय । चिक्षाय-चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् ॥ **अकृत्सार्वधातुकयोर्दीर्घः** ।७।४।२५। अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु** ।७।२।१। इगन्ताङ्गस्य वृद्धिः परस्मैपदपरे सिचि । अक्षैषीत् । अक्षेष्यत् ॥ **तप सन्तापे**। तपति । तताप ।

---

एकाच इति । परिगणिताजन्ताऽतिरिक्तत्वेनानुदात्ततया 'एकाच'इतीण्निषेधे प्राप्ते इत्यर्थः । अत्र = क्रादिविषये । अजन्तो यथा—पा-या-वा-धातुः । अकारवान्—पचादिधातुः । स थलि वेट् । तेन पपिथ—पपाथ । पेचिथ—पपक्थेत्यादि रूपाणि भवन्ति । ईदृक्=तासि परतो नित्याऽनिट् । एवंविध ऋदन्तस्थलि नित्यमनिट् इत्यर्थः । क्राद्यन्यः = कृसृभृवृस्त्वाद्यतिरिक्तः ।

तेपतुः । तेपुः । तेपिथ-ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥

**निसस्तपतावनासेवने** ।८।३।१०२। षः स्यात् । आसेवनं= पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति ॥ **क्रमु पादविक्षेपे** ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** ।३।१।७०। एभ्यः श्यन्वा कर्तरि सार्वधातुके । पक्षे शप् ॥ **क्रमः परस्मैपदेषु** ।७।३।७६। क्रमेर्दीर्घः परस्मैपदे शिति । क्राम्यति । क्रामति । चक्राम ॥ **स्नुक्रमोरनात्मनेपदनिमित्ते** ।७।२।३६। अत्रैवेट् । क्रमिता । क्रमिष्यति । क्राम्यतु-क्रामतु । अक्राम्यत्-अक्रामत् । क्राम्येत्-क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् ॥

**चमु छमु जमु झमु अदने** । **ष्ठिवुक्लमुचमां शिति** ।७।३।७५। अचो दीर्घः । * **आङि चम इति वक्तव्यम्** । आचामति । आङि किम् ? चमति । विचमति । अचमीत् ॥

**स्खल संचलने** । स्खलति । चस्खाल ॥ **अतो ल्रान्तस्य** । ७।२।२। अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः परस्मैपदे सिचि । अस्खालीत् । अस्खलिष्यत् ॥ **त्सर छद्मगतौ** । अत्सारीत् ॥ **पा पाने** ॥ **पाघ्राध्मास्थाम्नादाण्-**

---

तेपतुरित्यत्र 'अत एक हलमध्ये' इत्येत्वाभ्यासलोपौ । **निस इति** । निसः सस्य षः स्यादपौनःपुन्ये इत्यर्थः । **स्नुक्रमोरिति** । आत्मनेपद-निमित्तहीनाभ्यामाभ्यां परस्य वलादेरार्धधातुकस्येडित्यर्थः ॥ स्नुक्रमोः सेट्त्वात्पुनरिट्विधानं नियमार्थमित्याशयः । **छद्मगतिः**—कौटिल्यम् । **न गुण इति** । उपधायामिकोऽभावेन पुगन्तेति न गुण इत्यर्थः ।

**पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौ-दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।७।३।७८।** पादीनां पिबादयः स्युरित्संज्ञकशादौ प्रत्यये । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥ **आत औ णलः ।७।१।३४।** आदन्ताद्धातोर्णल औकारादेशः । पपौ ॥ **आतो लोप इटि च ।६।४।६४।** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ-पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥ **एर्लिङि ।६।४।६७।** घुसंज्ञानां मास्थागापिबतिजहातिस्यतीनां चाऽऽत एत्वमार्धधातुके किति लिङि । पेयात् । 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणं' तेन 'पारक्षणे' इत्यस्य नैत्त्वम् । गतिस्थेति सिचो लुक् । अपात् । अपाताम् ॥ **आतः ।३।४।११०।** सिज्लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात् ।६।१।९६।** अपदान्तादवर्णादुसि पररूपमेकादेशः । अपुः । अपास्यत् । **ग्लै म्लै हर्षक्षये ।** ग्लायति ॥ **आदेच उपदेशेऽशिति ।६।१।४५।** उपदेशे एजन्तस्य धातोरात्वं न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥ **वाऽन्यस्य संयोगादेः ।६।४।६८।** घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा आर्धधातुके किति लिङि । ग्लेयात्-ग्लायात् ॥ **यमरमनमातां सक् च ।७।२।७३।** एषां सक् स्यादेभ्यः सिच इट् परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । एवं म्लायति ॥

---

हर्षक्षयः = धातुक्षयः । ( 'उदास होना' 'मलिन होना' ) । वाऽन्यस्येति । अन्यत्वं पूर्वसूत्रविषयापेक्षयेत्याह—घुमास्थादेरन्यस्येति ।

**धेट् पाने** । धयति । दधौ ॥ धाता । धास्यति । धयतु । अधयत् । धयेत् । **दाधा घ्वदाप्** ।१।१।२०। दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युदाप्दैपौ विना । धेयात् ॥ **विभाषा धेट्-श्व्योः** ।३।१।४९। आभ्यां च्लेश्चङ् वा ॥ **चङि** ।६।१।११। अनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य । अदधत् । अदधताम् । अदधन् । **विभाषा घ्राधेट्शाच्छासः** ।२।४।७८। एभ्यः सिचो लुग्वा परस्मैपदेषु । अधात् । अधाताम् । अधुः । पक्षे इट्सकौ । अधासीत् । अधासिष्टाम् । अधासिषुः ॥ **ग्लै न्यक्करणे** । ग्लायति ॥ **द्रै स्वप्ने** । द्रायति ॥ **ध्रै तृप्तौ** । ध्रायति ॥ **ध्यै चिन्तायाम्** । ध्यायति । दध्यौ । **रै शब्दे** । रायति ॥ **स्त्यै ष्ट्यै शब्दसङ्घातयोः** । स्त्यायति । षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्, षोपदेशफलं तु 'तिष्ट्यासती'त्यादौ भविष्यति ॥ **खै खदने** । खायति ॥ **क्षै जै षै क्षये** । क्षायति । जायति । सायति । 'घुमास्थे'त्यत्र 'विभाषा घ्राधेट्' इत्यत्र च स्यतेरेव ग्रहणं न त्वस्य, तेन एत्वसिज्लुकौ न । सायात् । असासीत् । **कै गै शब्दे** ॥ **शै श्रै पाके** ॥

---

चङीति । चङि परेऽनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्येत्यर्थः ।

**न्यक्करणं** = तिरस्कारः । **सङ्घातः**—ग्रन्थः, घनीभावो वा ( जमना ) । **षोपदेशस्य** = ष्ट्यैधातोः । **तुल्यं** = स्त्यैधातुना तुल्यमेव रूपम् । षोपदेशस्य आदेशरूपसकारेणादेशप्रत्यययोरिति षत्वे तिष्ट्यासतीतिरूपं, सोपदेशस्य तु तिस्त्यासतीति भेद इत्याशयः । **खदनं** = भक्षणम् । **स्यतेः** = दैवादिकस्य षोऽन्तकर्मणीत्यस्य । न तु षैधातोः ।

**पै ओवै शोषणे** । पायात् । अपासीत् । घुमास्थेतीत्वं, तदपवाद एर्लिङीत्येत्वं, गातिस्थेति सिचो लुक् च न, 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'मिति पारूपस्य लाक्षणिकत्वात् ॥ **ष्टै वेष्टने** । स्तायति ॥ **स्नै वेष्टने** । शोभायां चेत्येके । स्नायति ॥ **दैप् शोधने** । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् ॥ **घ्रा गन्धोपादाने** । जिघ्रति । घ्रायात्-घ्रेयात् । अघ्रात्-अघ्रासीत् । अघ्रास्यत् । **ध्मा शब्दाग्निसंयोगयोः** । धमति ॥ **ष्ठा गतिनिवृत्तौ** । तिष्ठति । स्थादिष्विति षत्वम् । अधितष्ठौ । उपसर्गादिति षत्वम् । अधिष्ठाता । स्थेयात् । सत्वे कृते प्रकृतिस्तवर्गः स्यात् । उक्तञ्च—

**नकारजावनुस्वारपञ्चमौ झलि धातुषु ।**
**सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥**

गतिस्थेति सिचो लुक् । अस्थात् । **म्ना अभ्यासे** । मनति ॥ **दाण् दाने** । प्रणियच्छति ॥ **ह्वृ कौटिल्ये** । ह्वरति ॥

**ऋतश्च संयोगादेर्गुणः ।७।४।१०।** ऋदन्तस्य संयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः ।

---

एत्वम्—एर्लिङीत्यनेन, विभाषा घ्राधेडिति सिचो लुक् च नेत्यर्थः । इतिः । इत्यनया नेत्यर्थः । लाक्षणिकत्वात् = 'आदेच उपदेशे' इति लक्षणवशसम्पन्नत्वात् । अघ्रादिति । 'विभाषा घ्राधे'डिति वा सिचो लुक् । नकारजाविति । धातुषु—झलि परतोऽनुस्वारपरसवर्णौ नकारस्थानिकौ ।

धातुषु-चे = चकारे परतः-शकारः सकारस्थानिकः । ( धातुषु- ) रेफषकारात्परष्टवर्गश्च तवर्गस्थानिक इत्यर्थः ।

जहर्थ । जह्वरथुः । जह्वर । जह्वार । जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥ **ऋद्धनोः स्ये** ।७।२।७०। ऋतो हन्तेश्च स्यस्य इट् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥ **गुणोर्तिसंयोगाद्योः** ।७।४।२९। अतः संयोगादेर्ऋदन्तस्य च गुणो यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥

**स्वृ शब्दोपतापयोः** । स्वरति । स्वरतीति वेट् । सस्वरिथ-सस्वर्थ । वमयोस्तु स्वरत्यादिविकल्पं बाधित्वा पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्याच्छ्र्युकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सस्वरिव । सस्वरिम । परत्वादृद्धनोरिति नित्यमिट् । स्वरिष्यति ॥ अस्वारीत् । अस्वार्षीत् । **स्मृ चिन्तायाम्** । स्मरति ॥ **द्वृ संवरणे** । द्वरति ॥ **सृ गतौ** । क्रादित्वान्नेट् । ससर्थ । सस्रुव । सस्रुम ॥ **रिङ् शयग्लिङ्क्षु** ।७।४।२८। शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधिसामर्थ्यान्न दीर्घः । स्रियात् । असार्षीत् । असरिष्यत् । शीघ्रगतौ तु पाघ्रेति शिति धौरादेशः । धावति ॥ **गृ घृ सेचने** । गरति । घरति । **ध्वृ हूर्च्छने** । ध्वरति ॥ **दृशिर् प्रेक्षणे** । पश्यति । ददर्श ॥ ***ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्व-**

उपतापः = रोगः । सन्तापश्च । वक्ष्यमाणः = 'शल इगुपधा'दिति विहितः । 'द्वृ-संवरणे' इति पाठः । 'द्वृसंवरणे' इति त्वयुक्तः पाठः । संवरणम् = आच्छादनम् । हूर्च्छनं = कुटिलीभावः । धूर्त्तता । वृकशब्दो वा ।

१ अस्यैव धातोर्द्वारमिति रूपं भवति । अत्र—'वृ संवरणे । वरती'त्यपि-क्वचित्पाठः । 'ह्वृ' इति पाठस्तु न शोभनः ।

**विप्रतिषेधेन**। ददृशतुः। ददृशुः। **विभाषा सृजिदृशोः** ।७।२।६५। आभ्यां थल इड् वा। **सृजिदृशोर्झल्यमकिति** ।६।१।५८। अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ-ददर्शिथ। **षढोः कः सि** ।८।२।४१। षस्य ढस्य च कः स्यात्सकारे परे। द्रक्ष्यति। दृश्यात्। इरित्त्वादङ् वा। **ऋदृशोऽङि गुणः** ।७।४।१६। अदर्शत्। अङभावे—**न दृशः** ।३।१।४७। च्लेर्वक्ष्यमाणः क्सो न। अद्राक्षीत्। अद्रक्ष्यत्। **श्रु श्रवणे**। **श्रुवः शृ च** ।३।१।७४। श्रुवः 'शृ' आदेशः श्नुप्रत्ययश्च कर्तरि सार्वधातुके। शृणोति॥ **सार्वधातुकमपित्** ।१।२।४। अपित्सार्वधातुकं ङिद्वत्स्यात्। शृणुतः। **हुश्नुवोः सार्वधातुके** ।६।४।८७। जुहोतेः श्नुप्रत्ययान्तस्याऽनेकाचोऽङ्गस्याऽसंयोगपूर्वस्योवर्णस्य यण्स्यादचि सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि। **लोपश्चाऽस्याऽन्यतरस्यां म्वोः** ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः। शृणुवः। शृण्मः। शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव। शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु-शृणुतात्। शृणुताम्। शृण्वन्तु॥ **उतश्च प्रत्ययादसंयोगपूर्वात्** ।६।४।१०६। असंयोगपूर्वात्प्रत्ययोतो हेर्लुक्। शृणु-शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व-अशृणुव। अशृण्म-अशृणुम।

शृणुयात् । शृणुयाताम् ॥ **उस्यपदान्तात् ।६।१।९६।** अपदान्ता-दवर्णादुसि पररूपमेकादेशः स्यात् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् । **गम्लृ सृप्लृ गतौ । इषुगमियमां छः ।७।३।७७।** शिति । गच्छति । जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि ।६।४।९८।** एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि । जग्मतुः । जग्मतुः । जग्मुः । जगमिथ-जगन्थ । जग्मथुः । जग्म । जगाम-जगम । जग्मिव । जग्मिम । गन्ता ॥ **गमेरिट् परस्मैपदेषु ।७।२।५८।** गमेः सादेरार्ध-धातुकस्येट् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गम्यात् ॥ **पुषादिद्युताद्य्लृदितः परस्मैपदेषु ।३।१।५५।** श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् । सर्पति ॥ **अनुदात्तस्य चर्दुपधस्यान्य-तरस्याम् ।६।१।५९।** उपदेशेऽनुदात्तो य ऋदुपधस्तस्याऽम्वा झलादावकिति । स्रप्ता । सर्प्ता । असृपत् ॥ **ञिक्ष्विदा अव्यक्ते शब्दे ।** क्ष्वेदति ॥ **यभ मैथुने ।** यभति । वेट् । येभिथ ॥ **झषस्तथोर्धोऽधः ।८।२।४०।** झषः परयोस्तथयोर्धः स्यान्न तु

---

**श्रूयादिति ।** अकृत्सार्वेति दीर्घः । **जगमिथेति ।** भारद्वाजमते इट् । अन्येषान्तु अचस्तास्वदितीण्निषेध इति विवेकः । इडभावे उदाहरति— **जगन्थेति । जग्मिवेति ।** क्रादिनियमान्नित्यमिट्, 'क्राद्यन्यो लिटि से'डि-त्युक्तेः । **वेडिति ।** अकारवत्त्वेन थलि वेडित्यर्थः । इड्विकल्पश्च मतभेद-निबन्धन इत्यवधेयम् । येमिथेत्यत्र थलि च सेटीत्येत्त्वाभ्यासलोपौ ।

दधातेः । ययन्ध । यन्धा ॥ **णम प्रह्वत्वे शब्दे च ।** नेमिथ । ननन्थ । नन्ता । नंस्यति । अनंसीत् । अनंसिष्टाम् ॥ **त्यज हानौ ।** त्यजति । तत्याज । तत्यजिथ-तत्यक्थ । त्यक्ता । अत्याक्षीत् । अत्याक्ताम् । अत्यक्ष्यत् ।

**अक्षू व्याप्तौ ॥ अक्षोऽन्यतरस्याम् ।३।१।७५।** श्नुर्वा स्यात्कर्तरि सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष । आनक्षतुः । आनक्षुः । आनक्षिथ-आनष्ठ । अक्षिता-अष्टा । अक्षिष्यति । स्कोरिति कलोपः ॥ **षढोः कः सि ।८।२।४१।** अक्ष्यति । अक्ष्णोतु । अक्ष्णुहि । अक्ष्णवानि । आक्ष्णोत् । आक्ष्णवम् । अक्ष्णुयात् । अक्ष्णुयाताम् । अक्ष्णुयुः । अक्ष्यात् । आक्षीत् । आक्षिष्टाम् । आक्षिषुः ॥ **तक्षू त्वक्षू तनूकरणे ॥ तनूकरणे तक्षः ।३।१।७६।** श्नुर्वा शब्विषये । तक्ष्णोति तक्षति वा काष्ठम् । ततक्ष । ततक्षिथ-ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् ? वाग्भिः सन्तक्षति । भर्त्सयतीत्यर्थः ॥ **रक्ष पालने ।** रक्षति ॥ **णिक्ष चुम्बने ।** प्रणिक्षति ॥ **वक्ष रोषे ।** संघाते इत्येके । वक्षति । **मृक्ष संघाते । मक्ष** इत्येके ॥ **तक्ष त्वचने ।** **त्वचनं** – संवरणम्, त्वचो ग्रहणं च ॥ **पक्ष** परिग्रहे इत्येके ॥

---

प्रह्वत्वे = करशिरःसंयोगानुकूलव्यापारे। अनंसीदित्यादौ 'यमरमनमाता'-मितीट्सकौ ।

हानिः = त्यागः । ( छोड़ना ) । आनक्षिथेत्यादौ स्वरतिसूतीति वेट् । त्वचो ग्रहणं = सन्तक्षणम् ( छीलना ) ।

**सूर्क्ष आदरे** । सूर्क्षति । सुसूर्क्ष ॥ **काक्षि वाक्षि माक्षि काङ्क्षायाम्** ॥ **द्राक्षि ध्राक्षि ध्वाक्षि घोरवाशिते च** ॥ **चूष पाने** ॥ **तूष तुष्टौ** । **पूष वृद्धौ** ॥ **मूष स्तेये** ॥ **लूष रूष भूषायाम्** ॥ **शूष प्रसवे** । **यूष हिंसायाम्** ॥ **जूष च** ॥ **भूष अलङ्कारे** ॥

**जि जये** । जयति ॥ **सँल्लिटोर्जेः** ।७।३।५७। सँल्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम् । जिगाय । जिग्यतुः । जिगयिथ । जिगेथ **जीव प्राणधारणे** । जीवति ॥ **पीव मीव तीव णीव स्थौल्ये** । पीवति । पिपीव ॥ **मुर्वी बन्धने** ॥ **उपधायां च** ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात् । मूर्वति ॥ **पुर्व पर्व मर्व पूरणे** । पूर्वति । पर्वति । मर्वति ॥ **चर्व अदने** । चर्वति ॥ **कष खष शिष जष झष शष चष मष रुष रिष हिंसार्थाः** । शेषति । शिशेष । शेष्टा ॥ **शल इगुपधादनिटः क्सः** ।३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः । अशिक्षत् ॥ **तीषसहलुभरुषरिषः** ।७।२।४९। इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा । रोषिता । रोष्टा ॥ **भष भर्त्सने** । इह भर्त्सनं—श्वरवः ॥ **पुष पुष्टौ** । पोषिता । अनुदात्तेषु पुष्येति श्यना निर्देशादयमुदात्तः । अङ्विधौ दैवादिकस्य ग्रहणान्नाऽङ् । अपोषीत् ॥ **श्रिषु श्लिषु प्रुषु प्लुषु**

---

घोरवाशिते = काकादिशब्दे । **जिगेथेति** । अजन्तत्वात्थलि वेट् मतभेदेन । अदनं = प्रकृते चर्वणम् ।

**तीषसहेति** । 'ती'ति सप्तम्यन्तम् । यस्मिन्विधिरिति परिभाषया च तादेरित्यर्थः । आर्धधातुकस्येत्यनुवर्तते । श्वरवः = कुक्कुरशब्दः । (भूंकना) । उदात्त इति । तेनायं सेडित्यर्थः । अङ्विधौ = 'पुषादिद्युताद्ली'ति सूत्रे ।

दाहे। श्रेषति। श्लेषति। प्रोषति। प्लोषति ॥ इति **परस्मैपदिनः** ॥

**एध वृद्धौ** ॥ **टित आत्मनेपदानां टेरे** ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते। **आतो ङितः** ।७।२।८१। अतः परस्य ङितामात इय् स्यात् । एधेते । एधन्ते ॥ **थासः से** ।३।४।८०। टितो लस्य । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे ॥ **इजादेश्च गुरुमतोऽनृच्छः** ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि ॥ **आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य** ।१।३।६३। आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात् ॥ **लिटस्तझयोरेशिरेच्** ।३।४।८१। एकारोच्चारणं ज्ञापकं–'तङादेशानां टेरेत्वं ने'ति । तेन डारौरसां न । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधांचक्राथे ॥ **इणः षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधांचकृवहे । एधांचकृमहे । एधांबभूव । एधामास । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न, अन्यथा हि 'कृञ्चानुप्रयुज्यते' इति, कृभ्वितिं वा ब्रूयात् । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥ **धि च** ।८।२।२५। धादौ प्रत्यये सलोपः । एधिताध्वे ॥ **ह एति** ।७।४।५२। तासस्त्योः सस्य हः स्यात् । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते ।

---

**टित इति** । लस्येत्यधिक्रियते । टित इति तद्विशेषणम् । **ज्ञापकमिति** । इशि इरिचि च विधातव्ये एकारविधानं प्रकृतार्थे ज्ञापकम्, एवञ्च तङादेशानामेशिरेचादीनां टेरेत्त्वाऽप्रसक्त्या एकारोच्चारणं चरितार्थमित्याशयः ।

एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥

**आमेतः** ।३।४।९०। लोट एत आम् । एधताम् । एधेताम् । एधन्ताम् ॥ **सवाभ्यां वामौ** ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्वाऽमौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥

**एत ऐ** ।३।४।९३। लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै । **आटश्च** । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥

**लिङः सीयुट्** ।३।४।१०२। 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपः ॥ **लोपो व्योर्वलि** ।६।१।६६। एधेत । एधेयाताम् ॥ **झस्य रन्** ।३।४।१०५। लिङो झस्य रन् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ॥ **इटोऽत्** ।३।४।१०६। लिङादेशस्येटो ऽत् स्यात् । एधेय । एधेवहि । एधेमहि ॥ **सुट् तिथोः** ।३।४।१०७। लिङस्तथोः सुट् । यलोपः । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ।

ऐधिष्ट । ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः** ।७।१।५।

---

एत इति । एतः—षष्ठ्यन्तम्, ऐ—इति लुप्तप्रथमान्तम् । लोटो लङ्वदित्यतो लोट इति, आडुत्तमस्येत्यत उत्तमस्येति चानुवर्त्तते । आटश्चेति । 'अनेन वृद्धि'रिति शेषः । लिङः सीयुडिति । परस्मैपदानां लिङादेशानां यासुडागमविधानादात्मनेपदमात्रविषयमिदं सूत्रम् । ऐधिढ्वमिति । 'इणः षीध्व'मिति ढत्वम् । इटः सिज्भक्तत्वेन सिजन्ताङ्गान्तर्भूततया सिचो लोपे 'ऐधि' इत्यस्येणन्ताङ्गत्वात् ।

अनकारात्परस्यात्मनेपदेषु झस्याऽत् स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ **कमु कान्तौ** ॥ **कमेर्णिङ्** ।३।१।३०। स्वार्थे । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु** ।६।४।५५। एषु णेरय् । कामयाञ्चक्रे । 'आयादय' इति वा णिङ् । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कमिता । कामयिष्यते । कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट । कमिषीष्ट ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** ।३।१।४८। ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् कर्त्रर्थे लुङि । अकाम इ अ त इति स्थिते ॥ **णेरनिटि** ।६।४।५१। अनिडादावार्धधातुके परे णेर्लोपः ॥ **णौ चङ्युपधाया ह्रस्वः** ।७।४।१। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे** ।७।४।९३। चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥ **सन्यतः** ।७।४।७९।

---

कान्तिः = इच्छा । सन्वदिति । चङ् परो यस्मादिति बहुव्रीहिः । णिश्चान्यपदार्थः । अङ्गस्येत्यनुवर्त्तते, चङ्परे इति अङ्गस्येति च द्वयमावर्त्तते । तेन—अङ्गसञ्ज्ञानिमित्तं यच्चङ्परं, ( णिरिति यावत् ) तत्परं यल्लघु, तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसतीत्यर्थः । फलितमाह—चङ्परे इति ।

अभ्यासस्याऽत इत्सनि ॥ **दीर्घो लघोः** ।७।४।९४। लघोरभ्यासस्य दीर्घः सन्वद्भावविषये । अचीकमत । णिङभावपक्षे—***कमेश्च्लेश्चङ् वाच्यः** । अचकमत । अकामयिष्यत । अकमिष्यत ॥

**भाम क्रोधे** । भामते । बभामे ॥ **क्षमूष् सहने** । क्षमते । चक्षमिषे । चक्षंसे । चक्षमिवहे । चक्षमिमहे ॥ **म्वोश्च** ।८।२।६५। मान्तस्य धातोर्मस्य नः स्यन्म्वोः परयोः । चक्षण्वहे । चक्षण्महे ॥ **गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च** । गाधते ॥ **बाधृ लोडने** । **लोडनं**—प्रतिघातः । बाधते ॥ **नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु** । ***आशिषि नाथ इति वाच्यम्** । अस्याशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र—नाथति । नाधते ॥

**दध धारणे** । दधते ॥ **स्कुदि आप्रवणे** । **आप्रवणम्**—उत्प्लवनमुद्धरणं च । स्कुन्दते । चुस्कुन्दते ॥ **श्विदि श्वैत्ये** । श्विन्दते । शिश्विन्दे ॥ **वदि अभिवादनस्तुत्योः** । वन्दते । ववन्दे ॥

**भदि कल्याणे सुखे च** । भन्दते । बभन्दे ॥ **मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु** । मन्दते ॥ **स्पदि किंचिच्चलने** । स्पन्दते । पस्पन्दे । **मुद हर्षे** । मोदते । मुमुदे ॥ **उर्द माने क्रीडायां च** । ऊर्दते । ऊर्दाचक्रे ॥ **कुर्द खुर्द गुर्द गुद क्रीडायामेव** । कूर्दते । खूर्दते । गूर्दते । गोदते । जुगुदे ॥ **षूद क्षरणे** । सूदते । सुषूदे ॥ **ह्राद अव्यक्ते शब्दे** । ह्रादते । जह्रादे । **ह्लादी सुखे च** । चादव्यक्ते शब्दे । ह्लादते ॥ **स्वाद आस्वादने** ।

---

'चक्षमिषे' इत्यत्र उदित्त्वाद्वेट् । **माने** = परिमाणे उन्माने, निमाने च ।

स्वादते । **पर्द कुत्सिते शब्दे** । गुदरवे इत्यर्थः । पर्दते । पपर्दे ॥ **यती प्रयत्ने** । यतते ॥ **श्रथि शैथिल्ये** । श्रन्थते ॥ **ग्रथि कौटिल्ये** । ग्रन्थते ॥ **कत्थ श्लाघायाम्** । कत्थते । चकत्थे ॥ **श्लोकृ संघाते** । संघातो ग्रन्थः । स चेह ग्रथ्यमानस्य व्यापारो ग्रन्थितुर्वा । आद्येऽकर्मको द्वितीये सकर्मकः । श्लोकते । शुश्लोके ॥ **शकि शङ्कायाम्** । शङ्कते । शशङ्के ॥ **अकि लक्षणे** । अङ्कते । आनङ्के । **ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ तिकृ तीकृ रघि लघि गत्यर्थाः** । कङ्कते । वङ्कते । श्वङ्कते । त्रङ्कते । ढौकते । डुढौके । त्रौकते । तुत्रौके । ***सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः** । ष्वष्कते । षष्वष्के । वस्कते । ववस्के । मस्कते । ममस्के । टेकते । टीकते । तेकते । तीकते । रङ्घते । लङ्घते ।

**श्लाघृ कत्थने** । श्लाघते ॥ **पचि व्यक्तीकरणे** । पञ्चते । पपञ्चे ॥ **ऋज गतिस्थानार्जनोपार्जनेषु** । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । आनृजे । **ऋजि भृजी भर्जने** । ऋञ्जांचक्रे । भर्जते ॥ **एजृ भ्रेजृ भ्राजृ दीप्तौ** । एजते । एजांचक्रे । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे ॥

**वेष्ट वेष्टने** । वेष्टते । विवेष्टे ॥ **चेष्ट चेष्टायाम्** । चेष्टते । चिचेष्टे ॥ **स्फुट विकसने** । स्फोटते । पुस्फुटे ॥ **टुवेपृ**

---

श्रन्थते = ग्रन्थिं शिथिलयति । कत्थनम् = श्लाघा, अतिप्रशंसा । ( 'डींग हांकना' अपनी बड़ाई करना ) । **ग्रथ्यमानस्य** = काव्यादेः । **ग्रन्थितुः** = कवेः । **सत्वनिषेधः** = धात्वादेः षः स इति प्राप्तस्य षत्वस्य निषेधः । कत्थनं = प्रशंसा ।

कम्पने । वेपते ॥ कपि चलने । कम्पते ॥ भिक्ष भिक्षायामलाभे लाभे च । भिक्षते । बिभिक्षे ॥ दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे ॥ भाष व्यक्तायां वाचि । भाषते । बभाषे ॥ वर्ष स्नेहने । वर्षते । ववर्षे ॥

ईह चेष्टायाम् । ईहते । ईहांचक्रे ॥ गर्ह गल्ह कुत्सायाम् । गर्हते । गल्हते ॥ काशृ दीप्तौ । काशते ॥ ऊह वितर्के । ऊहते । ऊहांचक्रे । कथम्—'अनुक्तमप्यूहति पण्डितो जनः' इति ? । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । अनुदात्तेतश्चक्षिङो ङित्करणाज्ज्ञापकात् । तेन 'उदयति यदि भानुः' 'स्फायन्निर्मोकसन्धिः' इत्यादिसिद्धमित्याहुः ॥ अय गतौ । अयते ॥ उपसर्गस्यायतौ ।८।२।१९। अयतावुपसर्गरेफस्य लत्वम् । प्लायते । पलायते ॥ दयायासश्च ।३।१।३७। एभ्य आम्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ॥ विभाषेटः ।८।३।७९। इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । आयिष्यत ॥ द्युत दीप्तौ । द्योतते ॥ द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७। अभ्यासस्य । दिद्युते । द्योतिता । द्योतिष्यते । द्योतताम् । अद्योतत । द्योतेत । द्योतिषीष्ट ॥ द्युद्भ्यो लुङि ।१।३।९१। द्युतादिभ्यः परस्मैपदं

मौण्ड्यं = मुण्डनम् । इज्या = यजनम् । ङित्करणादिति । अनुदात्तेत्त्वेनैवात्मनेपदे सिद्धे ङित्करणं व्यर्थं सदुक्तज्ञापकमित्याशयः ।

वा लुङि । पुषादीत्यङ् । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत । एवं—**श्विता वर्णे ॥ ञिमिदा स्नेहने ॥ ञिष्विदा स्नेहन-मोचनयोः । मोहनयोरित्येके ॥ रुच दीप्तावभिप्रीतौ च ॥ घुट परिवर्तने ॥ शुभ दीप्तौ ॥ क्षुभ सञ्चलने ॥ णभ तुभ हिंसायाम् ॥ स्रंसु ध्वंसु भ्रंसु अवस्रंसने ॥ ध्वंसु गतौ च ॥ श्रम्भु विश्वासे ॥ वृतु वर्तने** । वर्तते । ***ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन** । ववृते । वर्तिता ॥ **वृद्भ्यः स्यसनोः ।१।३।९२।** वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्ये सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः ।७।२।५९।** वृतु-वृधु-शृधु-स्यन्दूभ्यः सादेरार्धधातुकस्येण्न तङानयोरभावे । वर्त्स्यति । वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवृतत् । अवर्तिष्ट । अवर्त्स्यत् । अवर्तिष्यत । एवं—**वृधु वृद्धौ । शृधु शब्द-कुत्सायाम्** ॥

**स्यन्दू प्रस्रवणे** । स्यन्दते । सस्यन्दे । सस्यन्दिषे । सस्यन्त्से । सस्यन्दिध्वे । सस्यन्ध्वे । स्यन्दिता । स्यन्ता । 'वृद्भ्यः स्यसनो'रिति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः । स्यन्त्स्यति । स्यन्दिष्यते । स्यन्त्स्यते । स्यन्देत । स्यन्दिषीष्ट । स्यन्त्सीष्ट ।

---

अद्युतदिति । अङो ङित्वाल्लघूपधगुणो न । **परिवर्त्तनं** = घोटनम्, आलोडनम् । **दीप्तिः** = शोभा । **शब्दकुत्सायाम्** = अपानशब्दे । गुदरवे इति यावत् । **'सस्यन्त्से'** इत्यत्र उदित्त्वादिट् । **नलोपः** = अनिदितामिति नलोपः ।

द्युद्भ्यो लुङीति परस्मैपदपक्षेऽङ् । नलोपः । अस्यदत् । अस्यन्दिष्ट । अस्यन्त । अस्यन्त्सातास् । अस्यन्त्सत । अस्यन्त्थाः । अस्यन्द्ध्वम् । अस्यन्त्सि । अस्यन्त्स्यत् । अस्यन्दिष्यत । अस्यन्त्स्यत ॥ **अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु** ।८।३।७२। एभ्यः परस्याऽप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा । अनुष्यन्दते अनुस्यन्दते वा जलम् । अप्राणिषु किम् ? अनुस्यन्दते हस्ती ॥

**क्लृपू सामर्थ्ये** ॥ **कृपो रो लः** ।८।२।१८। कृपः उः र ल इतिच्छेदः । कृपे रेफस्य लः, कृपेर्ऋकारस्यावयवो यो रेफसदृशस्तस्य च लकारसदृशः स्यात् । कल्पते । चक्लृपिषे । चक्लृप्से— इत्यादि स्यन्दिवत् ॥ **लुटि च क्लृपः** ।१।३।९३। लुटि स्यसनोश्च क्लृपेः परस्मैपदं वा ॥ **तासि च क्लृपः** ।७।२।६०। क्लृपेः परस्य तासेः सादेरार्धधातुकस्येण्न तङानयोरभावे । कल्प्तासि । कल्पितासे । कल्प्तासे । कल्प्स्यति । कल्पिष्यते । कल्प्स्यते । कल्पिषीष्ट ॥ **लिङ्सिचावात्मनेपदेषु** ।१।२।११। इक्समीपाद्धलः परौ झलादी लिङ्-आत्मनेपदपरः सिचेत्येतौ कितौ स्तः । क्लृप्सीष्ट । अक्लृपत् । अकल्पिष्ट । अक्लृप्त । अकल्प्स्यत् । अकल्पिष्यत । अकल्प्स्यत । **इति द्युतादयः** ॥

**दद दाने** । ददते । दददे । दददाते । दददिरे । ददिता ।

---

अप्राणिष्विति । पर्युदासोऽयं, तेन प्राणिभिन्ने इत्यर्थलाभः, तेन 'मत्स्योदके अनुष्यन्देते' इत्यत्रापि पाक्षिकं षत्वं भवत्येव, प्राणिभिन्नस्योदकस्य कर्त्तुः सत्त्वात् । 'प्राणिषु ने'त्युच्यमाने तु इह षत्वं न स्यात्, प्राणिनो मत्स्यस्य कर्त्तुर्वर्त्तमानत्वादित्यवधेयम् । अनुस्यन्दते हस्ती । प्रचलतीत्यर्थः । छेद इति । सन्धिरार्षः । कृपः षष्ठ्यन्तम्, उः—षष्ठ्यन्तं, रः—षष्ठ्यन्तं, लः—प्रथमान्तम् । कल्प्तासीत्यत्र ऊदित्त्वाद्वेट्कतया इडभावः । दददे इति । 'न शस-

ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ **त्रपूष् लज्जायाम्** । त्रपते ॥ **तृफलभजत्रपश्च** ।६।४।१२२। एषामत एत्वमभ्यासलोपश्च किति लिटि सेटि थलि च । त्रेपे । त्रपिता । त्रप्ता । त्रपिष्यते । त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट । त्रप्सीष्ट । अत्रपिष्ट । अत्रप्त । अत्रपिष्यत । अत्रप्स्यत ॥ **घट चेष्टायाम्** । घटते । जघटे । **व्यथ भयसञ्चलनयोः** ॥ **व्यथो लिटि** ।७।४।६८। व्यथेरभ्यासस्य संप्रसारणं स्याल्लिटि । हलादिः शेषापवादः । विव्यथे ॥

**प्रथ प्रख्याने** । प्रथते । पप्रथे ॥ **प्रस विस्तारे** ॥ प्रसते । **म्रदं मर्दने** । म्रदते ॥ **स्खद स्खदने** । स्खदनं—विद्रावणम् । स्खदते ॥ **क्रप कृपायां गतौ च** । क्रपते ॥ **ञित्वरा संभ्रमे** । त्वरते ॥ **टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ** । भ्राजते ॥ **फणां च सप्तानाम्** ।६।४।१२५। फण-राजृ-भ्राजृ-भ्राशृ-भ्लाशृ-स्यमु-स्वन-एषां वा एत्वाभ्यासलोपौ स्तः किति लिटि सेटि थलि च । भ्रेजे । बभ्राजे । वा भ्राशेति श्यन्वा । भ्राश्यते । भ्राशते । भ्रेशे । बभ्लाशे । भ्लाश्यते । भ्लेशे ॥ **रमु क्रीडायाम्** । रमते । रेमे । रन्ता ॥ **जभि जृभी गात्रविनामे** ॥ **रधिजभोरचि** ।७।१।६१। नुम् । जम्भते । जजम्भे । जृम्भते । जजृम्भे ॥ **इत्यात्मनेपदिप्रक्रिया** ॥

**श्रिञ् सेवायाम्** । श्रयति । श्रयते । शिश्राय । शिश्रिये ।

---

ददे'ति निषेधादेत्त्वाभ्यासलोपौ न । ऊदित्त्वाद्वेट्, तदाह—**त्रपिता-त्रप्तेति** । **अत्रप्तेति** । 'झलो झली'ति सिचः सस्य लोपः । **प्रख्यानं** = प्रसिद्धिः । **विस्तारे** = प्रसारे । ( 'पसारना' 'फैलाना' ) । **विद्रावणं** = निस्सारणं, ( खदेड़ना ) । **गात्रविनामे** = जृम्भणे, ( जम्भाई लेना ) । **शिश्रायेति** ।

वयते ॥ **वेञो वयिः** ।२।४।४१। वा स्यात् लिटि । इकार उच्चारणार्थः । उवाय ॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** ।६।१।१६। चात्किति संप्रसारणम् । इति यस्य प्राप्ते ॥ **लिटि वयो यः** ।६।१।३८। वयो यस्य संप्रसारणं न स्याल्लिटि । ऊयतुः । ऊयुः । **वश्चास्यान्यतरस्यां किति** ।६।१।३९। वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् । उवयिथ । स्थानिवत्त्वेन ञित्वात्तङ् । ऊये । ऊवे । वयादेशाभावे ॥ **वेञः** ६।१।४०। संप्रसारणं लिटि । ववौ । ववतुः । ववुः । वविथ । ववाथ । ववे । ववाते । वविरे । वाता । ऊयात् । वासीष्ट । अवासीत् । अवासिष्टाम् । अवासिषुः ॥ **व्येञ् संवरणे** । व्ययति । व्ययते ॥ **न व्यो लिटि** ।६।१।४६। आत्वम् । परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम्, उभयेषां ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां ग्रह्यादीनां चानुवृत्त्यैव सिद्धे किं तेन ? । विव्याय । विव्यतुः । विव्युः ॥ **इडत्त्यर्तिव्ययतीनाम्** ।७।२।६६। अद्-ऋ-व्येञ्-एभ्यस्थलो नित्यमिट् । विव्ययिथ । विव्यथुः । विव्य । विव्याय । विव्यय । विव्यियव । विव्यियम । विव्ये । व्याता । व्यास्यति । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त ।

---

नेर्गदेति णत्वम् । **यस्य प्राप्ते** = यस्य इकारे सम्प्रसारणे प्राप्ते । **तासावभावात्** = वयादेशस्य लिट्येव सत्त्वेन लुटि तासौ वयादेशाभावादुपदेशेऽत्वत इत्यस्य ऋतो भारद्वाजस्येत्यस्य चाऽप्रवृत्त्या, **थलि नित्यमिट्** = क्रादि-

**ह्वेञ् स्पर्धायां शब्दे च** । ह्वयति । ह्वयते ॥ **अभ्यस्तस्य च ।६।१।३३।** अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणम् । जुहाव । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते ॥ **लिपिसिचिह्वश्च ।३।१।५३।** च्लेरङ् ॥ **आत्मनेपदेष्वन्यतरस्याम् ।३।१।५४।** अह्वत् । अह्वताम् । अह्वन् । अह्वत । अह्वास्त ॥ **राजृ दीप्तौ** । राजति । राजते । रराज । रेजतुः । रराजतुः । रेजुः । रराजुः । रेजे । रराजे ॥ **हिक्क अव्यक्ते शब्दे** । हिक्कति । हिक्कते ॥ **अञ्चु गतौ पूजने च** । अञ्चति । अञ्चते । **अच** इत्येके । अचीत्यपरे ॥ **टुयाचृ याच्ञायाम्** । याचति । याचते ॥ **बुधिर् बोधने** । बोधति । बोधते । अबुधत् । अबोधीत् । अबोधिष्ट ॥

**खनु अवदारणे** । खनति । खनते । चखान । चख्नतुः । चख्नुः । चख्ने । खायात् । खन्यात् ॥ **चीवृ आदानसंवरणयोः** । चीवति । चीवते ॥ **चायृ पूजानिशामनयोः** । चायति । चायते ॥ **व्यय गतौ** । व्ययति । व्ययते ॥ विव्याय । विव्यये ॥ **दाशृ दाने** । दाशति । दाशते ॥ **भेषृ भये** । गतावित्येके । भेषति । भेषते ॥ **अस गतिदीप्त्यादानेषु** । असति । असते । आस । आसे । अयं षान्तोऽपि ॥ **स्पश**

---

नियमान्नित्यमिडित्यर्थः । **रेजतुरित्यत्र** फणादित्वात्फणां च सप्तानामिति वा एत्वाभ्यासलोपौ ।

**अव्यक्ते शब्दे** = हिक्कायाम् । **अबुधदिति** । इरित्त्वादङ् वा । चख्नतुरित्यत्र गमहनेत्युपधालोपः । खायादित्यत्र ये विभाषेति वैकल्पिकमात्वम् । **गतिरत्र**–व्ययः । **आदानं** = ग्रहणम् ।

ग्राधनस्पर्शनयोः । स्पर्शनं—ग्रन्थनम् । स्पशति । स्पशते ॥ लष कान्तौ । लष्यति । लषति । लषते । लष्यते ॥ चष भक्षणे । चषति । चषते ॥ झष आदानसंवरणयोः । झषति । झषते ॥ दासृ दाने । दासति । दासते ॥ धावु गतिशुद्ध्योः । धावति । धावते । इति भ्वादिप्रकरणम् ।

## अथाऽदादिप्रकरणम् ॥ २ ॥

**ऋतेरीयङ्** ।३।१।२९। स्वार्थे । ऋतिः सौत्रः । जुगुप्सायामिति बहवः । कृपायां चेत्येके । ऋतीयते । ऋतीयांचक्रे । 'आयादय' इति ईयङभावपक्षे 'शेषात्कर्तरी'ति परस्मैपदम् । आनर्त । अर्तिता । अर्तिष्यतीत्यादि ॥

**अद भक्षणे** ॥ **अदिप्रभृतिभ्यः शपः** ।२।४।७२। लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ॥ **लिट्यन्यतरस्याम्** ।२।४।४०। अदो घस्लृ स्यात् । जघास । उपधालोपः । घस्य चर्त्वे—॥ **शासि-**

---

कान्तिः = इच्छा । वा भ्राशेति श्यन् वा । आदानं-ग्रहणम् । ( झँसना ) । इति भ्वादयः ।

---

**स्वार्थे** इति । अनिर्दिष्टार्थप्रत्ययत्वादिति भावः ।

**अदिप्रभृतिभ्य** इति । 'ण्यक्षत्रियार्षञितः' इत्यतो लुगित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—लुक् स्यादिति । अदिप्रभृतिभ्यः परस्य शपो लुगिति फलितम् । अत्तीति । शपो लुकि दस्य चर्त्वेन तकारः ।

**लिट्यन्यतरस्याम्** । 'अदो जग्धि'रित्यतोऽद इति 'लुङ्सनोर्घस्लृ' इत्यतो 'घस्लृ' इति चानुवर्तते । तदाह—अद इति । आदेशे लृकार इत् । घसादेशोऽनिट् । जघासेति । अकित्त्वात् 'गमहने'त्युपधालोपो नेति भावः ।

**घसिघसीनां च ।८।३।६०।** इण्कुभ्यामेषां सस्य षः । जक्षतुः । जक्षुः । [ घसस्तासावभावात्थलि नित्यमिट् । ] जघसिथ । आद । [ 'इडत्त्यर्त्तिव्ययतीना'मिति नित्यमिट् । ] आदतुः । आदुः । आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् । अत्ताम् । अदन्तु ॥

**हुझल्भ्यो हेर्धिः ।६।४।१०१।** होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥ **अदः सर्वेषाम् ।७।३।१००।** अदः परस्याऽपृक्तस्य सार्वधातुकस्याऽट् स्यात् । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥ **लुङ्सनोर्घस्लृ ।२।४।३७।** अदः । अघसत् । आत्स्यत् ॥

---

जघ्स् अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाभावादाह— **शासीति** । थलि तु क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वत' इति निषेधस्य तासौ नित्याऽनिड्विषयत्वात् । घस् तु तासौ न विद्यते एव, कुतस्तस्य तासावनिट्कत्वम् । 'यस्तासावस्ति अनिट् च' इति हि भाष्यम् । तदाह— **घसस्तासाविति** । **जघसिथेति** । जक्षथुः । जक्ष । जघास–जघस, जक्षिव, जक्षिम ।

घसादेशाभावपक्षे त्वाह—**आदेति** । थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह—**इडत्त्यर्तीति** । **आदिथेति** । आदथुः, आद । आद, आदिव, आदिम ।

**अदः सर्वेषाम्** । अद इति पञ्चमी । 'तस्मादित्युत्तरस्य' इति परिभाषया परस्येति लभ्यते । 'गुणोऽपृक्ते' इत्यतः—'अपृक्ते' इति 'तुरुस्तुशम्यमः' इत्यतः 'सार्वधातुके' इति चानुवर्तते । सप्तमीद्वयं च षष्ठ्या विपरिणस्यते । 'अड् गार्ग्यगालवयोः' इत्यतोऽडित्यनुवर्तते । 'गार्ग्यगालवयो'रित्यस्यानुवृत्ति-निवृत्तये 'सर्वेषा'मिति । तदाह—**अद इति** ।

**हन हिंसागत्योः। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।६।४।३७।** अनुनासिकान्तानामेषां लोपः। यमि-रमि-नमि-गमि-हनि-मन्यतयो**ऽनुदात्तोपदेशाः**। तनु-षणु-क्षणु-क्षिणु-ऋणु-तृणु-घृणु-वनु-मनु-**तनोत्यादयः**। हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः॥

**वमोर्वा।८।४।२३।** उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णः। प्रहण्मि। प्रहन्मि। प्रहन्वः। प्रहण्वः। प्रहण्मः। प्रहन्मः। जघान। जघ्नतुः। जघ्नुः॥ **अभ्यासाच्च।७।३।५५।** हन्तेर्हस्य कुत्वं स्यात्। जघनिथ। जघन्थ। जघ्नथुः। जघ्न। जघान। जघन। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु। हतात्। हताम्। घ्नन्तु॥ **हन्तेर्जः।६।४।३६।** हौ॥ **असिद्धवदत्राभात्।६।४।२२।** इत ऊर्ध्वमापादपरिसमाप्तेराभीयम्। समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्। इति जस्याऽसिद्धत्वान्न हेर्लुक्। जहि। हतात्। हतम्। हत। हनानि। हनाव। हनाम। अहन्। अहताम्। अघ्नन्। अहन्। अहतम्। अहत। अहनम्। अहन्व। अहन्म। हन्यात्॥ **आर्धधातुके**

---

**हत इति।** तसि अनुदात्तोपदेशानुनासिकान्तत्वान्नकारलोपः। 'सार्वधातुकमपित्' इति तसो ङित्वात्। **घ्नन्तीति।** अजादिङित्परकत्वात् 'गमहने'त्युपधालोपे 'हो हन्ते'रिति कुत्वेन हस्य घः। हंसि, हथः, हथ।

**वमोर्वा।** 'उपसर्गादसमासेऽपि' इत्यत 'उपसर्गा'दित्यनुवर्तते। 'रषाभ्यां नो ण' इति सूत्रमनुवर्तते। 'हन्तेरत्पूर्वस्ये'त्यतो हन्तेरिति च। तदाह— **उपसर्गस्थान्निमित्तादिति।** **जघन्थेति।** इडभावे नस्यानुस्वारपरसवर्णौ। जघ्नथुः, जघ्न। जघान—जघन, जघ्निव, जघ्निम। **इत्यधिकृत्येति।** 'अदो जग्धि'रित्यादिविधयो वक्ष्यन्ते इति शेषः। तदधिकारस्थं सूत्रमाह—

।२।४।३५। इत्यधिकृत्य ॥ **हनो वध लिङि** ।२।४।४२। **लुङि च** ।२।४।४३। वधादेशोऽदन्तः । 'आर्धधातुके' इति विषयसप्तमी, तेनाऽऽर्द्धधातुकोपदेशेऽकारान्तत्वाददतो लोपः । वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् ॥ **यु मिश्रणाऽमिश्रणयोः** ॥ **उतो वृद्धिर्लुकि हलि** ।७।३।८९। लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । युयुवतुः । युयुवुः । युयविथ । युयोथ । युयुवथुः । युयुव । युयाव । युयव । युयुविव । युयुविम । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् ।

---

**हनो वधेति** । वधेति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्धधातुके लिङीत्यर्थः । **लुङि च** । हनो वधादेशः स्याल्लुङीत्यर्थः ।

**अवधीदिति** । सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशे अनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाभावात् सिच इट् । 'अतो हलादे'रिति वृद्धिस्तु न भवति, 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वात् । एतदर्थमेव हि वधादेशस्यादन्तत्वमाश्रितम् ।

**यु मिश्रणेति** । अमिश्रणं=पृथग्भावः । सेडयम् । **उतो वृद्धिर्लुकि हलि** । 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति अचिवर्जमनुवर्तते । लुकीति विषयसप्तमी, दर्शनाभावस्य लुकः परत्वासंभवात् । तदाह—लुग्विषय इत्यादिना ।

**यौतीति** । गुणं बाधित्वाऽनेन वृद्धिः । **युत इति** । अपित्त्वान्न वृद्धिः । **युवन्तीति** । अपित्त्वाद्वृद्ध्यभावे ङित्त्वाद्गुणाभावे उवङिति भावः । यौषि, युथः, युथ । यौमि, युव, युमः । **युवावेति** । युयुवतुः, युयुवुः । युयविथ, युयुवथुः, युयुव । युयाव–युयव, युयुविव, युयुविम । **यवितेति** । उवङं बाधित्वा परत्वाद्गुणः । यविष्यति । यौतु–युतात्, युताम्, युवन्तु । हावपित्त्वान्न वृद्धिः ।

अयुवन् । युयात् । इह वृद्धिर्न, भाष्ये पिच्च ङिन्न ङिच्च पिन्नेति व्याख्यानात् । विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् । **या प्रापणे** । याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥ **लङः शाकटायनस्यैव ।३।४।१११।** आदन्ताल्लङो झेर्जुस्वा । अयुः । अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । एवं—**वा गतिगन्धनयोः** ॥ **भा दीप्तौ** ॥ **ष्णा शौचे** । 'वाऽन्यस्य संयोगादे'रित्येत्त्वम् । स्नेयात् । स्नायात् । **श्रा पाके** ॥ **द्रा कुत्सायां गतौ** ॥

---

युहि । युतात्, युतम्, युत । आटि पित्त्वेऽपि हलादित्वाभावान्न वृद्धिः । पित्त्वेन ङित्त्वाभावाद्गुणः । यवानि, यवाव, यवाम । अयौत्, अयुताम्, अयुवन् । अयौः, अयुतम्, अयुत । अयवम्, अयुव, अयुम ।

अत्र यासुडागमसहितस्य तिपः पित्त्वादुतो वृद्धिमाशङ्क्याह—**इह वृद्धिर्नेति** । कुत इत्यत आह—**भाष्ये इति** । **व्याख्यानादिति** । 'हलः श्नः शानज्झौ' इति सूत्रव्याख्यावसरे वचनादित्यर्थः । ननु यासुडागमसहितस्य तिपः पित्त्वात् 'पिच्च ङिन्ने'त्युक्तवचनेन 'यासुट् परस्मैपदेषु' इति ङित्त्वस्याप्यभावात् 'क्ङिति च' इति गुणनिषेधाभावाद्गुणः स्यादिति चेदत आह—**विशेषविहितेनेत्यादि** । 'यासुट् परस्मैपदेषु' इति विशेषविहितेन यासुटो ङित्त्वेन तत्सहितस्य तिपो 'ङिच्च पिन्ने'ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाधान्ङित्त्वाद्गुणनिषेधो निर्बाध इत्यर्थः ।

**यूयादिति** । आर्धधातुकत्वान्न वृद्धिः । 'अकृत्सार्वधातुकयो'ति दीर्घः । यूयास्तामित्यादि । लुङयाह—**अयावीदिति** । सिचि वृद्धिरिति वृद्धिः । 'इट ईटी'ति सिज्लोपः । अयाविष्टामित्यादि । अयविष्यत् ।

**प्सा भक्षणे ॥ पा रक्षणे ॥ रा दाने ॥ ला आदाने ॥ दाप् लवने ॥ ख्या प्रकथने** । अयं सार्वधातुक एव प्रयोक्तव्यः ॥ ख्याति ।

**विद ज्ञाने ॥ विदो लटो वा** ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे । वेत्ति । वित्तः । विदन्ति ॥

**उषविदजागृभ्योऽन्यतरस्याम्** ।३।१।३८। एभ्यो लिट्याम् वा । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार । विवेद । वेदिता । वेदिष्यति ॥ **विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** ।३।१।४१। वेत्तेर्लोट्याम्, गुणाभावो लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते, इति-

---

**विद ज्ञाने इति** । अनिट्सु लुग्विकरणस्याऽग्रहणादयं सेट् । **विदो लटो वा** । 'परस्मैपदानां णलतुस्' इत्यादिसूत्रमनुवर्तते । 'विद' इति पञ्चमी, तदाह—**वेत्तेर्लट इति** । विन्दतिविद्यत्योस्तु शेन श्यना च व्यवधानान्नैते आदेशाः । **आमीति** । 'आम्पक्षे न लघूपधगुण' इत्यन्वयः । कुत इत्यत आह—**अदन्तत्वप्रतिज्ञानादिति** । 'उषविदे'ति सूत्रे विदेत्यकारान्तत्वमाम्संनियोगेन निपात्यते इत्यर्थः । आमि अतो लोपः । तस्य स्थानिवत्त्वान्न लघूपधगुण इति भावः ।

**विदाङ्कुर्वन्त्वित्यन्यतरस्याम्** । 'कृञ् चानुप्रयुज्यते लिटी'त्युत्तरमिदं सूत्रम् । इतिशब्दः प्रकारे । एवंजातीयकं वैकल्प्येन प्रत्येतव्यमित्यर्थः । **वेत्तेरिति** । लुग्विकरणाद्विदधातोर्लोटि परे आम्प्रत्ययो निपात्यते इत्यर्थः ।

**लोडन्तेति** । आमन्ताद्विदेः लोडन्तकृञ्धातोरनुप्रयोगश्च निपात्यत इत्यर्थः । ननु 'विदांकुर्वन्तु' इति लोटि प्रथमपुरुषबहुवचनस्यैव सूत्रे निर्देशात् कथं लोडन्तसामान्यानुप्रयोग इत्यत आह—**पुरुषेति** । कुर्वन्त्विति प्रथमपुरुषो, बहुवचनं च न विवक्षितमित्यर्थः । तयोस्तु नान्तरीयकमुच्चारणमिति भावः । **इतिशब्दादिति** । तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वा-

शब्दात् ॥ **तनादिकृञ्भ्य उः** ।३।१।७९। शपोऽपवादः । विदाङ्करोतु ॥ **अत उत्सार्वधातुके** ।६।४।११०। उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदांकरवाणि । वेत्तु । अवेत् । अवित्ताम् । अविदुः ॥ **दश्च** ।८।२।७५। धातोः पदान्तस्य दस्य सिपि रुर्वा । अवेः । अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । विद्यासुः । अवेदीत् । अवेदिष्यत् । **अस् भुवि** । अस्ति ॥ **श्नसोरल्लोपः** ।६।४।१११। श्नस्यास्तेश्चाऽतो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥ **अस्तेर्भूः** ।२।४।५२। आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु ।

---

दिति भावः । **अवेदिति** । सिपो हल्ङ्यादिलोपे दकारस्य रुत्वविकल्पः । अवित्तम्, अवित्त । अवेदम्, अविद्व, अविद्म । विद्यात्, विद्याताम् । विद्यात्, विद्यास्ताम् । अवेदीत् । अवेदिष्यत् । **अस् भुवीति** । भवनं भूः । सत्तायामित्यर्थः ।

**अस्तीति** । सस्य चर्त्वेऽपि सकार एव भवति, नतु तकारः, अल्पप्राणतया प्रयत्नभेदात् । **श्नसोरल्लोपः** । अदिति लुप्तषष्ठीकं पदम् । श्न अस् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । शकन्ध्वादित्वात् पररूपम् । श्नेति श्नम्प्रत्ययैकदेशनिर्देशः । 'अत उत्सार्वधातुके' इत्यतः 'सार्वधातुके' इत्यनुवर्तते, 'गमहने'-त्यतः क्ङितीति च । तदाह—**श्नस्येत्यादिना** । **अस्तेर्भूः** । असधातोर्भूभावः स्यादार्धधातुके परे इत्यर्थः ।

**ध्वसोरेद्धावभ्यासलोपश्च** । घु अस् अनयोर्द्वन्द्वः । एत्-हौ-इति च्छेदः ।

नन्वस् हि इति स्थिते 'हुझल्भ्यो हेर्धि'रिति धित्वं परत्वाद्बाधित्वा 'ध्वसो'रिति सकारस्य एत्वे कृते हुझल्भ्यः परत्वाभावात् कथं धिभाव इत्यत आह—**आभीयत्वेनेति** ।

स्तात् । स्ताम् । सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च ।६।४।११९।** घोरस्तेश्चैत्वं हौ अभ्यासलोपश्च । आभीयत्वाद्वृद्धिः । एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।८।३।८७।** उपसर्गेणः प्रादुसश्च परस्याऽस्तेः सस्य षो यकारेऽचि च परे । निःष्यात् । प्रादुःष्यात् । निःषन्ति । प्रादुःषन्ति । यच्परे किम् ? अभिस्तः ॥

**रु शब्दे ॥ तुरुस्तुशम्यमः सार्वधातुके ।७।३।९५।** एभ्यः सार्वधातुकस्य हलादेस्तिङ ईड्वा । 'नाभ्यस्तस्ये'त्यतोऽनुवृत्तिसंभवे पुनः सार्वधातुकग्रहणमपिदर्थम् । रवीति । रौति । रुवीतः । रुतः । हलादेः किम् ? रुवन्ति । तिङः किम् ? शाम्यति । सार्वधातुके किम् ? आशिषि रूयात् । विध्यादौ तु रुयात् । रुवीयात् । अरावीत् । अरविष्यत् । तु इति सौत्रो धातुः—गतिवृद्धिहिंसासु । तवीति । तौति । तुवीतः । तुतः ।

---

**रौतीति ।** इडभावे 'उतो वृद्धि'रिति वृद्धिरिति भावः । **रुत इति ।** अपित्त्वेऽपि ईड्विकल्प इति भावः । **रुवन्तीति ।** अन्तादेशे कृते हलादित्वाभावादीडभावे उवङिति भावः । **शाम्यतीति ।** श्यनस्तिङ्त्वाभावादीट् नेति भावः । **आशिषि रूयादिति ।** आर्धधातुकत्वादीडभावे 'अकृत्सार्वधातुकयोः' इति दीर्घः । **विध्यादौ त्विति ।** आदिना निमन्त्रणादिसंग्रहः ।

**रुवीयादिति ।** हलादिसार्वधातुकत्वादीड्विकल्प इति भावः । ईडभावपक्षे हलादौ पिति सार्वधातुके 'उतो वृद्धि'रिति बोध्यम् ।

राघवयोरधीय'न्निति ॥ **वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु** । प्रजनं-गर्भग्रहणम् । असनं-क्षेपणम् । वेति । वीतः । वियन्ति । वेषि । वीहि । अवेत् । अविताम् । अवियन् । अटि सति अनेकाच्त्वाद्यणिति केचित् । अव्यन् । अत्र ईकारोपि धात्वन्तरं प्रश्लिष्यते । ईतः । इयन्ति । ईयात् । ऐषीत् ॥

**वच परिभाषणे** । वक्ति । वक्तः । अयमन्तिपरो न प्रयुज्यते । बहुवचनपर इत्यन्ये । झिपर इत्यपरे । वक्तु । वग्धि । वच्यात् । उच्यात् ॥ **अस्यतिवक्तिख्यातिभ्योऽङ्** ।३।१।५२। च्लेः ॥

---

भावान्नातिदेश इत्यर्थः । तेन झोऽन्तादेशे इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्यम् । **राघवयोरधीयन्निति** । 'अधीगर्थे' इति षष्ठी । राघवौ स्मरन्नित्यर्थः ।

**वी गतीति** । 'अजेर्व्यघञपो'रिति सूत्रभाष्यरीत्या अस्य आर्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरकृतः । **वियन्तीति** । एकाच्त्वाद्यणभावादियङिति भावः । लोटि-वेतु–वीतात्, वीताम्, वियन्तु ।

**वीहीति** । हेरपित्त्वेन ङित्त्वान्न गुण इति भावः । वीतात्, वीतम्, वीत । वयानि, वयाव, वयाम । लङ्याह—**अवेदिति** । **अवियन्निति** । वी अन्निति स्थिते परत्वादडागमात् प्रागियङि कृते अडागम इति भावः ।

मतान्तरमाह–**अटि सतीति** । लावस्थायामडिति पक्षे इयङं बाधित्वा अनेकाच्त्वाद्यणि अव्यन्निति केचिदाहुरित्यर्थः । केचिदित्यस्वरसं सूचयति, तद्बीजं तु कृतेऽप्याटि यणि कर्तव्ये आभीयतया अटोऽसिद्धत्वादनेकाच्त्वाभावाद्यणभावादियङेवोचित इत्यास्तां विस्तरः ।

**अत्रेति** । वी-ई इति सवर्णदीर्घेण 'वी गती'ति निर्देश इति भावः । **ईयादिति** । विधिलिङि आशीर्लिङि च रूपमिदं समानम् । 'स्को'रिति सलोपः । तत्र विधिलिङि ईयातामित्यादि, आशिषि तु ईयास्तामित्यादीति विशेषः । **ऐषीदिति** । सिचि वृद्धिरिति वृद्धिः ।

**वच उम्** ।७।४।२०। अङि । अवोचत् । अवक्ष्यत् ॥ **मृजू शुद्धौ** ॥ **मृजेर्वृद्धिः** ।७।२।११४। इको धातुप्रत्यये परे । मार्ष्टि । मृष्टः । ***क्ङित्यजादौ वेष्यते** । मृजन्ति । मार्जन्ति । ममार्ज । ममृजतुः । ममार्जिथ । ममार्ष्ठ । मार्जिता । मार्ष्टा । मार्ष्टु । मृड्ढि । अमार्ट् । अमार्ड् । अमार्जीत् । अमार्क्षीत् । अमार्क्ष्यत् । अमार्जिष्यत् ॥

**रुदिर् अश्रुविमोचने** ॥ **रुदादिभ्यः सार्वधातुके** ।७।२।७६। रुद् स्वप् श्वस् जन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् । रोदिति । रुदितः । हौ परत्वादिटि धित्वं न । रुदिहि ॥ **रुदश्च पञ्चभ्यः** ।७।३।९८। हलादेः पितः सार्वधातुकस्याऽपृक्तस्य ईट् ॥

**अड् गार्ग्यगालवयोः** ।७।३।९९। अरोदीत् । अरोदत् । अरुदिताम् । अरुदन् । अरोदीः । अरोदः । प्रकृतिप्रत्ययविशेषाऽपेक्षाभ्यामडीड्भ्यामन्तरङ्गत्वाद्याड्डुट् । **असिद्धं बहिरङ्गमन्तरङ्गे** । रुद्यात् । अरुदत् । अरोदीत् । अरोदिष्यत् ॥ **ञिष्वप् शये** । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुष्वपिथ । सुष्वप्थ ॥ **सुविनिर्दुर्भ्यः सुपिसूतिसमाः** ।८।३।८८। एभ्यः सुप्यादेः

---

अमार्ट् इति । तिप इकारलोपे वृद्धौ रपरत्वे हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः । अमृष्टाम्, अमार्जन्-अमृजन् । अमार्ट्, अमृष्टम्, अमृष्ट । **अमार्जमिति** । अमृज्व, अमृज्म । मृज्यात् । मृज्याताम् । मृज्यास्ताम् । **अमार्जीत् अमार्क्षीदिति** । ऊदित्वादिड्विकल्प इति भावः । इट्पक्षे-अमार्जिष्टाम्, अमार्जिषुरित्यादि । इडभावे तु अमार्ष्टाम्-अमार्क्षुः । अमार्क्षीः, अमार्ष्टम्, अमार्ष्ट । अमार्क्षम्, अमार्क्ष्व, अमार्क्ष्म । अमार्जिष्यत्-अमार्क्ष्यत् ।

सस्य षः किति लिटि । परत्वात्सम्प्रसारणे षत्वे च कृते द्वित्वम् । **पूर्वत्रासिद्धीयमद्विर्वचने** । सुषुषुपतुः । अकिति तु द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्यासिद्धत्वात्ततः पूर्वं हलादिः शेषः । नित्यत्वाच्च । ततः सुपिरूपाभावान्न षः । सुष्वाप । स्वप्ता । अस्वपीत् । अस्वप्त । स्वप्यात् । सुषुप्यात् । अस्वप्स्यत् ॥

**श्वस प्राणने** । श्वसिति । श्वसितः । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत् । अश्वसत् । अश्वसिताम् । अश्वसन् । श्वस्यात् । ह्मयन्तेति वृद्धिर्न । अश्वसीत् ॥ **अन च** । अनिति । अनिता । आनीत् । आनत् ॥ **अनितेः** ।८।४।१९। उपसर्गस्थान्निमित्तात् परस्याऽनितेर्नस्य णः । प्राणिति ॥ **जक्ष भक्षहसनयोः** । जक्षिति । जक्षितः ॥ **अदभ्यस्तात्** ।७।१।२। झस्य । अन्तापवादः । जक्षति । अजक्षीत् । अजक्षत् । अजक्षिताम् । सिजभ्यस्तेति जुस् । अजक्षुः ॥ **जागृ निद्राक्षये** । जागर्ति । जागृतः । जाग्रति । जागराञ्चकार । जजागार ॥

**जाग्रोऽविचिण्णल्ङित्सु** ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिभ्योऽन्यस्मिन्वृद्धिविषये प्रतिषेधविषये च । जजागरतुः । जजागरुः । जागरिता । अजागः । अजागृताम् ॥ **जुसि च** ।७।३।८३। अजादौ जुसि इगन्ताङ्गस्य गुणः । अजागरुः ।

---

जागृधातुरयं ऋकारान्तः सेट् । **जागर्तीति** । तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम् । **जागृत इति** । ङित्त्वान्न गुणः । **जाग्रतीति** । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात् इति झेरदादेशः । ङित्त्वाद्गुणनिषेधे ऋकारस्य यणिति भावः । जागर्षि, जागृथः, जागृथ । जागर्मि, जागृवः,

अजादौ किम्? जागृयुः। आशिषि तु—जागर्यात्। जागर्यास्ताम्। जागर्यासुः। अजागरीत्॥ **दरिद्रा दुर्गतौ**। दरिद्राति॥ **इद्दरिद्रस्य ।६।४।११४।** हलादौ क्ङिति सार्वधातुके। दरिद्रितः॥ **श्नाभ्यस्तयोरातः ।६।४।११२।** लोपः क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। 'आत औ णलः' इत्यत्र 'ओ' इत्येव सिद्धे 'औ'विधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके। ददरिद्रौ। ***दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्यः। लुङि वा। सनि ण्वुलि ल्युटि च न।** दरिद्रिता। अदरिद्रीत्। इट्सकौ। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। इट्सकौ। अदरिद्रासीत्॥ **चकासृ दीप्तौ**। चकास्ति। चकासाञ्चकार। चकासिता। चकास्तु। चकाधि॥ **तिप्यनस्तेः ।८।२।७३।** पदान्तस्य सस्य दः। अचकात्। अचकाद्।

---

जागृमः। विवक्षिते इति। 'आतो लोप इटि चे'त्यालोपो दरिद्रातेर्भवन् क्ङिति अक्ङिति च अजादावार्धधातुके भवति। स च आर्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः। आल्लोपे कृते पचाद्यच् सिध्यति। आर्धधातुके परे आल्लोपप्रवृत्तौ तु 'श्याद्व्यधा'- इत्यादन्तलक्षणो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा 'आतो युक् चिण्कृतो'रिति युकि 'दरिद्राय' इति स्यात्। आर्धधातुके विवक्षिते ततः प्रागेव आलोपे तु कृते आदन्तत्वाभावाण्णप्रत्ययाभावे पचाद्यच्प्रत्ययो निर्बाधः।

अदरिद्रुरिति। जक्षित्यादित्वेन अभ्यस्तत्वाज्जुसिति भावः। अदरिद्राः, अदरिद्रितम्, अदरिद्रित। अदरिद्राम्, अदरिद्रिव, अदरिद्रिम।

अचकास्ताम् । अचकासुः ॥ **सिपि धातो रुर्वा** ।८।२।७४। पदान्तस्य सस्य । पक्षे दः । अचकाः । अचकात् ॥

**शासु अनुशिष्टौ** । शास्ति ॥ **शास इदङ्हलोः** ।६।४।३४। शास उपधाया इत्स्यादङि हलादौ क्ङिति च । शिष्टः । शासति । शशास । शशासतुः । शास्तु । शिष्टात् । शिष्टम् । शासतु ॥ **शा हौ** ।६।४।३५। शास्तेः । तस्याऽभीयत्वेनाऽसिद्धत्वाद्धेर्धिः । शाधि । अशात् । अशिष्टाम् । अशासुः । अशाः । अशात् । शिष्यात् ॥ **सर्तिशास्त्यर्तिभ्यश्च** ।३।१।५६। एभ्यश्चलेरङ् कर्तृलुङि । अशिषत् । अशासिष्यत् ॥ इति **परस्मैदिनः** ॥

**शीङ् स्वप्ने** ॥ **शीङः सार्वधातुके गुणः** ।७।४।२१। शेते । शयाते ॥ **शीङो रुट्** ।७।१।६। झादेशस्याऽतः । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शिश्ये । शयिता । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ **इङ् अध्ययने** ।

---

**अशादिति** । 'सिपि धातो'रिति रुत्वदत्वविकल्प इति भावः । अशिष्टम्, अशिष्ट । अशासम्, अशिष्व, अशिष्म ।

**शिष्यादिति** । 'शास इदि'ति इत्त्वे 'शासिवसी'ति ष इति भावः । **अशिषदिति** । 'सर्तिशास्त्यर्तिभ्यश्चे'त्यङि 'शास'इतीत्त्वमिति भावः ।

**शीङ् स्वप्ने** । सेट् । ङित्वात्तङ् । **शीङः सार्वधातुके** । ननु 'सार्वधातुकार्धधातुकयो'रित्येव सिद्धे किमर्थमिदमिति चेन्न; 'क्ङिति चे'त्यस्यापवादत्वार्थमस्याऽऽवश्यकत्वात् । झस्य अदादेशे सति 'शे अते' इति स्थिते आह—**शीङो रुट्** । 'झोऽन्त' इत्यतो 'झ' इत्यनुवर्तते । 'अदभ्यस्तात्' इत्यतोऽदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—**शीङः परस्य झादेशस्येति** । रुटि उकार उच्चारणार्थः । टित्त्वादाद्यवयवः । **शेध्वे इति** । 'षीध्वंलुङ्लिटाम्' इत्युक्तेर्न ढ इति **श्रीवासुदेवदीक्षिता** व्याचख्युः ।

इङिकावध्युपसर्गतो न व्यभिचरतः। अधीते। अधीयाते। **गाङ् लिटि** ।२।४।४९। इङो गाङ् लिटि। अधिजगे। अध्येता। अध्येष्यते। अधीताम्। अधीष्व। अधीयाथाम्। अधीध्वम्। अध्ययै। अध्ययावहै। अध्ययामहै। अध्यैत। अध्यैयाताम्। अध्यैयत। अध्यैध्वम्। अध्यैयि। अध्यैवहि। अध्यैमहि। अधीयीत। अधीयीताम्। अधीयीरन्। अध्येषीष्ट॥ **विभाषा लुङ्लृङोः** ।२।४।५०। इङो गाङ्॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित्** ।१।२।१। गाङादेशात्कुटादिभ्यश्चाऽञ्णितः प्रत्यया ङितः स्युः॥ **घुमास्थागापाजहातिसां हलि** ।६।४।६६। एषामात

---

**शिश्ये इति**। शिश्यिषे। शिश्यिढ्वे–शिश्यिध्वे। **शयितेति**। शयिष्यते। शेताम्, शयाताम्, शेरताम्। शेष्व, शयाथाम्, शेध्वम्। शयै, शयावहै, शयामहै। अशेत, अशयाताम्, अशेरत। अशेथाः, अशयाथाम्, अशेध्वम्। अशयि, अशेवहि, अशेमहि। शयीत। शयिषीष्ट। **अशयिष्टेति**। अशयिष्यतेत्यपि ज्ञेयम्।

**न व्यभिचरत इति**। 'अधीते' इत्यत्र धातुरुपसर्गं न व्यभिचरतीति भूवादिसूत्रे भाष्ये उक्तम्। **अधीते इति**। 'सार्वधातुकमपित्' इति ङित्त्वात् गुणनिषेधे सवर्णदीर्घः। अजादौ तु इयङ्। तदाह—**अधीयाते इति**। अधीषे, अधीयाथे, अधीध्वे। अधीये, अधीवहे, अधीमहे। **अधिजगिरे इति**। अधिजगिषे, अधिजगाथे, अधिजगिध्वे। अधिजगे, अधिजगिवहे, अधिजगिमहे। **अध्यैतेति**। अधि आ इ त इति स्थिते 'आटश्च' इति वृद्धौ यणिति भावः। अध्यैयाताम्।' **अध्यैयत**। 'आत्मनेपदेष्वनत' इत्यदादेशः। अध्यैथाः, अध्यैयाथाम्, अध्यैध्वम्। अध्यैयि, अध्यैवहि, अध्यैमहीति। **अधीयीध्वमिति**। ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङ इयङि सवर्णदीर्घ इति भावः।

ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट । अध्यैष्ट । अध्यगीष्यत ॥

**ईर गतौ कम्पने च**। ईर्ते । ईरांचक्रे । ईरिता। ईरिष्यते । ईर्ताम् ।ईर्ष्व । ईर्ध्वम् । ऐरिष्ट ॥ **कश गतिशासनयोः** । कष्टे । कशाते ॥ **ईड स्तुतौ** । ईट्टे ॥ **ईशः से** ।७।२।७७। **ईड्जनोर्ध्वे च** ।७।२।७८। ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात् । योगविभागो वैचित्र्यार्थः । ईडिषे । ईडिध्वे । एकदेशविकृतस्यानन्यत्वात्—ईडिष्व । ईडिध्वम् । विकृतिग्रहणेन प्रकृतेरग्रहणात्—ऐड्ढ्वम् ॥ **ईश ऐश्वर्ये** । ईशिषे । ईशिध्वे ॥

**आस उपवेशने** । आस्ते । दयायासश्चेत्याम् । आसांचक्रे । आस्स्व । आध्वम् । आसिष्ट ॥ **आङः शासु इच्छायाम्** ।

---

**अध्यगीष्टेति**। अधि अगा स् त इत्यत्र आकारस्य ईकारे, यणि, सिचः षत्वे तकारस्य ष्टुत्वेन टकार इति भावः । 'गातिस्था' इति न सिज्लोपः, परस्मैपदाभावात् । अध्यगीषाताम्, अध्यगीषत । अध्यगीष्ठाः, अध्यगीषाथाम्, अध्यगीढ्वम् । अध्यगीषि, अध्यगीष्वहि, अध्यगीष्महि ।

**अध्यैष्टेति** । अधि आ इ स् त इति स्थिते इकारस्य गुणे आटो वृद्धौ यणि षत्वष्टुत्वे इति भावः । अध्यैषाताम्, अध्यैषत। अध्यैष्ठाः, अध्यैषाथाम्, अध्यैढ्वम् । 'धि च' इति सलोपः । अध्यैषि, अध्यैष्वहि, अध्यैष्महि ।

**आस्ते इति** । आसाते, आसते। आस्से, आसाथे । 'धि च' इति सलोपः। आध्वे । आसे, आस्वहे, आस्महे। आसिता। आसिष्यते। आस्ताम्, आसाताम् । **आस्स्वेति** । सकारद्वयमत्र वोध्यम् । आसाथाम् । **आध्वमिति** । 'धि च' इति सलोपः । आसै, आसावहै, आसामहै । आस्त, आसाताम्, आसत । आस्थाः, आसाथाम्, आध्वम् । आसि, आस्वहि, आस्महि । आसीत, आसीयाताम् । आसिषीष्ट, आसिषीयास्ताम् । **आसिष्टेति** । आसि-

आशास्ते । आशासाते ॥ **वस आच्छादने** । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥ **णिसि चुम्बने** । निंस्ते ॥ **णिजि शुद्धौ** । निङ्क्ते । निङ्क्षे । निञ्जिता ॥ **वृजी वर्जने** । वृक्ते । वृजाते । इदिदित्यन्ये । वृङ्क्ते ॥ **पृची संपर्चने** । पृक्ते ॥ **षूङ् प्राणिगर्भविमोचने** । सूते । सुषुविषे । सोता । सविता । सुवै । सविषीष्ट । असविष्ट । असोष्ट ॥ **चक्षिङ् व्यक्तायां वाचि** । अयं दर्शनेपि । इकारोऽनुदात्तो युजर्थः । नुम्तु न, अन्त्य इदिति व्याख्यानात् । चष्टे । चक्षाते । **आर्धधातुके ॥ चक्षिङः ख्याञ् ।२।४।५४। वा लिटि ।२।४।५५।** अत्र भाष्ये ख्शादिरयमादेशः । असिद्धकाण्डे 'शस्य यो वे'ति स्थितम् ।

---

षातामित्यादि । आसिष्यत । **आङः शासु इच्छायामिति** । आङः परः शासधातुरिच्छायामित्यर्थः ।

**वस आच्छादने इति** । परिधाने इत्यर्थः । **वध्वे इति** । 'धि चे'ति सलोपः । **ववसे इति** । वादित्त्वाभ्यासलोपौ नेति भावः । **वसितेति** । अनिट्सु शब्विकरणस्यैव वसेर्ग्रहणमिति भावः । वसिष्यते । वस्ताम् । अवस्त । वसीत । वसिषीष्ट । अवसिष्ट । अवसिष्यत ।

**सूते इति** । सुवाते, सुवते । सूषे, सुवाथे, सूध्वे । सुवे, सूवहे, सूमहे । **सुषुविषे इति** । स्वरतीति इड्विकल्पं बाधित्वा 'श्र्युकः किति' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । 'स्वरतिसूती'ति इड्विकल्पादाह—**सोता सवितेति** । तिङस्तासा व्यवधानात् 'भूसुवो'रिति न गुणनिषेध इति भावः । सोष्यते-सविष्यते । सूताम् । सुवाताम् । सुवताम् । सूष्व, सुवाथाम्, सूध्वम् । आटः पित्त्वाद्गुणस्तु न,—भूसुवोरिति निषेधात् । **सुवै इति** । सुवावहै, सुवामहै । असूत । सुवीत । सविषीष्ट-सोषीष्टेत्यादि ।

ञित्वात्पदद्वयम् । चख्यौ । चख्ये । चक्शौ । चक्शे । चचक्षे । ख्याता । क्शाता । ख्यास्यति । ख्यास्यते । क्शास्यति । क्शास्यते । चष्टाम् । अचष्ट । चक्षीत । ख्यायात् । ख्येयात् । क्शायात् । क्शेयात् । अस्यतिवक्तीत्यङ् । अख्यत् । अख्यत । अक्शासीत् । अक्शास्त । *** वर्जने क्शाञ् नेष्टः** । समचक्षिष्टेत्यादि । इत्यात्मनेपदिनः ॥

**द्विष अप्रीतौ । द्वेष्टि । द्विष्टे । द्वेक्ष्यति । द्विड्ढि । द्वेषै ।**

---

**चचक्षे इति** । चचक्षिषे, चचक्षिध्वे । चचक्षिवहे । **ख्यास्यते इति** । चष्टाम्, चक्षाताम्, चक्षताम् । चक्ष्व, चक्षाथाम्, चड्ढ्वम् । चक्षै, चक्षावहै, चक्षामहै । **अचष्टेति** । अचक्षाताम्, अचक्षत । अचष्टाः, अचक्षाथाम्, अचड्ढ्वम् । अचक्षि, अचक्ष्वहि, अचक्ष्महि । **ख्यायात् ख्येयादिति** । 'वाऽन्यस्ये'त्येत्त्वविकल्पः ।

**अक्शासीदिति** । अङ्विधौ ख्यातीति यकारनिर्देशाद्यत्वाभावपक्षे अङ् न भवति । किं तु आदन्तत्वलक्षणौ सगिटौ । अक्शासिष्टामित्यादि ।

**अक्शास्तेति** । आत्मनेपदे लुङि रूपम् । अक्शासातामित्यादि । अख्यास्यत्, अख्यास्यत । अक्शास्यत्, अक्शास्यत । **समचक्षिष्टेति** । अवर्जयदित्यर्थः । लुङि रूपम् ।

**द्विष अप्रीताविति** । अनिट् । **द्वेष्टीति** । पित्त्वेन ङित्त्वाभावाल्लघूपधगुण इति भावः । द्विष्टः । द्विषन्ति । द्वेक्षि, द्विष्ठः, द्विष्ठ । द्वेष्मि, द्विष्वः, द्विष्मः ।

तङि उदाहरति—**द्विष्टे इति** । ङित्त्वान्न गुणः । द्विषाते, द्विषते । द्विक्षे, द्विषाथे, द्विड्ढ्वे । द्विषे, द्विष्वहे, द्विष्महे । **द्विड्ढीति** । हेर्धिः, षस्य जश्त्वेन डः, ष्टुत्वेन ढः । द्विष्टात्, द्विष्टम्, द्विष्ट । **द्वेषाणीति** । आटः पित्त्वेन ङित्त्वाभावाद्गुणः, षात्परत्वाण्णत्वम् । द्वेषाव, द्वेषाम । द्विष्टाम्, द्विषाताम्, द्विषताम् । द्विक्ष्व, द्विषाथाम्, द्विड्ढ्वम् ।

**द्वेषै इति** । आटः पित्त्वेन ङित्त्वाभावाद्गुण इति भावः ।

अद्वेट् ॥ **द्विषश्च ।३।४।११२।** लङो झेर्जुस्वा । अद्विषुः । अद्विषन् । अद्विक्षत् ॥ **दुह प्रपूरणे** । 'दादेर्धातोर्घः' इति हस्य घः । दोग्धि । दुग्धः । दुहन्ति । घोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुह्वहे । दुह्महे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धु । दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि । दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् ।

---

**अद्वेडिति** । लङस्तिप् गुणः, इकारलोपः, हल्ङ्याादिलोपः, 'वाऽवसाने' इति 'झलां जश्' इति च चर्त्वजश्त्वे इति भावः । अद्विष्टाम् । **द्विषश्च** । 'झेजुर्स्' इति 'लङ शाकटायनस्य' इति चानुवर्तते इत्यभिप्रेत्य सूत्रं व्याचष्टे— **लङो झेरिति** । **अद्विषन्निति** । अद्वेट्, अद्विष्टम्, अद्विष्ट । अद्वेषम्, अद्विष्व, अद्विष्म । **द्विक्षीष्टेत्यत्र** । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । द्विक्षीयास्तामित्यादि । **अद्विक्षदिति** । 'शल इगुपधात्' इति क्सः । अद्विक्षताम्, अद्विक्षन्नित्यादि । तङि-अद्विक्षत, अद्विक्षाताम्, अद्विक्षन्ते-त्यादि । अद्वेक्ष्यत् । अद्वेक्ष्यत ।

**दुह प्रपूरणे इति** । अयमनिट् । **दोग्धीति** । 'दादेः' इति हस्य घः, 'झषस्तथो' रिति तकारस्य धकारः, घस्य जश्त्वेन गः । **धोक्षीति** । हस्य घः, चर्त्वेन कः, षत्वमिति भावः । दुग्धः, दुग्ध । दोह्मि, दुह्वः, दुह्मः ।

**धुक्षे इति** । हस्य घः, दस्य भष्भावे धकारः, घस्य कः, षत्वम् । दुहाथे । **धुग्ध्वे इति** । हस्य घः, भष्भावः, घस्य गः । दुह्वहे । दुह्महे । दुदोह, दुदुहतुः, दुदुहुः । अजन्ताकारवत्त्वाभावात् क्रादिनियमान्नित्यमिट्–दुदोहिथ, दुदुहथुः, दुदुह । दुदोह, दुदुहिव, दुदुहिम । दुदुहे, दुदुहाते, दुदुहिरे । दुदुहिषे, दुदुहाथे, दुदुहिढ्वे–दुदुहिध्वे । दुदुहे, दुदुहिवहे, दुदुहिमहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । **दोग्धिन्निति** । दुग्धात्, दुग्धाम्, दुहन्तु । **दुग्धीति** । हेर्धिः, घत्व-जश्त्वे । दुग्धात्, दुग्धम्, दुग्ध । **दोहानीति** । आटः पित्त्वादङित्त्वाद्गुणः ।

इयर्तु । इयराणि । ऐयः[1] । ऐयृताम् । ऐयरुः । इयृयात् । अर्यात्[2] । आरत्[3] । आरिष्यत्[4] ॥ इति परस्मैपदिनः ।

**माङ् माने शब्दे च** ॥ **भृञामित्** ।७।४।७६। भृञ् माङ् ओहाङ् एषामभ्यासस्येत्स्याच्छ्लौ । मिमीते[5] । मिमाते । 'श्नाभ्यस्ते'ति आतो लोपः । मिमते । ममे । माता । मास्यते । मिमीताम् । अमिमीत[6] । मिमीत । मासीष्ट । अमास्त । अमास्यत ॥ **ओहाङ् गतौ** । जिहीते । जिहाते । जिहते[7] । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत ॥ **इत्यात्मनेपदिनः** ।

**डुभृञ् धारणपोषणयोः** । बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभरांचकार । बभार । बभर्थ[8] । बभृव । बिभरांचक्रे । बभ्रे । भर्ता । भरिष्यति । भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः[9] । अबिभरुः । अबिभृत । बिभ्रीत । भ्रियात् । भृषीष्ट[10] । अभार्षीत्[11] । अभृत[12] । अभरिष्यत् । अभरिष्यत ॥ **डुदाञ् दाने** । ददाति । दत्तः ।

---

१ ऋधातोर्लङि तिपि शपि श्लौ द्वित्वे आटि इत्त्वे रपरत्वे हलादिशेषे वृद्धौ गुणे इयङि इतश्चेतीकारलोपे हल्ङ्यादिलोपे रुत्वे विसर्गे च 'ऐयः' इति रूपम् । २ गुणोऽर्तीति गुणः । ३ सर्तिशास्तीत्यङ् । ऋदृशोऽङीति गुणः । ४ 'ऋद्धनो'रितीट् । ५ 'ई हल्यघो'रितीत्त्वम् । ६ अमिमीत, अमिमाताम्, अमिमत । अमिमीथाः, अमिमाथाम् , अमिमीध्वम् । अमिमि, अमिमीवहि, अमिमीमहि । ७ 'श्नाभ्यस्तयो'रित्यालोपः । ८ क्रादित्वादिट् न । ९ हल्ङ्यादिलोपः । १० उश्चेति कित्वम् । ११ 'सिचिवृद्धि'रितिवृद्धिः । १२ 'ह्रस्वादङ्गा'दिति सिचो लोपः । उश्चेति कित्त्वम् ।

ददति । दत्ते । ददाते । ददते । ददौ । ददे । दाता । दास्यति । दास्यते । ददातु । देहि । दत्ताम् । अददात् । अदत्त । दद्यात् । ददीत । देयात्[1] । दासीष्ट । अदात् । अदातांम्[2] । अदुः ॥ **स्थाघ्वोरिच्च ।१।२।१७।** अनयोरिदन्तादेशः सिच्च किदात्मनेपदेषु । अदित[3] । अदास्यत् । अदास्यत ॥

**डुधाञ् धारणपोषणयोः ॥ दधस्तथोश्च ।८।२।३८।** द्विरुक्तस्य झषन्तस्य धाञो बशो भष् तथयोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्ते । धत्से । धद्ध्वे । धेहि[4] ॥ अदधात् । अधत्ताम् । अदधुः । अदधाः । अधत्तम् । अधत्त । अदधाम् । अदध्व । अदध्म । अधत्त । अदधाताम् । अदधत । अधत्थाः । अदधाथाम् । अधद्ध्वम् । अदधि । अदध्वहि । अदध्महि । दध्यात् । दधीत । दधीयाताम् । धेयात् । धासीष्ट । अधात् । अधाताम् । अधित[5] । अधिषाताम् । अधास्यत् । अधास्यत ।

**णिजिर् शौचपोषणयोः ॥ निजां त्रयाणां गुणः श्लौ ।७।४।७५।** निज्-विज्-विषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥ **नाभ्यस्तस्याचि पिति सार्वधातुके ।७।३।८७।** लघूपधगुणो न । नेनिजानि । नेनि-

---

१ 'एर्लिङी'त्येत्त्वम् । २ 'गातिस्थे'ति सिचो लुक् । ३ 'ह्रस्वादङ्गा'दिति सिचो लोपः । ४ 'घ्वसोरेद्धा'वित्वेत्त्वाभ्यासलोपौ । ५ 'लिङ्सिचा'विति कित्वम् ।

क्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत । एवं—**विचिर् पृथग्भावे ॥ विष्लृ व्याप्तौ ॥ इति जुहोत्यादयः ॥३॥**

---

## अथ दिवादयः

**दिवु** क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ **दिवादिभ्यः श्यन् ।३।१।६९।** कर्तरि सार्वधातुके । शपोऽपवादः । 'हलि चे'ति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् । एवं—**षिवु तन्तुसन्ताने । सिवादीनां वाऽड्व्यवायेऽपि ।८।३।७१।** परिनिविभ्यः परेषामेषां सस्य षः । पर्यषीव्यत् । पर्यसीव्यत् ॥ **नृती गात्रविक्षेपे ।** नृत्यति ।

---

१ इरित्वादिरितो वेति अङ् । २ अङभावे 'वदव्रजे'तिवृद्धिः । ३ 'अनिक्त'त्यत्र 'झलो झली'ति सिचो लोपः । 'लिङ्सिचा'विति कित्त्वम् । ४ तेन वेवेक्ति, वेविक्तः, वेविचति । वेविक्ते । विवेच । विविचे । वेक्ता । वेवेक्तु । वेविग्धि । वेविचानि । अवेवेक् । विच्यात् । विक्षीष्ट । अविचत्, अवैक्षीत्, अविक्तेत्यादिपूर्ववदेव रूपाणि । विषधातोर्लुङि—अविषत्, अवैक्षीत्, अविक्षेतिरूपाणि ।

इति जुहोत्यादयः ।

५ जेतुमिच्छा—विजिगीषा । व्यवहारः—क्रयविक्रयव्यवहारः । द्युतिः = कान्तिः । ६ तन्तुसन्तानं सूचीकर्म । ( सीना ) । ७ सिवादयः—'परिनिविभ्य' इत्यत्र पठिताः—सिवु-सह-सुट्-स्तु-स्वञ्जः । तत्र सुट्—आगमः । ८ गात्रविक्षेपः—नृत्यम् ।

ननर्त । नर्तिता ॥ **सेऽसिचि कृतचृतछृदतृदनृतः ।७।२।५७।** एभ्यः सिजिभन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति । नर्त्स्यति । नृत्यात् । अनर्तीत् ॥ **त्रसी उद्वेगे ।** 'वा भ्राशे'ति श्यन्वा । त्रस्यति । त्रसति । तत्रास ॥ **वा जॄभ्रमुत्रसाम् ।६।४।१२४।** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः । तत्रसतुः । त्रेसिथ । तत्रसिथ । त्रसिता ॥ **शो तनूकरणे ॥** **ओतः श्यनि ।७।३।७१।** लोप[1]: श्यनि । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शशुः । शाता । शास्यति । श्यतु । अश्यत् । श्येत् । शायात् । 'विभाषा घ्राधे'ति सिचो लुक् । अशात् । अशाताम् । लुगभावे 'यमरमे'ति इट्सकौ । अशासीत् । अशासिष्टाम् ॥ **छो छेदने** । छ्यति ॥ **षो अन्तकर्मणि**[2] । स्यति । ससौ । सेयात्[3] ॥ **दो अवखण्डने** । द्यति । ददौ । देयात् । अदात्[4] ॥ **व्यध ताडने** । विध्यति । विव्याध । विविधतुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ **पुष पुष्टौ** । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ्— [5]आपरस्मैपदात् । अपुषत् ॥ **शुष शोषणे** । शुष्यति । शुशोष । अशुषत् ॥ **णश अदर्शने**[6] । नश्यति । ननाश । नेशतुः ॥ **रधादिभ्यश्च ।७।२।४५।** रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह्

---

१ ओकारस्य लोपः स्यात् श्यनि परत इत्यर्थः । २ अन्तकर्म=नाशः । ३ एर्लिङीत्येत्त्वम् । ४ गातिस्थेति सिचो लुक् । ५ परस्मैपदपर्यन्तं पुषादिगणः, तेन पुषादित्वादेष्वङ्–इत्यर्थः । ६ अदर्शनं—नाशः ।

ण्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् । नेशिथ ॥ **मस्जिनशोर्झलि** ।७।१।६०। नुम् स्यात् । ननंष्ठ । नेशिव । नेश्व । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । नश्येत् । नश्यात् । अनशत् । प्रणश्यति ॥ **नशेः षान्तस्य** ।८।४।३६। णत्वं न । प्रनंष्टा । अन्तर्ग्रहणं भूतपूर्वप्रतिपत्त्यर्थम् । प्रनङ्क्ष्यति ॥ **रध हिंसा-संराद्ध्योः**[1] ॥ **रधिजभोरचि** ।७।१।६१ नुम् । ररन्ध । ररन्धतुः । ररन्धिथ । ररद्ध । ररन्धिव । ररन्ध्व ॥ **नेट्यलिटि रधेः** ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न । रधिता । रद्धा । रधिष्यति । रत्स्यति । अङि नुम् । अनिदितामिति नलोपः । अरधत् ॥

**तृप प्रीणने**[2] । तृप्यति । तत्रप्थ[3] । ततर्प्थ । ततर्पिथ । तर्पिता । तर्प्ता । त्रप्ता । * **स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः** । अतर्पीत् । अत्राप्सीत् । अताप्र्सीत् । अतृपत् ॥ **दृप हर्षमोहनयोः** । दृप्यति । **रधादित्वादिमौ**[4] **वेट्कावमर्थमनुदात्तता**[5] ॥

**द्रुह जिघांसायाम्**[6] । द्रुह्यति । 'वा द्रुहे'ति वा घः । पक्षे ढः । दुद्रोग्ध । दुद्रोढ । दुद्रोहिथ । द्रोहिता । द्रोग्धा । द्रोढा । अद्रुहत् ॥ **मुह वैचित्त्ये** । **वैचित्त्यम्**—अविवेकः । मुह्यति । मुमोहिथ । मुमोग्ध । मुमोढ । मोहिता । मोग्धा । मोढा । मोहिष्यति । मोक्ष्यति । अमुहत् ॥ **ष्णुह उद्गिरणे** । स्नुह्यति । सुष्णोह । सुष्णोहिथ । सुष्णोग्ध । सुष्णोढ । सुष्णुहिव ।

---

१ संराद्धिः = निष्पत्तिः । ( रान्धना ) । २ प्रीणनं—तृप्तिः, तर्पणा च । ३ अनुदात्तस्य चर्दुपधस्येत्यम्वा । ४ इमौ = तृपदृपौ । **अमर्थम्**— ५ अनुदात्तस्येत्यमर्थम् । ६ **जिघांसा**—हन्तुमिच्छा । द्रोहः ।

सुष्णुह्व । स्नोहिता । स्नोग्धा । स्नोढा । स्नोहिष्यति । स्नोक्ष्यति । अस्नुहत् ॥ **ष्णिह[1] प्रीतौ** । स्निह्यति । सिष्णेह । स्नेहिता । स्नेग्धा । स्नेढा । अस्निहत् ॥ **तुष तुष्टौ** । तुष्यति ॥ **दुष वैकृत्ये** । दुष्यति ॥ **श्लिष आलिङ्गने** । श्लिष्यति ॥ **श्लिष आलिङ्गने** ।३।१।४६। च्लेः क्सः । अश्लिक्षत् कन्यां देवदत्तः । आलिङ्गने किम् ? समश्लिषज्जतु काष्ठम् । प्रत्यासत्ताविह श्लिषिः ॥ **क्रुध क्रोधे** । क्रुध्यति । क्रोद्धा । क्रोत्स्यति ॥ **क्षुध बुभुक्षायाम्** । क्षुध्यति ॥ **शुध शौचे** । शुध्यति[2] । शोद्धा । शोत्स्यति ॥ **षिधु संराद्धौ** । सिध्यति[3] ॥ **शमु उपशमे** ॥ **शमामष्टानां दीर्घः श्यनि** ।७।३।७४। शम्-तम्-दम्-श्रम्-भ्रम्-शम्-क्लम्-मदामचो दीर्घः । प्रणिशाम्यति[4] । शेमतुः । शेमुः । शेमिथ । शमिता । अशमत् ॥

**तमु काङ्क्षायाम्** । ताम्यति । तमिता । अतमत् ॥ **दमु उपशमे** । दाम्यति । दमिता । अदमत् ॥ **श्रमु तपसि खेदे च** । श्राम्यति । अश्रमत् ॥ **भ्रमु अनवस्थाने** । वा भ्राशेति श्यन्वा । भ्राम्यति । भ्रमति । **वा जॄभ्रमुत्रसाम्** । भ्रेमतुः । बभ्रमतुः । अभ्रमत् ॥ **क्षमू सहने** । क्षाम्यति । चक्षमिथ । चक्षण्व । क्षमिता । क्षन्ता । अयं न षित् । भ्वादिस्तु षित् ॥ **अषितः[5] क्षाम्यतेः क्षान्तिः क्षमूषः क्षमतेः क्षमा ॥ क्लमु**

१ प्रीतिः—स्नेहः । २ शुशोध । शोद्धा । शोत्स्यति । शुध्यतु । अशुध्यत् । शुध्येत् । शुध्यात् । अशुधत् । अशोत्स्यत् । ३ सिषेध । सेद्धा । सेत्स्यति । सिध्यतु । असिधत् । असेत्स्यत् । ४ 'म्वोश्च'ति मस्य नत्वे णत्वम् । ५ क्षाम्यतेः–दिवादिपठितस्य क्षमूधातोः । क्षान्तिरिति क्तिनि 'अनुनासिकस्य क्वी'ति

क्लान्तौ । 'ष्ठिवुक्लमुचमा'मिति दीर्घः । क्लाम्यति । क्लमिता । अक्लमत् ॥ **मदी हर्षे** । माद्यति । अमदत् ॥ **असु क्षेपणे** । अस्यति । आस । असिता ॥ **अस्यतेस्थुक्** ।७।४।१७। अङि । अस्यतीत्यङ् । आस्थत् ॥ **यसु प्रयत्ने** ॥ **यसोऽनुपसर्गात्** ।३।१।७१। **संयसश्च** ।३।१।७२। श्यन्वा । यस्यति । यसति । संयस्यति । संयसति । अनुपसर्गात्किम् ? प्रयस्यति ॥

**जसु मोक्षणे** । जस्यति ॥ **तसु उपक्षये** ॥ **दसु च** । तस्यति । अतसत् । दस्यति । अदसत् ॥ **वसु स्तम्भे** । वस्यति । 'न शसददे'ति निषेधः । ववास । ववसतुः । वशादिरिति मते तु—वेसतुः । वेसुः ॥ **व्युष विभागे** । व्युष्यति ॥ **विस प्रेरणे** । विस्यति । अविसत् ॥ **वुस उत्सर्गे** । वुस्यति ॥ **मुस खण्डने** । मुस्यति ॥ **मसी परिणामे** । **परिणामो** विकारः ॥ **लुट विलोडने** । लुट्यति ॥ **उच समवाये** । उच्यति । गुणः । 'अभ्यासस्यासवर्णे' उवङ् । उवोच । ऊचतुः । ऊचुः ॥ **भृशु भ्रंशु अधःपतने** । भृश्यति । बभर्श । अभृशत् । अनिदितामिति नलोपः । भ्रश्यति । बभ्रंश । अभ्रशत् ॥ **कृश तनूकरणे** । कृश्यति ॥ **ञितृषा पिपासायाम्** । तृष्यति ॥ **हृष तुष्टौ** । श्यन्नङौ भौवादिकाद्विशेषः । हृष्यति । अहृषत् ॥ **रुष रिष हिंसायाम्** । 'तीषसहे'ति वेट् । रोषिता । रोष्टा । रेषिता । रेष्टा ॥ **कुप क्रोधे** । कुप्यति । **गुप व्याकुलत्वे** ॥ **लुभ गार्ध्ये** ।

---

दीर्घः । क्षमतेः—भ्वादिपठितस्य क्षमूषः । 'षिद्भिदादिभ्य' इत्यङि टापि—क्षमेति रूपम् । १ प्रयत्नः=प्रयासः ।

गार्ध्यमाकाङ्क्षा । लोभिता[1] । लोब्धा[2] । लोभिष्यति । श्वादेर-[3]वृत्करणाल्लोभतीत्यप्याहुः ॥ **क्षुभ सञ्चलने** । क्षुभ्यति ॥ **क्लिदू आर्द्रीभावे** । क्लिद्यति । चिक्लेदिथ । चिक्लेत्थ । चिक्लिदिव । चिक्लिद्व । चिक्लिदिम । चिक्लिद्म ॥ क्लेदिता । क्लेत्ता । **ञिमिदा स्नेहने** ॥ **मिदेर्गुणः** ।७।३।८२। मिदेरिको गुण इत्संज्ञकशकारादौ प्रत्यये । मेद्यति । अमिदत् ॥ **ञिक्ष्विदा स्नेहनमोचनयोः** । क्ष्विद्यति ॥ **ऋधु वृद्धौ** । ऋध्यति । आनर्ध ॥ **गृधु अभिका-ङ्क्षायाम्[4]** । गृध्यति । अगृधत् । वृत्[5] । **इति परस्मैपदिनः** ।

**षूङ् प्राणिप्रसवे** । सूयते । सुषुवे । क्रादिनियमान्नित्यमिट् । सुषुविषे । सुषुविवहे । सोता । सविता । **दूङ् परितापे** । **दीङ् क्षये** ॥ **दीङो युडचि क्ङिति** ।६।४।६३। दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । * **वुग्युटा[6]वुवङ्यणोः सिद्धौ वक्तव्यौ** । दिदीये ॥ **मीनातिमिनोतिदीङां ल्यपि च** ।६।१।५०। एषामात्वं ल्यपि चादशित्येज्निमित्ते । दाता । दास्यते । अदास्त ॥ **डीङ् विहायसा गतौ** । डीयते ॥ **पीङ् पाने** । पीयते ॥ **माङ् माने** । मायते । ममे । माता ॥ **जनी प्रादुर्भावे** ॥ **ज्ञाजनोर्जा** ।७।३।७९। शिति । जायते । 'गमहन-जने'ति उपधाया लोपः । **स्तोः श्चुना श्चुः** । जज्ञे । जनिता ।

---

१ तीषसहेति वेट् । २ झषस्तथोरिति धत्वम् । ३ अवृत्करणात्=तस्याऽसमाप्तत्वात् । आकृतिगणत्वादित्यर्थः । ४ अभिकाङ्क्षा = लालसा । ५ वृत् = पुषादयो वृत्ताः । ६ आभीयत्वेन युटोऽसिद्धत्वमाशङ्क्याह—**सिद्धाविति** । तेन 'एरनेकाच' इति यण्न ।

जनिष्यते ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्** ।३।१।६१। एभ्यश्च्लेश्चिण्वा एकवचने तशब्दे परे॥ **चिणो लुक्** ।६।४।१०४। चिणः परस्य तशब्दस्य लुक् ॥ **जनिवध्योश्च** ।७।३।३५। न वृद्धिश्चिणि ञ्णिति कृति च । अजनिष्ट ॥ **दीपी दीप्तौ** । दीप्यते । दिदीपे । अदीपि । अदीपिष्ट ॥ **पद गतौ** । पद्यते । पेदे । पत्ता । पद्येत । पत्सीष्ट ॥ **चिण्ते पदः** ।३।१।६०। अपादि । अपत्साताम् । अपत्सत ॥ **विद सत्तायाम्** । विद्यते । वेत्ता । वित्सीष्ट[1] । अवित्त[2] ॥ **बुध अवगमने** । बुध्यते । बोद्धा । 'एकाचो बशो भष् झषन्तस्ये'ति भष्भावः । भोत्स्यते ।भुत्सीष्ट । अबोधि । अबुद्ध । अभुत्साताम् ॥ **युध संप्रहारे** । युध्यते । युयुधे । योद्धा । अयुध्यत । युध्येत । युत्सीष्ट । अयुद्ध । अयुत्स्यत ॥ **सृज विसर्गे** । सृज्यते । ससृजे । 'सृजिदृशो-र्झल्यमकिती'त्यमागमः । स्रष्टा । स्रक्ष्यते । सृक्षीष्ट । 'लिङ्सिचा'-विति कित्त्वम् । असृष्ट । असृक्षाताम् ॥ **मीङ् हिंसायाम्** । मीयते । मिम्ये । मीयताम् । अमीयत । मीयेत । मेषीष्ट । अमेष्ट । अमेषाताम् ॥ **रीङ् स्रवणे** । रीयते ॥ **लीङ् श्लेषणे** । लीयते ॥ **विभाषा लीयतेः** ।६।१।५१। 'लीयते'रिति यका निर्देशो नतु श्यना । लीलीङोरात्वं स्यादेज्विषये ल्यपि च । लेता । लाता । लेष्यते । लास्यते । एज्विषये किं ? लीयते । लिल्ये । **व्रीङ् वृणोत्यर्थे**[3] । व्रीयते । विव्रिये । इत्यात्मनेपदिनः ।

१ लिङ्सिचाविति कित्त्वान्न गुणः । २ झलो झलीति सिज्लोपः । 'लिङ्सिचा'विति कित्त्वम् । ३ वृणोत्यर्थे—वरणे । वरणञ्च, स्वीकारः ।

**मृष तितिक्षायाम्** । मृष्यति । मृष्यते । ममर्ष । ममर्षिथ । ममृष । ममृषिषे । मर्षितासि । मर्षितासे । मर्षिष्यति । मर्षिष्यते । मृष्यतु ॥ **णह बन्धने** । नह्यति । नह्यते । ननाह । 'नहो ध' इति धः । ननद्ध । नेहिथ । नेहे । नद्धा । नत्स्यति । अनात्सीत् । अनद्ध ॥ **रञ्ज रागे** । 'अनिदिता'मिति नलोपः । रज्यति । रज्यते । ररञ्ज । ररञ्जे । ररङ्क्थ । **शप आक्रोशे**[1] । शप्यति । शप्यते । **शक विभाषितोऽमर्षणे**[2] । **विभाषित इति** । उभयपदीत्यर्थः । शक्यति शक्यते हरिं द्रष्टुं भक्तः । शशाक । शेकिथ । शशक्थ । शेके । शक्ता । शक्ष्यति । शक्ष्यते । पुषादित्वादङ् । अशकत् । अशक्त । सेट्कोऽयमित्येके । तन्मते नाऽनिट्केषु लृदित्पठितः । शकिता । शकिष्यति । शकिष्यते । **इति दिवादिप्रकरणम्** ॥ ४ ॥

---

## अथ स्वादयः ॥

**षुञ् अभिषवे** ॥ अभिषवः स्नपनं पीडनं स्नानं सुरासन्धानं[3] च । तत्र स्नानेऽकर्मकः ॥ **स्वादिभ्यः श्नुः** ।३।१।७३। कर्तरि[4] सार्वधातुके । शपोऽपवादः । सुनोति । सुनुतः[5] । 'हुश्नुवो'रिति यण् । सुन्वन्ति । 'लोपश्चास्ये'ति प्रत्ययोतो लोपः[6] । सुन्वः ।

---

१ आक्रोशः—निन्दा, शपनञ्च । ( 'गाली देना' 'शाप देना' ) । २ अमर्षणे—असहने । * इति दिवादयः । *

३ सुरासन्धानं—सुरोत्पादनम् । ४ कर्त्रर्थे सार्वधातुके परे स्वादिभ्यः श्नुः स्यात् । ५ 'सार्वधातुकमपि'दिति तसो ङित्त्वान्न गुणः । ६ वैकल्पिको लोपः । एवं 'सुन्मः' 'सुनुमः' इत्यत्रापि बोध्यम् ।

सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुनुषे । सुषाव[1] । सुषुवे । सोता । सुनु[2] । सुनवानि[3] । सुनवै । सुनुयात्[4] ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु ।७।२।७२।** सिच इट् । असावीत् । असोष्ट । अभिषुणोति[5] । 'प्राक्सिता'दिति षत्वम् । अभ्यषुणोत् ॥ **सुनोतेः स्यसनोः ।८।३।११७।** सस्य षो न । विसोष्यति[6] ॥ **षिञ् बन्धने ।** विसिनोति ॥ **चिञ् चयने[7] ।** चिनोति । चिनुते ॥ **विभाषा चेः ।७।३।५८।** अभ्यासाच्चेः कुत्वं वा सनि लिटि च । चिकाय । चिचाय । चिक्ये । चिच्ये । अचैषीत्[8] । अचेष्ट ॥

**स्तृञ् आच्छादने ।** स्तृणोति । स्तृणुते । तस्तार[9] । तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः ।७।२।४३।** ऋदन्तात्संयोगादेर्लिङ्सिचोरिड्वा तङि । स्तरिषीष्ट । स्तृषीष्ट[10] । अस्तरिष्ट । अस्तृत[11] ॥ **धुञ् कम्पने ।** धुनोति । धुनुते । दुधाव[12] ।

---

१ सुषुवतुः, सुषुवुः । सुषविथ–सुषोथ, सुषुवथुः, सुषुव । सुषाव–सुषव, सुषुविव, सुषुविम । २ 'उतश्च प्रत्यया'दिति हेर्लुक् । ३ 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेनाऽङित्त्वात्तन्निषेधाऽप्रसक्तेः । ४ आशीर्लिङि तु 'अकृत्सार्व'ेति दीर्घे 'सूयात्' इति रूपम् । ५ 'उपसर्गात्सुनोती'ति षत्वम् । ६ 'सात्पदाद्यो'रिति षत्वनिषेधः । 'उपसर्गात्सुनोती'ति षत्वन्तु न, तत्राऽस्य पाठाभावात् ।

७ चयनं—रचनाविशेषः । ( 'चिनना' ) । ८ 'सिचि वृद्धि'रिति वृद्धिः । ९ तस्तरतुः, तस्तरुः । 'ऋतश्च संयोगादे'रिति गुणः । तस्तर्थ, तस्तरथुः, तस्तर । तस्तार–तस्तर, तस्तरिव, तस्तरिम । १० 'उश्चे'ति कित्त्वम् । ११ 'उश्चे'ति कित्त्वम् । 'ह्रस्वादङ्गा'दिति सिचो लोपः । परस्मैपदे–अस्तार्षीत्, अस्तार्ष्टामित्यादि ।

१२ दुधुवतुः, दुधुवुः । दुधविथ–दुधोथ, दुधुवथुः, दुधुव । दुधाव–

दुधुवे। अधौषीत्[1]। अधोष्यत् ॥ **धूञ्[2] कम्पने**। धूनोति। धूनुते। 'स्वरतिसूती'ति वेट्। दुधविथ। दुधोथ। किति लिटि तु—॥ **श्र्युकः किति** ।७।२।११। श्रिञ एकाच उगन्ताच्च गित्कितोरिण्न। इति प्राप्ते क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुविम। अधावीत्[3]। अधविष्ट[4]। अधोष्ट ॥ **कृञ् हिंसायाम्**। कृणोति। कृणुते। चकार। चकर्थ[5]। चक्रे। क्रियात्। कृषीष्ट[6]। अकार्षीत्[7]। अकृत[8]॥

**वृञ् वरणे**। वृणोति। वृणुते॥ **बभूथाततन्थजगृम्भववर्थेति निगमे** ।७।२।६४। एषां वेद इडभावो निपात्यते। तेन भाषायां थलीट्[9]। ववरिथ। ववृव[10]। ववृवहे। **वॄतो वा**। वरीता। वरिता॥

**लिङ्सिचोरात्मनेपदेषु** ।७।२।४२। वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड् वा तङि॥ **न लिङि** ।७।२।३९। वॄतो लिङ इटो न दीर्घः। वरिषीष्ट। वृषीष्ट[11]। अवारीत्[12]। अवरिष्ट[13]।

---

दुधव, दुधुविव, दुधुविम। धोता। धोष्यति। धुनोतु। धुनुताम्। अधुनोत्। अधुनुत। धुनुयात्। धुन्वीत। धूयात्। धोषीष्ट। इत्यादि। १ 'सिचि वृद्धि'रिति वृद्धिः। २ दीर्घान्तोऽयम्।

३ 'स्तुसुधूञ्भ्य' इति नित्यमिट्। ४ 'स्वरती'ति वेट्। ५ 'कृसृभृवृ' इतीण्निषेधः। एवं—चकृव। चकृम। ६ 'उश्चे'ति कित्त्वान्न गुणः। ७ 'सिचि वृद्धि'रिति वृद्धिः। ८ 'ह्रस्वादङ्गा'दिति सिचो लोपः। 'उश्चे'ति कित्त्वम्। ९ तेन क्रादित्वेऽपीण्निषेधो न। १० क्रादित्वान्नेट्। ११ इडभावपक्षे 'उश्चे'ति कित्त्वान्न गुणः। १२ 'सिचि वृद्धि'रिति वृद्धिः। 'सिचि च परस्मैपदेषु' इति निषेधान्न 'वृतो वे'ति दीर्घः। १३ 'लिङ्सिचो'रिति वेट्। इट्पक्षे दीर्घविकल्पः।

किरति। *इत्वोत्वाभ्यां गुणवृद्धी विप्रतिषेधेन। चकार। चकरतुः[1]। करिता। करीता। कीर्यात्। अकारीत्॥ **किरतौ लवने।६।१।१४०।** उपात्किरतेः सुट् छेदेऽर्थे। उपस्किरति। *अडभ्यासव्यवायेऽपि सुट्कात्पूर्व इति वक्तव्यम्। उपास्किरत्। उपचस्कार॥ **हिंसायां प्रतेश्च।६।१।१४१।** उपात्प्रतेश्च किरतेः सुट् हिंसायाम्। उपस्किरति। प्रतिस्किरति॥

**गॄ निगरणे। अचि विभाषा।८।२।२१।** गिरते रेफस्य लोऽजादौ प्रत्यये। गिरति। गिलति। गरिता। गरीता। गलिता। गलीता। **प्रच्छ ज्ञीप्सायाम्।** 'ग्रहिज्ये'ति संप्रसारणम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्[3]॥ **मृङ् प्राणत्यागे॥ म्रियतेर्लुङ्लिङोश्च।१।३।६१।** लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङानौ नान्यत्र। ङित्वं स्वरार्थम्। रिङ्[4]। इयङ्। म्रियते। ममार। ममर्थ[5]। मम्रिम[6]। मर्ता। मरिष्यति। मृषीष्ट। अमृत॥ **पृङ् व्यायामे।** प्रायेणाऽयं व्याङ्पूर्वः। व्याप्रियते। व्यापप्रे। व्यापरिष्यते। 'ह्रस्वादङ्गा'दिति सिज्लोपः। व्यापृत। व्यापृषाताम्। **जुषी प्रीतिसेवनयोः।** जुषते। जुजुषे। **ओविजी भयसंचलनयोः।** प्रायेणायमुत्पूर्वः। उद्विजते॥ **विज इट्।१।१।२।** विजेः पर इडादिप्रत्ययो ङिद्वत्। उद्विजिता। उद्विजिष्यते। **ओलजी**

---

१ 'ऋच्छत्यृता' मिति गुणः। २ 'वृतो वे'तिदीर्घः। ३ वदव्रजेति हलन्तलक्षणा वृद्धिः। व्रश्चेति छस्य षः। ४ 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। ५ ऋदन्तत्वान्नेट्। ६ क्रादिनियमादिट्।

**ओलस्जी व्रीडने** । लजते । लेजे । लज्जते । ललज्जे ॥

**इति तुदादयः ॥६॥**

---

## अथ रुधादयः ।

**रुधिर् आवरणे ॥ रुधादिभ्यः श्नम्** ।३।१।७८। शपोऽपवादः । रुणद्धि । **श्नसोरल्लोपः** । रुन्द्धः । रुन्धन्ति । रुणत्सि । रुन्द्धः । रुन्द्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुधन्ते । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्द्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्द्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत् २ । अरुन्धाम् । अरुन्धन् । 'दश्चे'ति रुः । अरुणः । अरुणत् २ । अरुन्धम् । अरुन्द्ध । अरुन्द्ध । अरुन्धाताम् । अरुन्धत । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत् । अरौत्सीत् । अरोत्स्यत् । अरोत्स्यत ॥

**भिदिर् विदारणे ॥ छिदिर् द्वैधीकरणे ॥ युजिर् योगे ॥**

---

१ रुधादिभ्यः श्नम् स्यात् कर्त्रर्थे सार्वधातुके परे । 'अयं मित्त्वादन्त्यादचः परो भवति । नित्यत्वाच्च लघूपधगुणं बाधते । २ अत्र 'रुन्ध् तस्' इत्यवस्थायाम् 'अटकुप्वा' ङिति णत्वस्याऽसिद्धत्वान्नश्चापदान्तस्येत्यनुस्वारेऽनुस्वारस्य ययी'ति परसवर्णे तस्याऽसिद्धत्वाण्णत्वं न । ३ लङि हल्ङ्यादिना तिपस्तकारस्य लोपः, धस्य चर्त्वविकल्पः । ४ सिपः सकारस्य हल्ङ्याभ्य इति लोपे दश्चेति सत्वविकल्पः । ५ 'लिङ्सिचा'विति कित्त्वम् ।

६ इरित्वादङ् वा ।

**रिचिर् विरेचने** । रिणक्ति । रिङ्क्ते । रिरेच । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त ॥ **विचिर् पृथग्भावे** । विनक्ति । विङ्क्ते ॥ **क्षुदिर् संपेषणे** । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त ॥ **उच्छृदिर् दीप्तिदेवनयोः** । छृणत्ति । छृन्ते । चच्छर्द । 'सेसिची'ति वेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट ॥ **उतृदिर् हिंसानादरयोः** । तृणत्ति । तृन्ते ॥ **कृती वेष्टने** । कृणत्ति ॥ **तृह हिसि हिंसायाम्** ॥ **तृणह इम्** ।७।३।९२। तृहः श्नमि कृते इम् हलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥ **श्नान्नलोपः** ।६।४।२३। हिनस्ति । जिहिंस । हिंसिता ॥ **उन्दी क्लेदने** । उनत्ति । उन्तः । उन्दन्ति । उन्दांचकार । औनत् । औन्तात् । औन्दन् । औनः । औनदम् ॥ **अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु** । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अञ्जिता । अङ्क्ता । अङ्ग्धि । अनजानि । आनक् । **अञ्जेः सिचि** ।७।२।७१। अञ्जेः सिचो नित्यमिट् । आञ्जीत् ॥ **तञ्चू संकोचने** । तनक्ति । तङ्क्ता । तञ्चिता ॥ **ओविजी** भयसञ्चलनयोः । विनक्ति । विङ्क्तः । 'विज इ'डिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ॥ **शिष विशेषणे** ।

---

१ वेष्टनं-कर्त्तनम् । ( कातना ) । २ तृहो लटि तसि श्नमिणत्वे 'तृण ह् तस्' इत्यत्र श्नसोरित्यल्लोपे ढत्वधत्वष्टुत्वढलोपाः । ३ श्नमः परस्य नस्य लोपः स्यात् । ४ 'इजादे'रित्याम् । ५ ऊदित्त्वादिड्वा ।

शिनष्टि । शिंष्टः । शिंषन्ति । शिंनक्षि[1] । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि[2] । शिनषाणि । शिंष्यात् । शिष्यात् । अशिषत्[3] । अशेक्ष्यत् ॥ एवं–पिष्लृ संचूर्णने ॥ **भञ्जो आमर्दने** । भनक्ति । बभञ्जिथ । बभङ्क्थ । भङ्क्ता ॥

**भुज पालनाऽभ्यवहारयोः**[4] । भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥ **भुजोऽनवने**[5] ।१।३।६६। तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति[6] ॥ **ञिइन्धी दीप्तौ** । इन्द्धे । इन्धाते । इन्धते । इन्त्से । इन्धांचक्रे । इन्धिता । इन्द्धाम् । इन्धाताम् । इन्धताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धत । ऐन्द्धाः ॥ **विद विचारणे** । विन्ते । वेत्ता ॥

**इति रुधादयः ॥७॥**

## अथ तनादयः ।

**तनु विस्तारे ॥ तनादिकृञ्भ्य उः**[7] ।३।१।७९। तनोति । तनुते । ततान । तेने । तनिता । तनिष्यति । तनिष्यते । तनोतु[8] । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत्[9] । अतानीत् । **तनादिभ्यस्त-**

---

आञ्जीदित्यत्र ऊदिल्लक्षणे वैकल्पिके इटि प्राप्ते नित्याऽर्थोऽयमारम्भः । १ 'षढोः कः सि' । २ हेर्धिः, जश्त्वं, ष्टुत्वम्, झरो झरीति वा डकारलोपः । अनुस्वारपरसवर्णौ । शिण्ढि । शिण्ड्ढि । ३ लृदित्त्वादङ् । ४ अभ्यवहारः=भोजनम् । ५ अनवने=पालनभिन्ने–भोजनेऽर्थे । ६ पालयतीत्यर्थः । इति रुधादयः । ७ कर्त्रर्थे सार्वधातुके परे तनादिभ्यः कृञश्च उप्रत्ययः स्यात्स्वार्थे । ८ 'तनु इत्यत्र 'उतश्च प्रत्यया'दिति हेर्लुक् । ९ 'अतो हलादे'रिति वृद्धिविकल्पः ।

थासोः ।२।४।७९। तनादेः सिचो वा लुक् तथासोः । 'अनुदात्तोपदेशे'ति नलोपः । अतत । अतनिष्ट[1] । अतथाः । अतनिष्ठाः । अतनिष्यत् । अतनिष्यत ॥ षणु दाने । सनोति । सनुते । 'ये विभाषे'ति आत्वम् । सायात् । सन्यात् ॥ जनसनखनां सञ्झलोः ।६।४।४२। एषामाकारो झलादौ सनि झलादौ क्ङिति । असात । असनिष्ट । असाथाः । असनिष्ठाः ॥ क्षणु हिंसायाम् । क्षणोति । क्षणुते । 'ह्मयन्ते'ति न वृद्धिः । अक्षणीत्[3] । अक्षत । अक्षणिष्ट । अक्षथाः । अक्षणिष्ठाः ॥ क्षिणु च । उप्रत्यये लघूपधगुणो वा । क्षिणोति । क्षेणोति । क्षेणिता । अक्षेणीत् । अक्षित । अक्षेणिष्ट ॥ तृणु अदने । तृणोति । तर्णोति । तृणुते । तर्णुते । घृणु दीप्तौ घृणोति । घर्णोति ।

डुकृञ् करणे । करोति । अत उत्सार्वधातुके । कुरुतः । 'हलि चे'ति दीर्घे प्राप्ते—॥ न भकुर्छुराम् ।८।२।७९। भस्य कुर्छुरोरुपधाया न दीर्घः । कुर्वन्ति । नित्यं करोतेः ।६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपो म्वोः । कुर्वः । कुर्मः । कुरुते । चकार । चकर्थ[4] । चकृव । चक्रे । कर्ता । करिष्यति[5] । करिष्यते ।

१ थासा साहचर्यादेकवचनं तशब्दो गृह्यते, नतु मध्यमपुरुषबहुवचनस्य ग्रहणं, तेनेह न-यूयमतनिष्ट । २ लुगभावे वलादिलक्षण इट् । अतत-अतनिष्ट, अतनिषाताम्, अतनिषत । अतथाः—अतनिष्ठाः, अतनिषाथाम्, अतनिढ्वम् । अतनिषि, अतनिष्वहि, अतनिष्महीति रूपाणि ।

३ 'अतो हलादे' रिति वृद्धिरत्र प्राप्ता ह्मयन्तेति निषिद्धा । ४ क्रादिनियमान्नेट् । ५ 'ऋद्धनो' रितीट् ।

करोतु । कुरुताम् । अकरोत् । अकुरुत ॥ **ये च** ।६।४।१०९। कृञ उलोपो यादौ प्रत्यये । कुर्यात् । कुर्वीत । क्रियात् । कृषीष्ट[1] । अकार्षीत्[2] । अकृत[3] । अकरिष्यत् । अकरिष्यत ॥

**संपरिभ्यां करोतौ भूषणे** ।६।१।१३७। **समवाये च** ।६।१।१३८। आभ्यां परस्य करोतेः सुट् भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । संपूर्वस्य क्वचिदभूषणेऽपि सुट् । 'संस्कृतं भक्षाः' इति ज्ञापकात् ।

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** ।६।१।१३९। कृञः सुट्, चात्प्रागुक्तयोरर्थयोः । **प्रतियत्नो** गुणाधानम् । विकृतमेव **वैकृतं** विकारः । **वाक्याध्याहारः** आकाङ्क्षितैकदेशपूरणम् । उपस्कृता[4] कन्या । उपस्कृता[5] ब्राह्मणाः । एधोदकस्योपस्कुरुते[6] । उपस्कृतं[7] भुङ्क्ते । उपस्कृतं[8] ब्रूते ॥ **वनु याचने** । वनुते । ववने ॥ **मनु अवबोधने** । मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट ॥ **इति तनादयः** ॥८॥

## अथ क्र्यादयः ॥

**डुक्रीञ् द्रव्यविनिमये** ॥ **क्र्यादिभ्यः श्ना** ।३।१।८१।[9] शपोऽपवादः । क्रीणाति । **ई हल्यघोः** । क्रीणीतः । 'श्नाभ्य-

---

१ 'उश्चे'ति कित्त्वम् । २ 'सिचि वृद्धि'रिति वृद्धिः । ३ 'ह्रस्वादङ्गा'-दिति सिज्लोपः । 'उश्चे'ति कित्त्वम् । ४ अलङ्कृतेत्यर्थः । ५ समुदिता इत्यर्थः । ६ एधः = काष्ठं, दकस्य=जलस्य, उपस्कुरुते=गुणमाधत्ते । ७ विकृतं यथा स्यात्तथा भुङ्क्ते इत्यर्थः । ८ वाक्याध्याहारेण ब्रूते इत्यर्थः । **इति तनादयः** । ९ क्र्यादिभ्यः श्ना स्यात् कर्त्रर्थे सार्वधातुके परे ।

**स्तयोरातः**[1] । क्रीणन्ति । क्रीणासि । क्रीणीथः[2] । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते[3] । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः[4] । चिक्रियुः । चिक्रयिथ । चिक्रेथ[5] । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते । क्रीणातु । क्रीणीतात् । क्रीणीताम् । क्रीणीताम् । क्रीणाताम् । क्रीणताम् । क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत ॥ **प्रीञ् तर्पणे कान्तौ च** । प्रीणाति । प्रीणीते ॥ **श्रीञ् पाके** । श्रीणाति । श्रीणीते ॥ **मीञ् हिंसायाम्** । प्रमीणाति । **हिनुमीना** इति णत्वम् । प्रमीणीते । 'मीनाती'त्यात्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत्[6] । अमासिष्टाम् । अमास्त ।

**षिञ् बन्धने** । सिनाति । सिनीते । सिषाय । सिष्ये । सेता ॥ **स्कुञ् आप्रवणे**[7] ॥ **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च** ।३।१।८२। चात् श्ना । स्कुनोति । स्कुनुते । स्कुनाति । स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत्[8] । अस्कोष्ट । स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधनार्थाः परस्मैपदिनः ॥

---

१ ईत्त्वात्पूर्वं झेरन्तादेशः परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । ततः श्नसोरित्याल्लोपः । एवं क्रीणते इत्यादौ झस्याऽदादेशेऽपि बोध्यम् । २ 'ई हल्यघो'रितीत्त्वम् । ३ 'श्नाभ्यस्तयो' रित्यालोपः । ४ अचि श्नुधात्वितीयङ् । ५ अजन्तत्वाद्भारद्वाजनियमादिट् । ६ यमरमेतीट्सकौ । ७ आप्रवणम्—उत्प्लवनमुद्धरणञ्च । ८ 'सिचि वृद्धि'रिति वृद्धिः ।

**हलः श्नः शानज्झौ** ।३।१।८३। स्तभानं[1] ॥ **जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** ।३।१।५८। च्लेरङ् वा । व्यष्टभत् । अस्तम्भीत् ॥ **युञ् बन्धने** । युनाति । युनीते । योता ॥ **क्नूञ् शब्दे** । क्नूनाति । क्नूनीते । क्नविता ॥ **द्रूञ् हिंसायाम्** । द्रूणाति । द्रूणीते । **पूञ् पवने** । **प्वादीनां ह्रस्वः** ।७।३।८०। पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः शिति । पुनाति । पुनीते । पविता ॥ **लूञ् छेदने** । लुनाति । लुनीते ॥ **स्तॄञ् आच्छादने** । स्तृणाति । स्तृणीते । तस्तार । तस्तरतुः[2] । तस्तरे । स्तरिता । स्तरीता । स्तृणीयात् । स्तृणीत । **'ॠत इद्धातोः'** । स्तीर्यात् । स्तरिषीष्ट[3] । स्तीर्षीष्ट[4] ॥ **'सिचि च परस्मैपदेषु'** । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः अस्तरिष्ट । अस्तीर्ष्ट । **कॄञ् हिंसायाम्** । कृणाति । कृणीते । चकार । चकरे । **वॄञ् वरणे** । वृणाति । वृणीते । ववार । ववरे । वरिता । वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट । वूर्षीष्ट । अवारीत् । अवारिष्टाम् । अवरिष्ट । अवरीष्ट । अवूर्ष्ट ॥ **धूञ् कम्पने** । धुनाति । धुनीते । दुधविथ । दुधोथ । दुधुविव । धोता । धविता । **स्तुसुधूञ्भ्यः परस्मैपदेषु** । अधावीत् । अधविष्ट[5] ॥

---

१ 'अतो हे' रित्यारम्भसामर्थ्यात्सन्निपातपरिभाषाया अप्रवृत्तेरतो हेरिति हेर्लुक् । अतएव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्ता । २ 'ऋच्छत्यॄता'मिति गुणः । ३ 'न लिङी'ति दीर्घनिषेधः । ४ 'उश्चे'ति कित्त्वम् । इत्त्वे रपरत्वे 'हलि चे'तिदीर्घः । ५ अनेन दीर्घनिषेधः ।

**ग्रह उपादाने** । गृह्णाति । गृह्णीते । जग्राह । जगृहे ॥ **ग्रहोऽलिटि दीर्घः** ।७।२।३७। एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु । गृहाण[1] । गृह्यात् । ग्रहीषीष्ट । 'ह्यन्ते'ति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् ॥ **कुष निष्कर्षे** । कुष्णाति । कोषिता ॥

**निरः कुषः** ।७।२।४६। वलादेरार्धधातुकस्येड्वा । निष्कोषिता । निष्कोष्टा । निरकोषीत् । 'शल इगुपधा'दिति क्सः । निरकुक्षत् ॥ **अश भोजने** । अश्नाति । आश । अशिता । अश्नातु । अशान ॥ **ज्ञा अवबोधने** । 'ज्ञाजनो'रिति जादेशः । जानाति । जज्ञौ ॥ **पॄ पालनपूरणयोः** । पृणाति ॥ **शॄ हिंसायाम्** । शृणाति । 'शॄदॄप्रां ह्रस्वो वे'ति पक्षे यण् । शश्रतुः । शशरतुः । **दॄ विदारणे** । दृणाति । दद्रतुः । ददरतुः ॥ **जॄ वयोहानौ** । जृणाति ॥ **मुष स्तेये** । मुष्णाति । मोषिता ॥ **पुष पुष्टौ** । पुष्णाति । पोषिता ॥ **बन्ध बन्धने** । बध्नाति । बबन्ध । बबन्धिथ । बन्धा । भन्त्स्यति[2] । अभान्त्सीत्[3] । अबान्धाम् । अभान्त्सुः ॥ **क्लिशू विबाधने**[4] । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् ॥ **वृङ् संभक्तौ** । वृणीते । वव्रे । ववृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत ॥

**इति क्र्यादयः ॥ ९ ॥**

---

१ 'हलःश्नः शानज्झा'विति श्नः शानजादेशः । 'अतो हे'रिति हेर्लुक् ।
२ 'एकाचो बशो भ'षिति भष्भावः । ३ हलन्तलक्षणा वृद्धिः । ४ विबाधनं—पीडनम् ।

## अथ चुरादयः ।

**चुर स्तेये ॥ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५।** स्वार्थे[1] । 'पुगन्ते'ति गुणः । 'सनाद्यन्ता' इति धातुत्वम् । तिप्शबादि । गुणायादेशौ । चोरयति ॥ **णिचश्च ।१।३।७४।** णिजन्तादात्मनेपदं कर्तृगामिनी क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । णिश्रीति चङ् । 'णौ चङी'ति ह्रस्वः । 'चङी'ति द्वित्वम् । हलादिः शेषः । 'दीर्घो लघो'रित्यभ्यासस्य दीर्घः । अचूचुरत् ॥ **चिति स्मृत्याम्** । चिन्तयति । अचिन्तत् । 'चिन्ते'ति पठितव्ये इदित्करणं[2] णिचः पाक्षिकत्वे लिङ्गम् । तेन चिन्त्यादित्यादौ नलोपो न । चिन्तति । चिन्तेदित्यादि ॥ **यत्रि संकोचे** । यन्त्रयति । यन्त्रेति पठितुं शक्यम् । यत्तु इदित्करणाद्यन्त्रतीति माधवेनोक्तं[3] तच्चिन्त्यम् । एवं **कुद्रि अनृतभाषणे ॥ तत्रि कुटुम्बधारणे ॥ मत्रि गुप्तपरिभाषणे** । तन्त्रयते ।

---

१ अनिर्दिष्टार्थत्वादेतल्लाभः । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इत्युक्तेः । चूर्णान्तानां प्रातिपदिकतया 'प्रातिपदिकाद्धात्वर्थे' इत्येव णिचि सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादीनान्तु स्वार्थे विधानार्थमिह ग्रहणमित्यपि बोध्यम् ।
२ इदित्वं हि णिजभावे आशीर्लिङि 'चिन्त्या'दित्यादौ अनिदितामिति नलोपाभावायैव । नलोपाभावस्तु चिन्तेतिपाठेऽपि सम्भवति, णिचः क्ङित्त्वाभावेन तस्य स्थानिवत्त्वान्नलोपाप्राप्तेः एवञ्च चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । ३ यन्त्रादीनां संयोगान्ततया यन्त्रेति पाठेऽपि णिजभावेऽपि यन्त्र्यादित्यादौ नकारस्यानुपधात्वेन नलोपाप्रसक्तेरिदित्त्वस्य निष्फलत्वात् । एवञ्च माधवोक्तं चिन्त्यमेव । ज्ञापकत्वस्यानुपपत्तेः ।

मन्त्रयते । एतौ आत्मनेपदिनौ ॥ **स्फुडि परिहासे** । स्फुण्डयति ॥ **पीड अवगाहे** ॥ **भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्** ।७।४।३। एषामुपधाया ह्रस्वो वा चङ्परे णौ । अपीपिडत् । अपिपीडत् ॥ **प्रथ प्रख्याने** । प्रथयति ॥ **अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम्** ।७।४।९५। एषामभ्यासस्याकारश्चङ्परे णौ । इत्वापवादः । अपप्रथत् ॥ **प्रथ प्रक्षेपे** । पर्थयति । **उर्ऋत्** ।७।४।७। उपधाया ऋवर्णस्य ऋद्वा चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् ॥ **लुण्ठ स्तेये** । लुण्ठयति । अलुलुण्ठत् ॥ **तड आघाते** । ताडयति । अतीतडत् । **मडि भूषायां हर्षे च** । मण्डयति । अममण्डत् ॥ **भडि कल्याणे** । भण्डयति । अबभण्डत् ॥ **छर्द वमने** । छर्दयति । अचच्छर्दत् ॥ **चुद संचोदने**[1] । चोदयति । अचूचुदत् ॥ **पाल रक्षणे** । पालयति । अपीपलत् ॥ **पूज पूजायाम्** । पूजयति । अपूपुजत् ॥

**कॄत संशब्दने** ॥ **उपधायाश्च** ।७।१।१०१। धातोरुपधाभूतस्य ॠत इत् । रपरत्वम् । 'उपधायां चे'ति दीर्घः । कीर्तयति । अचीकृतत् । अचिकीर्तत् ॥ **म्लेच्छ अव्यक्तायां वाचि** । म्लेच्छयति । अमिम्लेच्छत् ॥ **ईड स्तुतौ** । ईडयति । ऐडिडत् । **पिडि संघाते** । पिण्डयति ॥ **रुष रोषे** । रोषयति । अरूरुषत् ॥ **तुल उन्माने**[2] । तोलयति । अतूतुलत् ॥ **शुल्व माने** । शुल्बयति । अशुशुल्बत् ॥ **घुषिर् विशब्दने**[3] । घोषयति । अजूघुषत् ॥ **पट पुट लुट तुजि मिजि**

---

१ सञ्चोदनं-प्रेरणम् । २ उन्मानं-तोलनम् । (तोलना) । ३ विशब्दनं = प्रतिज्ञानम् ।

**पिजि लुजि भजि लघि त्रसि पिसि कुसि दसि कुशि घट घटि बृंहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु** भाषार्थाः[1]। पाटयति। पोटयति। लुञ्जयति। एवं परेषाम्। घाटयति। घण्टयति॥

**नाग्लोपिशास्वृदिताम्** ।७।४।२। णिच्यग्लोपिनः शास्तेॠदितां चोपधाया ह्रस्वो न चङ्परे णौ। अलुलोकत्। अलुलोचत्। वर्तयति। वर्धयति।

**आ धृषाद्वा।** इत ऊर्ध्वं विभाषितणिचो[2] धृषधातुमभिव्याप्य॥ **युज पृच संयमने।** योजयति। योजति। अयौक्षीत्। पर्चयति। पर्चति। पर्चिता। अपर्चीत्॥ **अर्च पूजायाम्॥ षह मर्षणे।** साहयति। 'स एवायं नागः सहति कलभेभ्यः परिभवम्'॥ **वृञ् वरणे।** वारयति। वरति। वरते॥ **जॄ वयोहानौ।** जारयति। जरति॥ **शिष असर्वोपयोगे।** शेषयति। शेषति। शेष्टा। अशिक्षत्॥ **तप दाहे।** तापयति। तपति। तप्ता। **तृप तृप्तौ।** तर्पयति। तर्पति॥ **हिंसि हिंसायाम्।** हिंसयति। हिंसति॥ **अर्ह पूजायाम्। छद अपवारणे[3]।** छादयति। छदति। छदते॥ **धूञ् कम्पने।** * धूञ्प्रीञोर्नुक् णौ। धूनयति। धवति। धवते॥ **प्रीञ् तर्पणे।** प्रीणयति। प्रीणयते। प्रीयति। प्रीयते॥ **वच परिभाषणे।** वाचयति। वचति। वक्ता। अवाक्षीत्॥ **मान पूजायाम्।** मानयति।

---

१ भाषणार्थाः। २ विभाषितणिचः = वैकल्पिकणिच्काः। ३ अपवारणम् = आच्छादनम्।

मानति । मानिता ॥ **भू प्राप्तौ** । आत्मनेपदी । भावयते । भवते । णिच्संनियोगेनैवात्मनेपदमित्येके । भवति ॥ **मार्ग अन्वेषणे**[1] ॥ **धृष प्रसहने**[2] । धर्षयति । धर्षति ।

**अथाऽदन्ताः** ॥ **कथ वाक्यप्रबन्धे** । अल्लोपः ॥ **अचः परस्मिन्पूर्वविधौ** ।१।५।५७। परनिमित्तोऽजादेशः स्थानिवत् स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधाया वृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् ॥ **गण संख्याने** । गणयति ॥ **ई च गणः** ।७।४।९७। गणेरभ्यासस्य ईत्स्यात्, चादच्चङ्परे णौ । अजीगणत् । अजगणत् ॥ **रच प्रतियत्ने**[3] । रचयति । अररचत्[4] । **कल गतौ संख्याने च** । कलयति । अचकलत् ॥ **मह पूजायाम्** । महयति ॥ **सूच पैशून्ये** । सूचयति । अषोपदेशत्वान्न षः । असुसूचत् ॥ **कुमार क्रीडायाम्** । कुमारयति । अचुकुमारत् ॥ **ऊन परिहाणे** । ऊनयति । 'ओः पुयण्जी'ति सूत्रे

---

१ मार्गयति । मार्गति । २ प्रसहनम्—अभिनवः । ३ प्रतियत्नः—रचना । ४ अग्लोपित्वान्न दीर्घसन्वद्भावौ । ५ अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपे णिचा सह निशब्दस्य 'अजादे'रिति द्वित्वे 'औनिन' दित्यनिष्टं रूपं प्रसज्येत, 'औनन' दिति चेष्टम् । तच्च नशब्दस्य द्वित्वं विना न सम्भवति । 'द्विर्वचनेऽची'ति निषेधस्तु न सम्भवति, णिचो द्वित्वनिमित्तत्वाभावादत आह—**ओः पुयण्जीति** । **पययोरिति** । पूङ्यौतिभ्यां परस्य सनः—'सनीवन्ते'ति 'स्मिपूङ्रञ्ज्वशां सनी'ति च इडागमे 'द्विर्वचनेऽची'ति निषेधादजादेशाभावे—उवर्णान्तस्यैव द्वित्वेऽभ्यासोकारस्येत्त्वविधानार्थं 'पययो'-रित्यावश्यकम्, अन्यथा 'पुपविषते' इत्यनिष्टं स्यात्, 'पिपविषते'

'पययो'रिति वक्तव्ये वर्गप्रत्याहारजग्रहो लिङ्गं—'णिच्यच आदेशो न द्वित्वे कर्तव्ये' इति। यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच् प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णो लभ्यते तत्रैवायं निषेधः, ज्ञापकस्य सजातीयापेक्षत्वात्। तेनाऽचिकीर्तदित्यादि सिद्धम्। प्रकृते तु नशब्दस्य द्वित्वम्। तत उत्तरखण्डे अल्लोपः। औननत्॥ **ध्वन शब्दे**। ध्वनयति। अदध्वनत्॥ **सूत्र वेष्टने**। सूत्रयति॥ **मूत्र प्रस्रवणे**। मूत्रयति। अदन्तत्वसामर्थ्याणिज्विकल्पः। मूत्रति।

---

इति च न स्यात्। एवञ्च पयग्रहणस्य तत्र तदर्थत्वेऽपि वर्गप्रत्याहारजग्रहणं व्यर्थमेव। तद्धि—'अवीभवत्' 'अमीमवत्' इत्यादावित्त्वार्थमेव। तच्च फलं न सम्भवति, णिच्यन्तरङ्गत्वाद्वृद्धावावादेशेऽभ्यासे उकारस्याऽसम्भवात्। अकारस्य च 'सन्यत' इतीत्त्वेन अवीभवदित्यादेरन्यथाऽपि सिद्धेश्च। एवञ्च वर्गादिग्रहणं व्यर्थ सत्—'णिच्यच आदेशो ने'ति ज्ञापयति। एवञ्च द्वित्वात्पूर्वमकारलोपाभावान्नशब्दस्य द्वित्वे औननदिति रूपं सिद्धमित्याशयः। १ ननु कृतधातोर्णौ चङि इरादेशात्प्रागेव 'कृते'त्यस्य द्वित्वे उरदत्त्वे च अचकीर्त्तदिति रूपं स्यान्नतु—'अचिकीर्त्त' दिति रूपमत आह—**यत्रेति**। 'औनन' दित्यादौ परिनिष्ठिते इवर्णस्यालाभादाह—**प्रक्रियायामिति**। 'चुक्षावयिषती'त्यादौ प्रक्रियायामवर्णालाभादाह—**परिनिष्ठिते इति**। वा शब्दोऽनास्थायां, यत्र कुत्र चिदवर्णपरत्वं विवक्षितमित्याशयः। २ **सजातीयेति**। 'पुयण्जी'त्यभ्यासोत्तरखण्डेऽवर्णपरा भवन्ति, अतस्तथैव ज्ञापकमित्याशयः। ३ एवञ्च इरादेशानन्तरं द्वित्वेऽचिकीर्त्तदिति सिद्ध्यति।

४ प्रकृते = 'ऊन' धातौ।

५ णिचः पाक्षिकत्वे हि अदन्तत्वफलमनेकाच्त्वादामादिकम्। णिचो नित्यत्वे तु अदन्तत्वं व्यर्थमेव स्यात्, उपधाकार्याणां गुणवृद्ध्यादीना-

**आ गर्वादात्मनेपदिनः** ॥ **पद गतौ** । पदयते । अपपदत ॥ **गृह ग्रहणे** ॥ **मृग अन्वेषणे** । मृगयते ॥ **शूर वीर विक्रान्तौ** । शूरयते । वीरयते ॥ **गर्व माने** । गर्वयते ॥

## इति चुरादयः ॥ १० ॥

—*—

## अथ णिजन्तप्रक्रिया ॥ १ ॥

**स्वतन्त्रः कर्ता** ।१।४।५४। क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **तत्प्रयोजको हेतुश्च** ।१।४।५५। कर्तृप्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च ॥ **हेतुमति च** ।३।१।२६। प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोर्णिच् ॥ भवन्तं प्रेरयति भावयति ॥ **ओः पुयण्ज्यपरे** ।७।४।८०। सनि परे यदङ्गं तदवयवो योऽभ्यासस्तस्योत इत्स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अवीभवत् । अपीपवत् ॥ **मूङ् बन्धने** । अमीमवत् । अयीयवत् । **रु शब्दे** । अरीरवत् । अलीलवत् । अजीजवत् । पुयण्जीति किम् ? नुनावयिषति । अपरे किम् ? बुभूषति ॥ **स्रवतिशृणोति-**

---

मिहाऽप्रसक्त्या तद्वारणायादन्तेषु पाठस्य वैयर्थ्यात् । अदन्तत्वं हि—अतो लोपस्य स्थानिवत्त्वादुपधाकार्याणामभावायैवेत्याशयः । इति चुरादयः ।

१ प्रधानीभूतधात्वर्थाश्रय इति यावत् । २ तच्छब्देन 'स्वतन्त्रः कर्त्ते'-त्यत्रोपात्तः कर्त्ता परामृश्यते । तस्य = कर्त्तुः, प्रयोजकः = प्रेरकः—तत्प्रयोजकः = कर्तृव्यापारानुकूलव्यापारवान् । ३ स्वनिष्ठाधारतानिरूपिताऽऽधेयतासम्बन्धेन हेतुर्यत्र-व्यापारेऽस्ति स हेतुमान् = व्यापारः । तस्मिन्—हेतुमति = प्रयोजकव्यापारे वाच्ये णिच् । ४ 'पुयण्जि' इति समाहारद्वन्द्वे सप्तम्यन्तमेतत् । 'अपरे' इति च बहुव्रीहिः ।

**द्रवतिस्रवतिप्लवतिच्यवतीनां वा** ।७।४।८१। एषामभ्यासोकारस्येत्त्वं वा सनि अवर्णपरे धात्वक्षरे परे। असिस्रवत्। इत्यादि। अवर्णपरे किम्? अशूशुषत्। णिजन्ताण्णिच्। परत्वाद्वृद्धौ प्राप्तायाम्—'**ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने**'ति णिलोपः। चोरयति। 'णौ चङी'ति ह्रस्वः। 'दीर्घो लघो'रिति दीर्घः। न चाग्लोपित्वादनयोरप्यसम्भवः,[1] ण्याकृतिनिर्देशात्। अचूचुरत्॥ **टुओश्वि गतिवृद्ध्योः** ॥ **णौ च संश्चङोः** ।६।१।३१। सन्परे चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात्। '**संप्रसारणं तदाश्रयं च कार्यं बलवत्**' इति वचनात्सम्प्रसारणम्। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्॥ **स्तम्भुसिवुसहां चङि** ।८।३।११६। उपसर्गादेषां सस्य षो न स्याच्चङि। अवातस्तम्भत्। पर्यसीषिवत्। न्यसीषहत्॥ **स्वापेश्चङि** ।६।१।१८। ण्यन्तस्य स्वापेश्चङि सम्प्रसारणम्। असूषुपत्॥ **हनस्तोऽचिण्णलोः** ।७।३।३२। चिण्णल्वर्जे ञिति। घातयति॥ **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ** ।७।३।३६। स्थापयति॥ **तिष्ठतेरित्** ।७।४।५। उपधाया इश्चङ्परे णौ। अतिष्ठिपत्॥ **जिघ्रतेर्वा** ।७।४।६। उपधाया इत्वं चङ्परे णौ। अजिघ्रपत्। अजिघ्रिपत्॥ **शाच्छासाह्वाव्यावेपां युक्** ।७।३।३७। णौ शाययति। अशीशयत्। ह्वाययति॥ **ह्वः सम्प्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ। * **काण्या**

१ 'चङ्परे णा' वित्यत्र चङ्परेणित्वे इत्यर्थः। एवञ्च इत्वदीर्घयोः सम्भवोऽस्त्येवेत्याशयः।

**दीनां वा** । चङ्परे णौ उपधाया ह्रस्वो वा । ण्यन्ताः कणरण-भणश्रणलुपहेठाः षट् भाष्ये । ह्वायिवाणिलोठिलापयश्चत्वारोऽधिका न्यासे । चाणिलोटी अप्यन्यत्र । इत्थं काण्यादयो द्वादश । अजूहवत् । अजुहावत् । पाययति ॥ **लोपः पिबतेरीच्चाभ्यासस्य** ।७।४।४। पिबतेरुपधाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च चङ्परे णौ । अपीप्यत्[1] । *पातेर्णौ लुग्वक्तव्यः । पुकोऽपवादः ॥ **पाल रक्षणे** ॥ **वो विधूनने जुक्** ।७।३।३८। णौ । वाजयति । विधूनने किम् ? केशान्वापयति ॥ **शदेरगतौ तः** ।७।३।४२। णौ । शातयति । गतौ तु—गाः शादयति गोविन्दः । गमयतीत्यर्थः ॥ **रुहः पोऽन्यतरस्याम्** ।७।३।४३। णौ । रोपयति । रोहयति ॥ **दोषो णौ** ।६।४।९०। दुष्यतेरुपधाया ऊत्स्याण्णौ । दूषयति[2] ॥ **वा चित्तविरागे** ।६।४।९१। विरागोऽप्रीतता । चित्तं दूषयति दोषयति वा कामः[3] ॥ **उभौ साभ्यासस्य** ।८।४।२१। साभ्यासस्यानितेरुभौ नकारौ णत्वं प्राप्नुतो निमित्ते सति । प्राणिणत् ॥ **णौ गमिरबोधने** ।२।४।४६। इणः । गमयति । बोधने तु—प्रत्याययति ॥

---

१ उपधालोपस्य द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये प्रतिषेधात् कृते लोपे स्थानिवद्भावाद्वा पाय्शब्दस्य द्वित्वे हलादिः शेषे आकारस्य ईकारः । स च 'अनभ्यासविकारे' इति निषेधादन्त्यस्यादेशे बाधकाभावादन्त्यस्य भवति । इहाग्लोपित्वादलघूपधत्वाच्च सन्वदित्त्वदीर्घयोरप्राप्तावीत्त्वमनेन विधीयते । २ 'दुष वैकृत्ये' दिवादिः । ३ चित्तं दूष्यति, स्नानसन्ध्यादौ विरक्तं भवति । तत्प्रयुङ्क्ते ( प्रेरयति ) चित्तं दूषयति काम इत्यर्थः ।

**घट** चेष्टायाम् ॥ **घटादयो मितः** ॥ **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** । मितः । **ज्वलह्वलह्मलनमामनुपसर्गाद्वा** । एषां मित्त्वं वा ॥ **ग्लास्नावनुवमां च** । अनुपसर्गादेषां मित्त्वं वा । **न कम्यमिचमाम्** । अमन्तत्वात्प्राप्तं मित्त्वमेषां न ॥ **यमोऽपरिवेषणे** । मित्त्वं न । **स्खदिरवपरिभ्यां च** । मिन्न ॥ **मितां ह्रस्वः** ।६।४।९२। घटादीनां ज्ञपादीनां च णावुधाया ह्रस्वः । घटयति । अजीघटत् । **ज्ञप ज्ञाने ज्ञापने च** । ज्ञपयति । अजिज्ञपत् ॥

**रभेरशब्लिटोः** ।७।१।६३। नुमचि ॥ **लभेश्च** ।७।१।६४। अररम्भत् । अललम्भत् । ईर्ष्ययति ॥ ✱ **ईर्ष्ययतेस्तृतीयस्येति वक्तव्यम्** । तृतीयव्यञ्जनस्य, तृतीयैकाच इति वार्थः । आद्ये [1]षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये[2] त्वजादेर्द्वितीयस्येत्यस्यापवादतया सन्नन्ते[3] प्रवर्तते । ऐर्ष्यियत् । द्वितीयव्याख्यायां णिजन्ताच्चङि ष एवाभ्यासे श्रूयते, हलादिःशेषात् । द्वित्वं तु द्वितीयस्यैव, तृतीयाभावेन प्रकृत[4]वार्तिकाप्रवृत्तेः । ऐर्षिष्यत् ॥

## इति णिजन्तप्रक्रिया ॥ १ ॥

---

## अथ सन्नन्तप्रक्रिया ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा** ।३।१।७। इषि[5]कर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम् ॥ **पठ** व्यक्तायां

---

१ रेफस्य द्वित्वं तु 'नन्द्रा' इति निषिद्धम् । २ 'तृतीयस्यैकाच' इति व्याख्यायान्तु । ३ प्रवर्तते इति । वचनारम्भसामर्थ्यादिति भावः ।

४ प्रकृतेति । 'ईर्ष्यतेस्तृतीयस्ये'ति वार्त्तिकाऽप्रवृत्तेरित्यर्थः । ५ इच्छायामित्यस्योपस्थितत्वेन कर्मत्वस्य कर्तृत्वस्य तदपेक्षस्यैव ग्रहणस्यौचित्यादाह—इषिकर्मण इत्यादि ।

सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति । 'विभाषोर्णोः' इति ङित् । ऊर्णुनुविषति । ऊर्णुनविषति । ऊर्णुनूषति । बिभरिषति । बुभूषति । जिज्ञपयिषति । ज्ञीप्सति । सिसनिषति । सिषासति ॥ *आशङ्कायां सन्वक्तव्यः । श्वा मुमूर्षति ॥ *तनिपतिदरिद्रातिभ्यः सनो वेड् वाच्यः । तितनिषति ॥ **तनोतेर्विभाषा ।६।४।१७।** उपधाया दीर्घो वा झलादौ सनि । तितांसति । तितंसति । कूलं पिपतिषति ॥ **सनि मीमाघुरभलभशकपतपदामच इस् ।७।४।५४।** सादौ सनि । अभ्यासलोपः । पित्सति । दिदरिद्रिषति । दिदरिद्रासति ॥ **मुचोऽकर्मकस्य गुणो वा ।७।४।५७।** सादौ सनि । अभ्यासलोपः । मुमुक्षते मोक्षते वा वत्सः स्वयमेव । अकर्मकस्य किम् ? मुमुक्षति वत्स कृष्णः ॥ **इट् सनि वा ।७।२।४१।** वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा । विवरिषते । विवरीषते । वुवूर्षते । तिवरिषति । तितरिषति । तितरीषति । तितीर्षति ॥ **स्मिपूङ्रञ्ज्वशां सनि ।७।२।७४।** स्मिङ् पूङ् ऋ अञ्जू अशू एभ्यः सन इट् । सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषति ॥

**गुप** गोपने ॥ **तिज** निशाने ॥ **कित** निवासे रोगापनयने च ॥ **मान** पूजायाम् ॥ **वध** बन्धने ॥ **दान** खण्डने ॥ **शान**

१ 'विभाषोर्णोः' इति वा ङित्त्वम् । २ इडभावपक्षेऽज्झनेति दीर्घः । ३ एकश्वविषयिणी मरणशङ्केति बोधः । श्वा मरणशङ्काविषयो भवतीत्यन्ये बोधाकारमाहुः । ४ 'हलन्ताच्चे'ति कित्त्वेन गुणाऽभावे प्राप्ते विधिरयम् ।

तेजने ॥ **गुप्तिज्किद्भ्यः सन् ।३।१।५। मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।३।१।६।** सूत्रद्वयोक्तेभ्यः सन्, मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायाम्। तिजेः क्षमायाम्। कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च। मानेर्जिज्ञासायाम्। बधेश्चित्तविकारे। दानेरार्जवे। शानेर्निशाने। गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेतः। दानशानौ तु स्वरितेतौ। एष्वर्थेष्वेते नित्यसन्नन्ताः। अर्थान्तरे त्वननुबन्धकाश्चुरादयः। अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्पद[1]व्यवस्था। धातोरित्यविहितत्वात्सनोऽत्र नार्धधातुकत्वम्। तेनेड्गुणौ न। जुगुप्सते। तितिक्षते। चिकित्सति। मीमांसते। बीभत्सते। दीदांसति। दीदांसते। शीशांसति। शीशांसते। णिचि तु—गोपयति। गोपयते ॥ **इति सन्नन्तप्रक्रिया ॥ २ ॥**

## अथ यङन्तप्रक्रिया।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।३।१।२२।** पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् ॥ **गुणो यङ्लुकोः ।७।४।८२।** अभ्यासस्य[2]। ङिदन्तत्वा[3]दात्मनेपदम्। पुनः पुनरतिशयेन वा भवति—बोभूयते। बोभूयां-

---

१ केवलेऽचरितार्थस्य लिङ्गस्य समुदायोपकारकताया 'केवले हि अचरितार्थ लिङ्गं समुदायोपकारकं भवती'तिन्यायानुगृहीतत्वेन, सन्नन्तसमुदायात्, पदव्यवस्था = परस्मैपदात्मनेपदोत्पत्तिः। एवञ्च प्रकृतेऽनुदात्तङित इत्यात्मनेपदं सन्नन्तादेव भवतीत्याशयः। २ अभ्यासस्य गुणःस्याद्यङि यङ्लुकि चेत्यर्थः। ३ 'अनुदात्तङित' इत्यनेनेति भावः।

चक्रे। अबोभूयिष्ट। धातोः किम्[1] ? आर्धधातुकत्वं यथा स्यात्[2]। तेन 'ब्रुवो वचि'रित्यादि[3]। एकाचः किम् ? पुनः पुनर्जागर्ति। हलादेः किम् ? भृशमीक्षते॥ **नित्यं कौटिल्ये गतौ ।३।१।२३।** गत्यर्थात्कौटिल्ये एव[4] यङ् न तु क्रियासमभिहारे॥ **दीर्घोऽकितः ।७।४।८३।** अकितोऽभ्यासस्य दीर्घो यङ्यङ्लुकोः। कुटिलं व्रजति वाव्रज्यते॥ **यस्य हलः ।६।४।४९।** हलः परस्य यस्य[5] लोपः स्यादार्धधातुके। **आदेः परस्य। अतो लोपः।** वाव्रजांचक्रे। वाव्रजिता॥ **रीङृतः ।७।४।२७।** अकृद्यकारे असार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः॥ डुकृञ् करणे। चेक्रीयते। **रीगृदुपधस्य च ।७।४।९०।** धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः। वरीवृतांचक्रे। वरीवृतिता। **क्षुभ्नादिषु च।** नरीनृत्यते। जरीगृह्यते॥ * **रीगृत्वत इति वाच्यम्[6]।** वरीवृश्च्यते॥ **लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ।३।१।२४।** एभ्यो धात्वर्थगर्हायामेव यङ्। गर्हितं लुम्पति लोलुप्यते। सासद्यते॥ **चरफलोश्च ।७।४।८७।** अनयोरभ्यास-

---

१ 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्नः। २ धात्वधिकारविहितस्यैवार्धधातुकत्वेन तदर्थं धातोरित्यावश्यकमित्युत्तरम्। ३ तेन यङि परे वच्याद्यादेशा भवन्तीत्याशयः। ४ नित्यशब्द एवार्थे। कौटिल्ये एवेति च सम्बन्धः। एवशब्दव्यवच्छेद्यमाह—नत्विति।

५ 'यस्ये'ति सङ्घातग्रहणम्। तेनार्थवत्परिभाषोपस्थित्या पुत्रकाम्येत्यादावनेन न वलोपः। वर्णग्रहणे तु सा न प्रवर्त्तते। ६ 'ऋदुपधस्ये'त्यपहाय 'रीगृत्वत' इति सूत्रं कार्यमित्यर्थः। तेन वृश्चतेर्ऋदुपधत्वाभावेऽपि ऋकारवत्त्वाद्रीगादेशो भवत्येवेत्याशयः।

स्याऽतो नुक् यङ्यङ्लुकोः । 'नु'गित्यनेनानुस्वारो लक्ष्यते । स च पदान्तवद्वाच्यः । 'वा पदान्तस्ये'ति यथा स्यात् ॥ **उत्परस्यातः** ।७।४।८८। चरफलोरभ्यासात्परस्यात उत्स्याद्यङ्यङ्लुकोः । 'हलि चे'ति दीर्घः । चञ्चूर्यते । चंचूर्यते । पम्फुल्यते ॥ **जपजभदहदशभञ्जपशां च** ।७।४।८६। एषामभ्यासस्य नुक् यङ्यङ्लुकोः । गर्हितं जपति जञ्जप्यते । इत्यादि ॥ **ग्रो यङि** । ८।२।२०। गिरते रेफस्य लत्वं यङि । गर्हितं गिलति । जेगिल्यते ॥ ***सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः** । सोसूच्यते ॥ **अट पट** गतौ । अटाट्यते[1] ॥ **यङि च** ।७।४।३०। अर्तेः संयोगादेश्च ऋदन्ताङ्गस्य गुणो यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः । 'अरार्यते' इति भाष्योदाहरणात् । अरारिता । अशाश्यते । ऊर्णोनूयते ॥ **सिचो यङि** ।८।३।११२। सस्य[2] षो न । निसेसिच्यते ॥ **न कवतेर्यङि** ।७।४।६३। अभ्यासस्य चुत्वं न । कोकूयते । कौतिकुवत्योस्तु—चोकूयते ॥ ***हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः** । जेघ्नीयते । हिंसायां किम् ? **नुगतोऽनुनासिकान्तस्य** ।७।४।८५। अदन्ताभ्यासस्य नुक् यङ्लुकोः । जंघन्यते ॥ **अयङ् यि क्ङिति** ।७।४।२२। शीङः । शाशय्यते[3] ॥ **स्वपिस्यमिव्येञां यङि** ६।१।१९। संप्रसारणम् । सोषुप्यते ।

---

१ 'अजादेर्द्वितीयस्ये' त्युक्तेरत्र ट्यशब्दस्य द्वित्वम् । २ अत्राभ्याससकारस्य—'उपसर्गात्सुनोती'ति, तदुत्तरखण्डवर्त्तिसकारस्य तु 'स्थादिष्वभ्यासेन'ति षत्वे प्राप्तेऽयं निषेधः । ३ शीय इति स्थिते ईकारस्य अयङादेशः परत्वादन्तरङ्गत्वाच्च । ततो द्वित्वमभ्यासकार्यं दीर्घः ।

सेसिम्यते । वेवीयते[1] ॥ **न वशः** ।६।१।२०। संप्रसारणम् । वावश्यते ॥ **चायः[2] की** ।६।१।२१। चेकीयते ॥ **ई घ्राध्मोः** ।७।४।३१। जेघ्रीयते । देध्मीयते ॥ **नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्** ।७।४।८४। एषामभ्यासस्य नीग्यङ्लुकोः । 'अकित' इत्युक्तेर्न दीर्घः । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते ॥ **इति यङन्तप्रक्रिया ॥३॥**

## अथ यङ्लुगन्तप्रक्रिया ॥

**यङोऽचि च[3]** ।२।४।७४। यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं[4] विनापि क्वचित्[5] । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वात् द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । **शेषात्कर्तरि परस्मैपदम्** । 'चर्करीतं चे'त्यदादौ पाठाच्छपो[6] लुक् ॥ **यङो वा** ।७।३।९४। यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात् । 'भूसुवो'रिति निषेधो यङ्लुकि भाषायां न । 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात् । बोभवीति । बोभोति । बोभूतः । बोभुवति ।

---

१ 'हल' इति, 'अकृत्सार्वे'ति वा दीर्घः । २ 'चायृ पूजानिशामनयो'रित्यस्य धातोः 'की' आदेशो यङीत्यर्थः । ३ अचीति प्रत्ययस्य ग्रहणं नतु प्रत्याहारस्य, यङा साहचर्यात् । ४ तं विनाऽपि = अच्प्रत्ययाऽभावेऽपि । ५ 'बहुलं छन्दसी'त्यतो बहुलग्रहणाऽनुवृत्त्या चैतल्लभ्यते इत्यवधेयम् । अच्प्रत्ययादन्यत्रायं यङ्लुक् अनैमित्तिक इत्याशयः । ६ 'अदिप्रभृतिभ्य' इति शपो लुगित्यर्थः ।

बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभवांचकार । बोभवांबभूव । बोभवामास । बोभविता । बोभविष्यति । बोभवीतु । बोभोतु । बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत् । अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । 'गातिस्थे'ति सिचो लुक् । 'यङो वे'तीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत् । अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् । जङ्गमीति[1] । जङ्गन्ति । 'अनुदात्ते'त्यनुनासिकलोपः । जङ्गतः । जङ्ग्मति[2] । म्वोश्च । जङ्गन्मि । जङ्गन्वः ।

**श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥**

इति वचनान्न[3] इण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याभीयत्वेनासिद्धत्वान्न हेर्लुक् । जङ्गहि । **मो नो धातोः** । अजङ्गमीत् । अनुबन्धनिर्देशान्न च्लेरङ् । अजङ्गमीत् ॥ **रुग्रिकौ[4] च लुकि** ।७।४।९१। ऋगुपधस्य रुक् रिक् रीक् एते स्युर्यङ्लुकि ॥ **ऋतश्च** ।७।४।९२। ऋदन्तधातोरपि[5] तथा । वर्वृतीति ।

---

१ 'नुगतोऽनुनासिकान्तस्ये'ति नुक् । २ 'गमहने'त्युपधालोपः । ३ 'एकाच उपदेशेऽनुदात्ता'दित्यत्रेण्निषेधशास्त्रे एकाज्ग्रहणात्तस्य यङ्लुकि अप्रवृत्तेरित्याशयः । ४ चेन 'रीगृदुपधे'त्यतो रीगनुकृष्यते । रुकि उकार उच्चारणार्थः । ५ ऋताऽनुवर्त्तमानमङ्गं विशेष्यते, तेन ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । फलितार्थमाह—ऋदन्तेति ।

वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गणनिर्दिष्टत्वान्न वृद्भ्यश्चतुर्भ्य इति न । वर्वर्तिष्यति ३ । अवर्वृतीत् ३ । अवर्वत् ३ । सिपि 'दश्चे'ति रुत्वपक्षे—रोरि । अवर्वाः ३ । गणनिर्दिष्टत्वादङ् न । अवर्वर्तीत् ३ । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति । चर्कृतः ३ । चर्क्रति ३ । चर्करांचकार ३ । चर्करिता ३ । अचर्करीत् ३ । अचर्कः ३ । चर्क्रियात् ३ । आशिषि रिङ् । चर्क्रियात् ३ । अचर्कारीत् ३ । 'ऋतश्चे'ति तपरत्वान्नेह—चार्कर्ति । चाकरीति । चाकीर्तः । चाकीर्हि । चाकराणि । अचाकरीत् । अचाकः । अचाकीर्ताम् । अचाकरुः । अचाकारीत् । अचाकारिष्टाम् । तातरीति । तातर्तीत्यादि । **इति यङ्लुगन्तप्रक्रिया ॥ ४ ॥**

## अथ नामधातुप्रक्रिया ॥

**सुप आत्मनः क्यच् ।३।१।८।** इषिकर्मण[2] एषितुरात्म[3]संबन्धिनः सुबन्तादिच्छायामर्थे क्यज्वा ॥ **सुपो धातुप्रातिपदिकयोः ।२।४।७१।** एतयोरवयवस्य सुपो लुक् स्यात् ॥ **क्यचि**

१ 'कॄ विक्षेपे' इत्यस्येदं रूपम् । २ 'धातोः कर्मण' इत्यतः 'कर्मण' 'इच्छायां' वे' त्यनुवर्त्तते । सन्निधानादिच्छा च कर्मण एव ग्राह्येत्याह—**इषिकर्मण** इति । ३ परस्य पुत्रमिच्छतीत्यत्रातिप्रसङ्गवारणाय—आत्मशब्दोपादानम् । स्वस्येति तदर्थः । स्वश्च क इत्याकाङ्क्षायां सन्निहितत्वादिच्छाकर्त्तैव स्वपदेन गृह्यते, तदाह—**एषितुरात्मसम्बन्धिन इति** । सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकम्बोध्यम् ।

**च** ।७।४।३३। अवर्णस्य ईः । आत्मनः पुत्रमिच्छति पुत्रीयति । ***मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच्न** । किमिच्छति । इदमिच्छति ॥

**अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु** ।७।४।३५। एते क्यजन्ता[1] निपात्यन्ते । अशनायति[2] । उदन्यति[3] । धनायति[4] । बुभुक्षादौ किम्? अशनीयति[5] । उदनीयति[6] । धनीयति[7] ॥ **अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि** ।७।१।५१। एषां क्यच्यसुक् ।

***अश्ववृषयोर्मैथुनेच्छायाम्** । अश्वस्यति[8] वडवा । वृषस्यति[9] गौः । ***क्षीरलवणयोर्लालसायाम्**[10] । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । ***सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ** । दधिस्यति । दध्यस्यति । **नः क्ये** ।१।४।१५। क्यचि क्यङि च नान्तमेव पदं नान्यत् । राजीयति[11] । नान्तमेवेति किम्? वाच्यति । **हलि च** । गीर्यति । पूर्यति । 'धातो'रित्येव । तेनेह न—दिवमिच्छति दिव्यति ॥ **क्यस्य विभाषा** ।६।४।५०। हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्धधातुके । **आदेः परस्य** । **अतो लोपः** । तस्य स्थानिवद्भावान्नोपधाया गुणः । समिधिता ।

---

१ उदकशब्दस्य उदन्भावः, अन्ययोर्दीर्घ इत्यपि ज्ञेयम् । २ सद्यो-भोक्तुमशनमिच्छति । ३ पातुं जलमिच्छति । ४ सत्यपि धने लुब्धः पुनरपि धनमिच्छति । ५ कालान्तरोपभोगायाऽशनमिच्छति । ६ स्नातुं जलमिच्छति । ७ दरिद्रः सन् कुटुम्बभरणाय धनमिच्छति । ८ अश्वा मैथुनार्थमश्वमिच्छति । ९ मैथुनार्थं वृषभमिच्छति गौः । १० लालसा = उत्कटेच्छा । ११ क्यचि चेतीत्त्वे कर्त्तव्ये पूर्वत्रासिद्धमिति नलोपस्याऽसिद्धत्वन्तु न शङ्क्यं, 'नलोपः सुप्स्वरे'ति नियमात् ।

**काम्यच्च** ।३।१।९। उक्तविषये काम्यच् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥ **उपमानादाचारे** ।३।१।१०। उपमानात्कर्मणः सुबन्ताचारेऽर्थे क्यच् । पुत्रमिवाचरति[1] पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ ***सर्वप्रातिपदिकेभ्यः[2] क्विब्वा वक्तव्यः** । **अतो गुणे**[3] । कृष्ण इवाचरेति । कृष्णति । स्व इवारचरति । स्वति । सखौ ॥ **अनुनासिकस्य क्विझलोः क्ङिति** ।६।४।१५। अनुनासिकान्तस्योपधाया दीर्घः क्वौ झलादौ क्ङिति च । इदमिमाचरति । इदामति । राजेवाचरति । राजानति 'इन्ह'न्निति नियमान्नेहोपधाया दीर्घः—पन्था इवाचरति पथीनति । मथीनति ॥ **कर्तुः क्यङ् सलोपश्च** ।३।१।११। उपमानात्कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा सान्तकर्तृवाचकस्य लोपो वा । 'क्यङ् वे'त्यक्तेः पक्षे वाक्यम् ॥ 'संनियोगशिष्टानां सह वा[4] प्रवृत्ति'रिति क्यङ्सलोपयोः सहैव प्रवृत्तिः । लोपश्च व्यवस्थितः[5] । ***ओजसोप्सरसोर्नित्यमितरेषां विभाषया** । कृष्ण इवाचरति कृष्णायते । ओजायते[6] । अप्सरायते[7] । यशायते । यशस्यते । विद्वायते । विद्वस्यते ॥

१ आचरति=व्यवहरति । २ प्रातिपदिकमात्रात् । ३ प्रातिपदिकग्रहणादिह 'सुप' इति न सम्बध्यते, तेन पदस्य जायमानं कार्यं सवर्णदीर्घादिकं न । तेनाऽपदान्ततया शपा सहाऽकारस्य 'अतो गुणे' इति पररूपम् । ४ **सह वा** = सहैव । क्यङ्सलोपयोश्च संनियोगशिष्टतया क्यङभावे न लोप इत्याशयः । ५ व्यवस्थामेवाह—**ओजस इति** । ६ ओजः = ओजस्वीवाचरतीति विग्रहः । ७ अप्सरस इवाचरति—अप्सरायते ।

**आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः** । 'वा'ग्रहणाद्वाक्यमपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनानुदात्तत्वामनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । तेन[1] तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम्, एतद्वार्तिकारम्भसामर्थ्यात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते । तेन गल्भशब्दात्प्रागट् । अवागल्भत । अवागल्भिष्ट ॥ **लोहितादिडाज्भ्यः[2] क्यष्** ।३।१।१३। **वा क्यषः** ।१।३।९०। क्यषन्तात्परस्मैपदं वा । अलोहितो लोहितो भवति—लोहितायते । ननूच्चारणसामर्थ्यात्काम्यच इव क्यषोऽपि ककारः कुतो न श्रूयते ?, तस्य भाष्ये प्रत्याख्यानात् । पटपटायति । पटपटायते ॥ **कष्टाय क्रमणे** ।३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् । कष्टाय क्रमते । कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥ ***सत्त्र[3]कक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्** । कण्वं[4]—पापं—चिकीर्षति—सत्त्रायते । कक्षायते ॥ **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** ।३।१।१५। कर्मीभूताभ्यां रोमन्थतपोभ्यां क्रमेण वर्तनायां चरणे चार्थे क्यङ् स्यात् । रोमन्थं वर्तयति—रोमन्थायते **हनुचलन इति वाच्यम्** । चर्वितस्याकृष्य पुनश्चर्वण-

---

१ तेन = अनुदात्तेत्त्वेन । तङ् = 'अनुदात्तङित' इति तङ् । २ लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यप् स्यात् । ३ सत्त्रादयो वृत्तिविषये पापार्थाः । ४ कण्वं (पापं) चिकीर्षति–सत्त्रायते इत्यस्वपदविग्रहोऽत्र बोध्यः ।

मित्यर्थः । नेह कीटो रोमन्थं वर्तयति ॥ *तपसः परस्मैपदञ्च । तपश्चरति—तपस्यति ॥ * **बाष्पोष्मभ्यामुद्वमने** ।३।१।१६। बाष्पमुद्वमति—बाष्पायते । ऊष्मायते ॥ *फेनाच्चेति वक्तव्यम् । फेनायते ॥ **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** ।३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् । शब्दं करोति शब्दायते । *सुदिनदुर्दिननीहारेभ्यश्च[1] । सुदिनायते[2] । दुर्दिनायते । नीहारायते ॥ * **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च** । प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य - पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः । पटुमाचष्टे पटयति । परत्वाद् वृद्धौ सत्यां टिलोपः । अपीपटत् । 'णौचङी'त्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीया'निति स्थितम् । अपपटत् । **पुच्छभाण्डचीवराण्णिङ्** ।३।१।२०। * **पुच्छादुदसने व्यसने पर्यसने च** । विविधं विरुद्धं चोत्क्षेपणं=व्यसनम् । उत्पुच्छयते[3] । परिपुच्छयते ॥ **भाण्डात्समाचयने** । सम्भाण्डयते[4] । समबभाण्डत ॥

**चीवरादर्जने परिधाने च** । संचीवरयते भिक्षुः ॥

**मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्** । ३ । १ । २१ । कृञर्थे[5] । मुण्डं करोति—मुण्डयति ॥

**व्रताद्भोजनतन्निवृत्त्योः** । पयः शूद्रान्नं वा व्रतयति[6] ॥

---

१ सुदिनादिभ्यः कर्मभ्यः करोत्यर्थे क्यङित्यर्थः । २ सुदिनं करोति—सुदिनायते । ३ पुच्छमितस्ततः उपर्युर्ध्वं च विक्षिपतीत्यर्थः । ४ भाण्डानि सङ्गृह्णातीत्यर्थः । ५ क्रियासामान्ये, क्रियाविशेषे च । ६ पयो व्रतयति = पयो भुङ्क्ते । शूद्रान्नं व्रतयति = शूद्रान्नं परिवर्जयतीति यथायथमर्थः ।

**वस्त्रात्समाच्छादने** । संवस्त्रयति[1] ॥ **हल्यादिभ्यो ग्रहणे** । हलिकल्योरदन्तत्वं च निपात्यते । हलिं कलिं वा गृह्णाति—हलयति । कलयति । महद्धलं—हलिः । कृतं गृह्णाति—कृतयति[2] । तूस्तानि विहन्ति—वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे ॥ **सत्याऽर्थवेदानामापुग्वक्तव्यः** । सत्यापयति । अर्थापयति । वेदापयति । पाशं विमुञ्चयति-विपाशयति । रूपं पश्यति-रूपयति । वीणयोपगायति उपवीणयति । तूलेनानुकुष्णाति अनुतूलयति । तृणाग्रं तूलेनाऽनुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति-उपश्लोकयति । सेनयाऽभियाति-अभिषेणयति । लोमान्यनुमार्ष्टि-अनुलोमयति ॥ **त्वच संवरणे** । पचाद्यच् । त्वचं गृह्णाति-त्वचयति[3] । वर्मणा संनह्यति-संवर्मयति । वर्णं गृह्णाति-वर्णयति । चूर्णैरवध्वंसते—अवचूर्णयति[4] ॥

## इति नामधातुप्रक्रिया ॥ ५ ॥

अथ कण्ड्वादयः । **कण्ड्वादिभ्यो यक्** ।३।१।२७। एभ्यो धातुभ्यो[5] नित्यं यक् स्यात् स्वार्थे ॥ **कण्डूञ् गात्रविघर्षणे** । कण्डूयति । कण्डूयते । इत्यादि ।

## अथात्मनेपदप्रक्रिया ।

**कर्तरि कर्मव्यतिहारे** ।१।३।४। क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः ॥ **न गतिहिंसार्थेभ्यः** ।१।३।१५। व्यतिगच्छन्ति ।

---

१ वस्त्रेणाच्छादयति । २ कृतमुपकारं मनुते इत्यर्थः । ३ वृक्षो व्रणादिर्वा त्वचं गृह्णाति । ४ चूर्णतां नयति । चूर्णीभवतीति वा । ५ 'धातोरेकाच' इत्यतो धातुग्रहणमनुवर्तते, तेन प्रातिपदिकव्यावृत्तिः ।

व्यतिघ्नन्ति ॥ **हरतेरप्रतिषेधः**[1] । संप्रहरन्ते राजानः । **इतरेतरा-न्योन्योपपदाच्च ।१।३।१६। परस्परोपपदाच्चेति वक्तव्यम्**[2] । इतरेतरस्यान्योन्यस्य परस्परस्य वा व्यतिलुनन्ति ॥ **नेर्विशः ।१।३।१७।** निविशते ॥ **परिव्यवेभ्यः क्रियः ।१।३।१८।** परिक्रीणीते । विक्रीणीते । अवक्रीणीते ॥ **विपराभ्यां जेः ।१।३। १९।** विजयते । पराजयते ॥ **क्रीडोऽनुसंपरिभ्यश्च ।१।३।२१।** चादाङः । अनुक्रीडते । संक्रीडते । आक्रीडते ॥ **समोऽकूजने ।** संक्रीडते । कूजने तु—संक्रीडति चक्रम् ॥ **आगमेः क्षमायाम् ।** ण्यन्तस्येदं ग्रहणम् । आगमयस्व[3] तावत् । मा त्वरिष्ठा इत्यर्थः ॥

**शिक्षेर्जिज्ञासायाम्**[4] । धनुषि शिक्षते । धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः[5] ॥ **वृत्तिसर्गतायनेषु क्रमः ।१।३।३८।** वृत्तिरप्रतिबन्धः । ऋचि क्रमते बुद्धिः । सर्ग उत्साहः । अध्यय-नाय क्रमते । क्रमन्तेऽस्मिञ्छास्त्राणि । स्फीतानि भवन्तीत्यर्थः ॥ **आङ उद्गमने ।१।३।३०।** आक्रमते सूर्यः ॥ **ज्योतिरुद्गमन इति वाच्यम्**[6] । नेह । आक्रामति धूमो हर्म्यतलात् ॥ **वेः पादविहरणे ।१।३।४१** साधु विक्रमते वाजी ॥ **प्रोपाभ्यां समर्थाभ्याम्**

१ हिंसार्थकस्यापि हरतेः कर्मव्यतिहारे आत्मनेपदं भवत्येवेत्यर्थः । २ एषूपपदेषु कर्मव्यतिहारेऽप्यात्मनेपदं नेत्यर्थः । ३ क्षमस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः । ४ सन्नन्तात् शकेर्जिज्ञासायामात्मनेपदमित्यर्थः । शिक्षतेस्त्वत्र न ग्रहणं, तस्याऽनुदात्तेत्त्वात्तत आत्मनेपदस्य स्वत एव सिद्धेः । ५ धनुर्वेदविषयं जिज्ञासते इत्यर्थः । ६ सूर्याद्युद्गमने इत्यर्थः । ७ अत्र धूमो न ज्योतिरिति नात्मनेपदम् । ८ समार्थाभ्याम् = तुल्यार्थाभ्याम् । शकन्ध्वादित्वात् पररूपम् ।

।१।३।४२ प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते। उपक्रमते। समर्थाभ्यां किन्? प्रक्रामति। गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः॥ **अनुपसर्गाद्वा** ।१।३।४३। क्रामति। क्रमते॥ **अपह्नवे ज्ञः** ।१।३।४४। शतमपजानीते। अपलपतीत्यर्थः॥ **अकर्मकाच्च** ।१।३।४५। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः॥ **समवप्रविभ्यः स्थः** ।१।३।२२। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते। **आङः प्रतिज्ञायामुपसंख्यानम्**। शब्दं[1] नित्यमातिष्ठते॥ **प्रकाशनस्थेयाख्ययोश्च** ।१।३।२३।[2] गोपी कृष्णाय तिष्ठते। आशयं प्रकाशयतीत्यर्थः। संशय्य कर्णादिषु तिष्ठते यः। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः॥ **उदोऽनूर्ध्वकर्मणि** ।१।३।२४। मुक्तावुत्तिष्ठते। अनूर्ध्वेति किम्? पीठादुत्तिष्ठति[3]॥ **उपान्मन्त्रकरणे**[4] ।१।३।२५। आग्नेय्याग्नीध्रमुपतिष्ठते। मन्त्रकरणे किम्? भर्तारमुपतिष्ठति यौवनेन॥ **उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्**। आदित्यमुपतिष्ठते। गङ्गा यमुनामुपतिष्ठते। रथिकानुपतिष्ठते। मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः॥ **वा लिप्सायाम्**[5]। भिक्षुकः प्रभु-

---

१ 'शब्दो नित्य' इति प्रतिज्ञां करोतीत्यर्थः। २ एष्वर्थेषु तिष्ठतेरात्मनेपदम्। तत्र–प्रकाशनं = ज्ञापनम्। स्थेयः = धर्माधिकरणाधिपतिः। '**स्थेयो** विवादस्थानस्य निर्णतरि पुरोहिते' इति मेदिनी। ३ **पीठात्** = सिंहासनादेः पीढा। ४ मन्त्रः करणं यत्र स्तोत्रे तत्-मन्त्रकरणं स्तुतिस्तत्र वर्त्तमानादुपपूर्वात्तिष्ठतरात्मनेपदमित्यर्थः। ५ लाभेच्छायाम्।

मुपतिष्ठति । उपतिष्ठते वा ॥ **उद्विभ्यां तपः ।१।३।२७।** अकर्मकादित्येव । उत्तपते[1]। वितपते । दीप्यत इत्यर्थः । **स्वाङ्गकर्मकाच्चेति वक्तव्यम् ।** उत्तपते वितपते पाणिम् । नेह—सुवर्णमुत्तपति ॥ **आङो यमहनः ।१।३।२८।** आयच्छते । आहते। अकर्मकात्स्वाङ्गकर्मकादित्येव। नेह—परस्य शिर आहन्ति ॥ **आत्मनेपदेष्वन्यतरस्याम् ।२।४।४३।** हनो वधादेशो वा लुङि । आवधिष्ट । आवधिषाताम् । आवधिषत ॥ **हनः सिच् ।१।२।१४** कित् । अनुनासिकलोपः । आहत । आहसाताम् । आहसत ॥ **यमो गन्धने ।१।२।१५** सिच् कित् । गन्धनं=सूचनं, परदोषाविष्करणम् । उदयत । गन्धने किम् ? उदायंस्त पादम् । आकृष्टवानित्यर्थः ॥ **समो गम्यृच्छिभ्याम् ।१।३।२९।** अकर्मकाभ्यामित्येव । सङ्गच्छते[2] ॥ **वा गमः ।१।२।१३।** गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः । सङ्गसीष्ट । सङ्गंसीष्ट । समगत । समगंस्त । समृच्छते । अकर्मकाभ्यां किम् ? ग्रामं सङ्गच्छति । **विदिप्रच्छिस्वरतीनामुपसंख्यानम् ।** वेत्तेरेवग्रहणम्[3] । संवित्ते । संविदाते ॥ **वेत्तेर्विभाषा ।७।१।७।** वेत्तेः परस्य झादेशस्यातो रुडागमो वा । संविद्रते । संविदते । संपृच्छते । संस्वरते । अथाऽस्मिन्नकर्मकाधिकारे हनिगम्यादीनां[4] कथमकर्मकतेति चेत्, शृणु—

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥१॥**

---

१ दीपः सूर्यो वा उत्तपते । दीप्यते इत्यर्थः । २ सङ्गतं भवतीत्यर्थः ।
३ 'विद ज्ञाने' इत्यादादिकस्येत्यर्थः । ४ सकर्मकतया प्रसिद्धानाम् ।

वहति भारम्[1] । नदी वहति । स्यन्दत इत्यर्थः । जीवति[2] । नृत्यति । प्रसिद्धेर्यथा—मेघो वर्षति[3] । कर्मणोऽविवक्षातो यथा—'हितान्न यः संशृणुते स किंप्रभुः'[4] ॥

**संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः[5]** ।१।३।३६। शास्त्रे नयते । दण्डमुन्नयते[6] । उत्क्षिपतीत्यर्थः । माणवकमुपनयते । कर्मकरानुपनयने । करं विनयते[7] । राज्ञे देयं भागं परिशोधयतीत्यर्थः । शतं विनयते । धर्मार्थं विनियुङ्क्ते[8] इत्यर्थः ॥ ***उपसर्गादस्यत्यूह्योर्वेति वाच्यम्** । बन्धान्निरस्यति । निरस्यते । समूहति । समूहते ॥ **उपसर्गाद्ध्रस्व ऊहतेः** ।७।४।२३। यादौ किति । ब्रह्म समुह्यात् । अग्निं समुह्य ॥

**निसमुपविभ्यो ह्वः** ।१।३।३०। निह्वयते ॥ **स्पर्धायामाङः** ।१।३।३१। कृष्णश्चाणूरमाह्वयते । स्पर्धायां किम् ? पुत्रमाह्वयति ॥

---

१ वहति भारमित्यत्र प्रापणार्थस्य सकर्मकस्य वहेर्नदी वहतीत्यत्र स्यन्दनरूपेऽर्थान्तरे वर्त्तमानतयाऽकर्मकत्वम् । २ जीवतीत्यत्र च प्राणरूपकर्मणो धात्वर्थेन—प्राणधारणरूपेण—उपसङ्ग्रहात्, = अन्तर्भावात्—जीवतेरकर्मकता ।

३ वर्षणकर्मणो जलस्य प्रसिद्धत्वाद्वर्षतेरकर्मकत्वम् । ४ हितात्पुरुषाद्यो न संश्रृणुते = स्वहितं न संश्रृणुते स किंप्रभुः = कुत्सितो राजेत्यर्थः । अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तदविवक्षयाऽकर्मकत्वम् । ५ अत्र उत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः, संमाननाचार्यकरणप्रभृतय इतरे प्रयोगोपाधयः = वाच्यत्वाभावेऽपि आर्थिकाः शब्दप्रयोगे सत्तामात्रेण निमित्तभूताः । आत्मनेपदद्योत्या इति यावत् । ६ उत्सञ्जनम् = उत्क्षेपणम् । उत्थापनमिति यावत् । ( 'उछालना' 'लाठी आदि भांजना' ) । ७ विनयते=परिशोधयति । ( 'नक्की करना' 'चुकता करना') । ८ विनियोगः=व्ययः । ('लगाना' 'खर्च करना') ।

**उदश्चरः सकर्मकात्** ।१।३।५३। धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः॥ **समस्तृतीयायुक्तात्** ।१।३।५४। रथेन सञ्चरते॥ **दाणश्च सा चेच्चतुर्थ्यर्थे** ।१।३।५५। समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते कामी।

**उपाद्यमः स्वकरणे** ।१।३।५६। स्वकरणं = स्वीकारः[3]। भार्यामुपयच्छते॥ **विभाषोपयमने** ।१।२।१६। यमः सिच् किद्वा विवाहेऽर्थे। रामः सीतामुपायत। उपायंस्त वा। ऊढवानि-त्यर्थः॥ **ज्ञाश्रुस्मृदृशां सनः** ।१।३।५७। सन्नन्तानामेषां प्राग्वत्। धर्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते॥

**नाऽनोर्ज्ञः** ।१।३।५८। पुत्रमनुजिज्ञासति॥ **प्रोपाभ्यां युजेरयज्ञपात्रेषु** ।१।३।६४। प्रयुङ्क्ते। उपयुङ्क्ते। ***स्वराद्यन्तोपसर्गादिति वाच्यम्**। उद्युङ्क्ते। नियुङ्क्ते। अयज्ञपात्रेषु किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति॥ **समः क्ष्णुवः** ।१।३।६५। संक्ष्णुते शस्त्रम्॥ **गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः** ।१।३।३२। गन्धनं हिंसा। उत्कुरुते। सूचयतीत्यर्थः॥ अवक्षेपणं भर्त्सनम्। श्येनो वर्तिकामुदाकुरुते। भर्त्सयत इत्यर्थः। हरिमुपकुरुते। सेवते। परदारा-

---

१ उत्पूर्वाच्चरतेः सकर्मकादात्मनेपदं स्यादित्यर्थः। २ संपूर्वात्तृतीयान्तेन युक्ताच्चरतेरात्मनेपदं स्यात्। ३ स्वीकारः=स्वत्वेन परिग्रहः। ४ भार्यात्वेन स्वीकृतवान्। ५ आत्मनेपदमित्यर्थः। ६ अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात्। ७ अनुज्ञातुमिच्छतीत्यर्थः। ८ सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव।

न्मप्रकुरुते। तेषु सहसा प्रवर्तते। एधोदकस्योपस्कुरुते। गुणमाधत्ते। कथाः प्रकुरुते। प्रकथयतीत्यर्थः। शतं प्रकुरुते[1]। धर्मार्थं विनियुङ्क्ते। एषु किम्? कटं करोति॥ **इत्यात्मनेपदप्रक्रिया**॥६॥

## अथ परस्मैपदप्रक्रिया॥

**शेषात्कर्तरि परस्मैपदम्**। श्वि[2]। श्वयति॥ **विभाषा श्वेः** ।६।१।३०। संप्रसारणं लिटि यङि च। शुशाव। शुशुवतुः॥ ***श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः**। शिश्वाय[3]। शिश्वियतुः। शिश्वियुः। शूयात्। जॄस्तन्भ्वित्यङ् वा॥ **श्वयतेरः** ।७।४।१८। अङि। अश्वत्। अश्वः। 'विभाषे'ति चङ्। अशिश्वियत्। अश्वयीत्[4]॥ **अनुपराभ्यां कृञः** ।१।३।७९। कर्तृगे फले गन्धनादौ च परस्मैपदं स्यात्। अनुकरोति[5]। पराकरोति। **अभिप्रत्यतिभ्यः क्षिपः** ।१।३।८०। **क्षिप** प्रेरणे। स्वरितेत्[6]। अभिक्षिपति। **प्राद्वहः** ।१।३।८१। प्रवहति[7]॥ **परेर्मृषः** ।१।३।८२। परिमृष्यति[8]॥ **व्याङ्परिभ्यो**

---

१ प्रकुरुते = व्ययं करोति। **इत्यात्मनेपदप्रक्रिया**।

२ 'टु ओश्वि गतिवृद्ध्यो' रिति भौवादिकोयं धातुः। ३ णलि एतत्सम्प्रसारणाभावपक्षे 'श्वि' इत्यस्य द्वित्वेऽभ्यासस्य सम्प्रसारणे शुश्वायेतिरूपं स्यादत आह—**श्वयतेरिति**। अभ्यासलक्षणस्य = 'लिट्यभ्यासस्योभयेषा'-मित्यभ्याससम्प्रसारणस्य। तेन लिट्यभ्यासस्येति सम्प्रसारणं नाऽत्र पक्षे प्रवर्तते इति अभ्यासे इकार एव श्रूयते न तूकारइत्याशयः। तदाह—**शिश्वायेति**। ४ ह्म्यन्तेति न वृद्धिः।

५ कर्तृगे फले कृञः स्वरितञित इत्यात्मनेपदं प्राप्नोति, गन्धनादौ च परगामिन्यपि गन्धनावक्षेपणेत्यादिनाऽऽत्मनेपदं प्राप्नोति, तद्बाधनायेदमित्याशयः। ६ कर्तृगेऽपि फले परस्मैपदार्थमिदमित्याशयः। ७ प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः। ८ परिपूर्वान्मृष्यतेः कर्तृगेऽपि फले परस्मैपदम्।

स्यादीनामिडागमश्च । चिण्वद्भावपक्षे अयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता । भविता । भाविष्यते । भविष्यते । भूयताम् । अभूयत । भूयेत । भाविषीष्ट । भविषीष्ट ॥

**चिण् भावकर्मणोः ।३।१।६६।** च्लेश्चिण्[1] स्याद्भावकर्मवाचिनि ते परे । अभावि । अभाविष्यत । अभविष्यत ।

अकर्मकोऽप्युपसर्गवशात्[2] सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् । णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयांबभूवे । भावयामासे । चिण्वदिट् । आभीयत्वेनासिद्धत्वा[3]ण्णिलोपः । भावयिष्यते । भाविष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भावयिषीष्ट । भाविषीष्ट । अभावि । अभाविषाताम् । अभावयिषाताम् । बुभूष्यते । बुभूषांचक्रे । बुभूषिता । बुभूषिष्यते । बोभूयते । अकृत्सार्वधातुकेति दीर्घः । स्तूयते[4] विष्णुः । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते । अस्तावि । अस्ताविताषाम् । अस्तोषाताम् । गुणोर्तीति गुणः । अर्यते । स्मर्यते । ऋच्छत्यृतामिति गुणः । आरे । सस्मरे[5] । उपदेशग्रहणाच्चिण्वदिट् । आरिता । अर्ता । स्मारिता । स्मर्ता ।

नलोपः । स्रस्यते । सस्रंसे । इदितस्तु—नन्द्यते । इज्यते ॥

---

१ च्लेः सिजित्यतः इच्लेरिति, चिण्ते पद' इत्यतः 'ते' इति चानुवर्तते । २ 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इत्युक्तेः । ३ 'चिण्वदिट' इत्यादिः । 'णेरनिटी'ति णिलोप इत्यर्थः । ४ कर्मणि लकारः । ५ गुणोर्त्तीति गुणः ।

**तनोतेर्यकि ६।४।४४।** आदन्तादेशो वा स्यात् । तायते । तन्यते ॥ **तपोऽनुतापे च ।३।१।६५।** च्लेश्चिण्न कर्मकर्तरि अनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे । दधे ॥ **आतो युक् चिण्कृतोः ।७।३।३३।** आदन्तानां युगागमश्चिणि ञ्णिति कृति च । दायिता । दाता । दायिषीष्ट । दासीष्ट । अदायि । अदायिषाताम् । शम्यते मोहो मुकुन्देन ॥ **चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।६।४।९३।** चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा । शामिता । शमिता । शमयिता । शामयिष्यते । शमिष्यते । शमयिष्यते । ण्यन्तत्वाभावे—शम्यते[2] मुनिना ॥ **नोदात्तोपदेशस्य मान्तस्यानाचमेः ।७।३।३४।** उपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अशमि । अदमि । उदात्तोपदेशस्येति किम् ? अगामि । मान्तस्येति किम् ? अवादि । अनाचमेरिति किम् ? आचामि ॥ **❀अनाचमिकमिवमीनामिति[3] वक्तव्यम् ।** अकामि[4] । अवामि ॥ **भञ्जेश्च चिणि ।६।४।३३।** नलोपो वा । अभाजि । अभञ्जि । लभ्यते ॥ **विभाषा चिण्णमुलोः ।७।१।६९।** लभेर्नुम्[5] । अलम्भि । अलाभि । **इति भावकर्मप्रक्रिया ॥ ८ ॥**

---

१ 'शामिते' त्यादौ 'जनीजृष्क्नसु'इत्यमन्तत्वान्मित्वेन 'मितां ह्रस्व'इति ह्रस्वे प्राप्ते दीर्घोऽनेन विकल्प्यते । २ शमधातोरकर्मकतया भावे लकारः । ३ आचमिकमिवमिवर्जानामुपधाया वृद्धिर्न स्यादित्यर्थः । तेन अकामीत्यत्र उपधावृद्धिर्भवत्येवेत्याशयः । ४ चिणि 'आयादय' इति णिङभावे इदम् । ५ लभेर्नुमागमो वा स्याच्चिण्णमुलोः । इति भावकर्मप्रक्रिया ।

## अथ कर्मकर्तृप्रक्रिया

यदा[1] कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामपि अकर्मकत्वात्कर्तरि भावे च लः ॥ **कर्मवत्कर्मणा तुल्यक्रियः** ।३।१।८७। कार्यातिदेशोऽयम्[2] । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् । तेन यगात्मनेपदं चिण् चिण्वदिट् च स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे तु- भिद्यते काष्ठेन ॥ **❀भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वक्तव्यम्** । अलंकुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकीर्ष्ट । अवाकरिष्ट । गिरते । अगीर्ष्ट । अगरिष्ट । आद्रियते । आदृत । किरादि- स्तुदाद्यन्तर्गणः । चिकीर्षते कटः । अचिकीर्षिष्ट ॥ **तपस्तपःकर्म- कस्यैव**[3] ।३।१।८८। कर्ता कर्मवत् । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । अतप्त । तपःकर्मकस्यैवेति किम् ? उत्तपति सुवर्णं सुवर्णकारः ॥ **सकर्मकाणां प्रतिषेधो वक्तव्यः** । अजां ग्रामं नयति । **दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्** ॥

**न दुहस्नुनमां यक्चिणौ** ।३।१।८९। एषां कर्मकर्तरि यक्- चिणौ न । शप् । तस्य लुक् । गौः पयो दुग्धे ॥

---

१ यदा सौकर्यातिशयं द्योतयितुं कर्तुः—देवदत्तादेर्व्यापारो न विवक्ष्यते, तदा करणकर्मादिकारकान्तराण्यपि कर्तृसञ्ज्ञां लभन्ते, स्वव्यापारे स्वतन्त्र- त्वात्, स्वतन्त्रस्यैव च कर्तृत्वात् । तेन पूर्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात्तत्र कर्तरि लकार इत्याशयः । २ शास्त्रस्याऽपि कार्यार्थतया कार्याति- देशस्य मुख्यत्वादित्याशयः । ३ तपःकर्मकस्यैव तपः कर्ता कर्मवदित्यर्थः । एवञ्च विधिरयम् । एवकारस्तु व्यर्थ एवेति वृत्तिकृतः ।

**अचः कर्मकर्तरि ।३।१।६२।** अजन्ताच्च्लेश्चिण्वा कर्मकर्तरि ते परे । अकारि । अकृत ॥ **दुहश्च ।३।१।६३।** [1]तथा । अदोहि । अदुग्ध । लुग्वेति क्सस्य लुक्पक्षेऽयम् । अधुक्षत । उदुम्बरः फलं पच्यते ॥ **कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च ।३।१।९०।** अनयोः कर्मकर्तरि न यक्, किन्तु श्यन्परस्मैपदं च । आत्मनेपदापवादः । कुष्यति कुष्यते पादः । रज्यति रज्यते वस्त्रम् । यगविषये तु [2]नास्य प्रवृत्तिः । [3]कोषिषीष्ट । रंक्षीष्ट ॥ **इति कर्मकर्तृप्रक्रिया ॥ ९ ॥**

## अथ लकारार्थप्रक्रिया ॥

**अभिज्ञावचने लृट् । ३ । २ । ११२ ।** [4]स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः ॥ **वस निवासे ।** स्मरसि कृष्ण गोकुले वत्स्यामः [5]। एवं बुध्यसे चेतयसे इत्यादि प्रयोगेऽपि ॥ **न यदि ।३।२।११३।** [6]यद्योगे उक्तं न । अभिजानासि यद्वने अभुञ्ज्महि ? ॥ **विभाषा साकाङ्क्षे ।३।२।११४।** उक्तविषये लृङ् वा, लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः ।

---

१ कर्मकर्तरि तशब्दे परे दुहेश्चिण्वा स्यादित्यर्थः । कर्मणि लकारे तु न विकल्पः—अदोहि गौर्गोपिनेति । २ किन्तु यगविषये एव श्यन्परस्मैपदञ्चेत्यर्थः । ३ 'स्वयमेवे'ति शेषः । कर्मकर्तरि लकारः । **इति कर्मकर्तृप्रक्रिया ।**

४ अभिज्ञा = स्मृतिः-उच्यते = बोध्यतेऽनेनेति विग्रहः । तदाह—**स्मृ**तीति । स्मृतिबोधके पदे समीपोच्चारिते सति भूतानद्यतने लृडित्यर्थः ।

५ तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवादित्याशयः । ६ उक्तम् = अभिज्ञावचने लृडिति लृट् । तेन तत्र औत्सर्गिको लङेव ।

स्मरसि कृष्ण वने वत्स्यामस्तत्र गाश्चारयिष्यामः ? । वासो[1] लक्षणं, चारणं लक्ष्यम् । पक्षे लङ् ।

**परोक्षे लिट्** । चकार । उत्तमपुरुषे चित्तविक्षेपादिना परोक्ष्यम् । सुप्तोऽहं किल विललाप । ***अत्यन्तापह्नवे लिड् वक्तव्यः** । कलिङ्गेष्ववात्सीः ? नाहं कलिङ्गान् जगाम[2] ॥ **प्रश्ने चासन्नकाले** ।३।२।११७। पृच्छ्यमानेऽर्थे लिड्विषये लङ्लिटौ स्त आसन्नकाले[3] । अगच्छत्किम् ?। जगाम किम् ?। **लट् स्मे** ।३।२।११८। लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥ **अपरोक्षे च** ।३।२।११९। भूतानद्यतने लट् स्यात्स्मयोगे । एवं स्म पिता ब्रवीति ॥ **ननौ पृष्टप्रतिवचने[4]** ।३।२।१२०। भूते लट् । अकार्षीः किम् ?, ननु[5] करोमि भोः ॥ **नन्वोर्विभाषा** ।३।२।१२१। अकार्षीः किम् ? न करोमि[6] । नाकार्षम् । अहं नु करोमि । अहं न्वकार्षम् ॥ **पुरि लुङ् चास्मे** ।३।२।१२२। पुरायोगे भूतानद्यतने वा लुङ् चाल्लट् न तु स्मयोगे । पक्षे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे इति किम् ? यजति स्म पुरा । 'भविष्यती'त्यनुवर्तमाने—**यावत्पुरानिपात-**

---

१ वासः = वने वासः । **लक्षणं**—प्रसिद्धत्वात् । **चारणं**—परिचायकं—गोचारणम् । २ 'कलिङ्गेष्ववात्सी'रिति प्रश्नः । उत्तरे तु 'नाऽहं कलिङ्गान् जगामे'ति गमनस्याऽत्यन्तं गोपनम् । तत्र वासस्य का कथा—अहन्तत्र गत एव नेत्यर्थः । एवञ्च जगामेत्यत्र लिट् । ३ पञ्चवर्षाभ्यन्तरः काल आसन्न इति वृत्तिकृतः । प्रयोक्तृदृष्टिपथाऽतिक्रान्तत्वमासन्नत्वमिति तु **परे** ।

४ पृष्टस्य प्रतिवचने = उत्तरे । ५ अकार्षमित्यर्थः । ६ नाकार्षमित्यर्थः ।

**योर्लट्** ।३।३।४। यावद्भुङ्क्ते । पुरा भुङ्क्ते । निपातयोः किम्? यावद्दास्यते तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ॥

**विभाषा कदाकर्ह्योः** ।३।३।५। लट् स्यात् । कदा कर्हि वा भुङ्क्ते, भोक्ष्यते भोक्ता वा ॥ **वर्तमानसामीप्ये वर्तमानवद्वा** ।३।३।१३१। वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसमीपे भूते भविष्यति च वा स्युः । कदा आगतोऽसि? अयमागच्छामि, आगमं वा । कदा गमिष्यसि? एष गच्छामि । एष गमिष्यामि वा ॥ **आशंसायां भूतवच्च** ।३।३।१३२। भविष्यत्काले भूतवद्वर्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीद्वर्षति वा वर्षिष्यति वा, धान्यमवाप्स्म वपामो वप्स्यामो वा ॥ **क्षिप्रवचने लट्** ।३।३।१३३। क्षिप्रपर्याये उपपदे पूर्वविषये लट् । वृष्टिश्चेत्क्षिप्रमाशु त्वरितं वा आयास्यति, शीघ्रं वप्स्यामः ॥ **आशंसावचने लिङ्** ।३।३।१३४। आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात् न भूतवत् । गुरुश्चेदुपेयात् आशंसे अधीयीय । **हेतुहेतुमतोर्लिङ्** ३।३।१५६। वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह हन्तीति पलायते ॥ **इच्छार्थेषु लिङ्लोटौ** ।३।३।१५७। इच्छामि भुञ्जीत भुङ्क्तां वा भवान् । एवं कामये, प्रार्थये । **कामप्रवेदने**

---

१ यावत्पुरा निपातौ निश्चयं द्योतयतः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । २ यावत् = यत्परिमाणकम् । तावत् = तत्परिमाणकम् । 'यत्तदेतेभ्य' इति वत्वन्तावेतौ न निपातौ । ३ अप्राप्तस्य प्राप्तेरिच्छा आशंसा । ४ परं प्रति स्वाभिप्रायाविष्करणे ।

**इति वक्तव्यम्** । नेह । इच्छन्करोति ॥ **लिङ् च** ।३।३।१५९ समानकर्तृकेषु इच्छार्थेषु । भुञ्जीयेतीच्छति ॥

**विधिनिमन्त्रणेति लिङ्** । **विधिः** प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत । **निमन्त्रणं** नियोगकरणम्, आवश्यके श्राद्ध-भोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत । **आमन्त्रणं** काम-चारानुज्ञा । इह आसीत । **अधीष्टः** सत्कारपूर्वको व्यापारः । पुत्र-मध्यापयेत् । **संप्रश्नः** संप्रधारणम् । किं भो वेदमधीयीय उत तर्कम् ? । **प्रार्थनां** याच्ञा । भो भोजनं लभेय । एवं लोट् ॥

**प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च** ।३।३।१६३। प्रैषो विधिः । **अतिसर्गः** कामचारानुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान् यजताम् ॥ **अर्हे कृत्यतृचश्च** ।३।३।१६९। चाल्लिङ् । त्वं कन्यां वहेः ॥ **शकि लिङ् च** ।३।३।१७२। शक्तौ लिङ् स्याच्चात्कृत्याः । त्वं भारं वहेः ॥ **धातुसंबन्धे प्रत्ययाः** ।३।४।१। धात्वर्थानां संबन्धे यत्र काले प्रत्यया उक्ता-स्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन्ददर्श । भूते लट् । अतीत-वासकर्तृकर्तृकं दर्शनमित्यर्थः । सोमयाज्यस्य पुत्रो भविता । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् ॥ **क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः** ।३।४।२। पौनःपुन्ये

---

१ अत्र परं प्रति स्वाभिप्रायाविष्करणं नास्ति । २ श्राद्धे दौहित्रस्य पवित्रतमत्वात्तत्कीर्तनम् । ३ प्रश्नपूर्वकं निर्णयः ।

[1]भृशार्थे च द्योत्ये धातोर्लोट्, तस्य च हिस्वौ स्तस्तिङामपवादः । तौ च हिस्वौ क्रमेण परस्मैपदात्मनेपदसंज्ञौ स्तस्तिङ्संज्ञौ च । तध्वमोर्विषये तु हिस्वौ वा स्तः । पुरुषैकवचनसंज्ञे नानयोरतिदिश्येते, हिस्वविधादसामर्थ्यात्, तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः कर्तरि, आत्मनेपदिभ्यः स्वो भावकर्मकर्तृषु ॥

**समुच्चयेऽन्यतरस्याम्** ।३।४।३। अनेकक्रियासमुच्चये द्योत्ये [2]प्रागुक्तं वा स्यात् । **यथाविध्यनुप्रयोगः पूर्वस्मिन्** ।३।४।४। आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ॥ **समुच्चये सामान्यवचनस्य** ।३।४।५। समुच्चये लोड्विधौ सामान्यर्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिः ॥ ***क्रियासमभिहारे द्वे वाच्ये** । याहि याहीति याति । पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्तमानं यानं यातीत्यस्य । इतिशब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति । [3]एवं यातः । यान्ति । याथः । याथ । यात [4]यातेति यूयं याथ । याहि याहीत्ययासीत् । यास्यति वा । अधीष्वाधीष्वेत्यधीते । ध्वंविषये

१ क्रियासमभिहारस्य धात्वर्थस्य लोट् द्योतक इत्यवधेयम् । २ धातोर्लोट् स्यात्, लोटश्च हिस्वौ स्तः, तध्वमोर्विषये च हिस्वौ वा स्त इत्यर्थः ।

३ याहि याहीति यातः । याहि याहीति–यान्ति । याहि याहीति–यासि । याहि याहीति–याथः । याहि याहीति यूयं यात इत्याद्यवधेयम् । ४ हिभावपक्षे याहि याहीति–यातेति भवति । हिभावाभावपक्षे त्वाह–**यात यातेति** ।

तु पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । **समुच्चये**—सक्तून्पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेति-अभ्यवहरते । तध्वमोस्तु पिबत खादतेति-अभ्यवहरथ । भुङ्ग्ध्व-मास्वादध्वमिति-अभ्यवहरध्वे । पक्षे तु हिस्वौ । अत्र समुच्चीय-मानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे—सक्तून् पिबति । धानाः खादति । अन्नं भुङ्क्ते । दाधिकमास्वादते । एतेन—'**पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थम-स्वास्थ्यमहर्दिवं दिवः**'[1] । इति व्याख्यातम् । अवस्कन्दनलव-नादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात् । इह पुनःपुनश्चस्कन्देत्यादिरर्थ इति व्याख्यानं भ्रममूलकमेव, द्वितीयसूत्रे क्रियासमभिहारे इत्यस्याननुवृत्तेः, लोडन्तस्य द्वित्वापत्तेश्च । पुरीमवस्कन्देत्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद्भ्रम एव, 'पुरुषमचनसंज्ञे इह ने'त्युक्तत्वात् ॥

**इति लकारार्थप्रक्रिया ॥ १० ॥**

---

## अथ कृदन्तप्रकरणम् ।

**धातोः** । ३ । १ । ९१ । आ तृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥ **वाऽसरूपोऽस्त्रियाम्** ।३।१।९४। अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्स-

---

१ माघपद्यमेतत् ।

र्गस्य वा बाधकः स्त्र्यधिकारोक्तं विना ॥ **कृत्याः** ।३।१।९५। ण्वुल्तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ **कर्तरि कृत्** ।३।४।६७। इति प्राप्ते[1] ॥ **तयोरेव कृत्यक्तखलर्थाः** ।३।४।७०। एते भावकर्मणोरेव स्युः ॥ **तव्यत्तव्यानीयरः**[2] ।३।१।९६। धातोरेते स्युः । एधितव्यम् । एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो[3] वा धर्मस्त्वया ॥ ***केलिमर उपसंख्यानम्** । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । कर्मणि प्रत्ययः ॥ ***वसेस्तव्यत्कर्तरि णिच्च** । वसतीति वास्तव्यः ॥ **कृत्यचः** ।८।४।२९। उपसर्गस्थान्निमित्तात्परस्याच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम् ? प्रमग्नः ॥ ***निर्विण्णस्योपसंख्यानम्** । **णेर्विभाषा** ।८।४।३०। प्राग्वत् । प्रयापणीयम् । प्रयापनीयम् ॥ **हलश्चेजुपधात्** ।८।४।३१। हलादेरिजुपधाद्धातोः परस्य कृन्नस्याचः परस्य णो वा । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् ? प्रोहणीयम् । इजुपधात्किम् ? प्रवपणीयम् ॥ **इजादेः सनुमः** ।८।४।३२। सनुमश्चेद्भवति इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव ॥ **इखि गतौ**[5] । प्रेङ्खणीयम् । इजादेः किम् ? । **मगि** सर्पणे । प्रमङ्गनीयम् ॥ **वा निंसनिक्षनिन्दाम्** ।८।४।३३। एषां नस्य णो वा कृति ।

---

१ इत्यनेन कृत्यसञ्ज्ञकानां कर्त्तरि विधाने प्राप्ते विधिमाहेत्यर्थः । २ तकाररेफौ स्वार्थौ । ३ कर्मणि तव्यानीयःप्रत्ययौ । ४ कृत्यच इत्येव सिद्धे नियमार्थमेतत् । ५ भौवादिकः परस्मैपदी ।

**मृजेर्विभाषा** ।३।१।११३। मृजेः[1] क्यब्वा । मृज्यः ॥ **ऋहलोर्ण्यत्** ।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च ण्यत् ॥ **चजोः कु घिण्ण्यतोः** ।७।३।५२। चजोः कुत्वं घिति ण्यति च । निष्ठायामनिट इति वक्तव्यम् । तेनेह न । गर्ज्यम् । मार्ग्यः ॥ **ओरावश्यके** ।३।१।१२५। उवर्णान्ताद्धातोर्ण्यत् । लाव्यम् । पाव्यम् ।

'लुम्पेदवश्यमः[2] कृत्ये तुंकाममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥'

अवश्यलाव्यम् ॥ **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा** ।३।४।६८। एते कृत्यान्ताः कर्तरि वा निपात्यन्ते । भवतीति भव्यः । भव्यमनेन वा ॥ **भोज्यं[3] भक्ष्ये** ।७।३।६९। भोग्यमन्यत्[4] ॥ **वचोऽशब्दसंज्ञायाम्** ।७।३।६७। न कुत्वम् । वाच्यम् । वाक्यमन्यत् ॥ **राजसूय[5]सूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** ।३।१।११४। एते सप्त

---

१ 'मृजेर्वृद्धि'रिति वृद्धिः । २ कृत्यप्रत्यये परेऽवश्यंशब्दस्य मकारो लुप्यते । काममनसो परयोः तुमो मस्य लोपः । हिततयोः परयोः समो मस्य वा लोपः । मांसशब्दाऽकारस्य लोपः—युड्घञ्परके पच्धातौ परे । तत्र— अवश्यलाव्यम् । वक्तुकामः । गन्तुमनाः । सततम्—सन्ततम् । सहितं-संहितम् । मांसपचनी । मांस्पाक इत्याद्युदाहरणानि ।

३ भक्ष्ये गम्ये ण्ये परतो भुजेः कुत्वाभावो निपात्यते । ४ अन्यत् = स्त्रीधनसुखादिकं,—भोग्यम् = उपभोगार्हमित्यर्थः । ५ राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यो यज्ञः—राजसूयः । सरत्याकाशे इति सूर्यः । मृषा उद्यते

क्यवन्ता निपात्यन्ते ॥ **भिद्योध्यौ नदे** ।३।१।११५। नदे किम् ? भेत्ता । उज्झिता ॥ **पुष्यसिध्यौ नक्षत्रे** ।३।१।११६। अधिकरणे क्यब्निपात्यन्ते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन्सिध्यः ॥ **विपूयविनीयजित्या मुञ्जकल्कहलिषु** ।३।१।११७। विपूयो मुञ्जः । विनीयः कल्कः । जित्यो हलिः ॥ **प्रत्यपिभ्यां ग्रहेः** ।३।१।११८। छन्दसीति वक्तव्यम् । प्रतिगृह्यम् । अपिगृह्यम् । लोके तु—प्रतिग्राह्यम् । अपिग्राह्यम् ॥ **पदास्वैरिबाह्यापक्ष्येषु च** ।३।१।११९। अवगृह्यम् । प्रगृह्यं पदम् । अस्वैरी परतन्त्रः । गृह्यकाः शुकाः । ग्रामगृह्या सेना । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ॥

**विभाषा कृवृषोः** ।३।१।१२०। कृत्यम् । वृष्यम् । कार्यम् । वर्ष्यम् ॥ **युग्यं च पत्रे** ।३।१।१२१। पत्रं वाहनम् । योग्यमन्यत् ॥ **अमावस्यदन्यतरस्याम्** ।३।१।१२२। अमा सह वसतोऽस्यां चन्द्रार्काविति—अमावस्या । अमावास्या वा ॥ **अग्नौ**

---

इति मृषोद्यम् । रोचते इति रुच्यः । गोप्यते इति कुप्यम् = सुवर्णरजतभिन्नं ताम्रलोहधान्यादिकम् । कृष्टे स्वयमेव पच्यन्ते इति कृष्टपच्याः ।

१ भिनत्ति कूलमिति—भिद्यः । उज्झत्युदकमिति—उध्यः । उज्झेर्धत्वं निपात्यते । २ एते क्यवन्ता निपात्यन्ते । पूङ्–नीञ्–जिभ्यः क्यप् । ३ विपूयः = रज्ज्वादिकरणाय इषीकादिनिरसनादिना मुद्गरकुट्टनादिना च शोधयितव्यो मुञ्ज इत्यर्थः । ४ कल्कः = पिष्ट ओषधिविशेषः, पापं वा । ५ जित्यः = बलेन क्रष्टव्यः । हलिः = कृष्टसमीकरणसाधनस्थूलकाष्ठविशेषः । ६ अमोपपदाद्वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते इत्यर्थः ।

परिचाय्योपचाय्यसमूह्याः ।३।१।१३१। अग्नावेते साधवः॥ क्रतौ कुण्डपाय्यसंचाय्यौ ।३।१।१३०। कुण्डेन पीयतेऽस्मिन् सोमः—कुण्डपाय्यः। संचीयतेऽसौ सञ्चाय्यः।

चित्याग्निचित्ये च ।३।१।१३२। चित्योऽग्निः। अग्नेश्चयनम्—अग्निचित्या॥ इति कृत्यप्रत्ययाः॥

अथ कृत्प्रक्रिया॥

ण्वुल्तृचौ ।३।१।१३३। धातोरेतौ स्तः। 'कर्तरि कृ'दिति कर्त्रर्थे॥ युवोरनाकौ ।७।१।१। यु वु एतयोरनुनासिकयोरेतौ स्तः। कारकः। कर्ता॥ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच्स्यात्। नन्दयतीति नन्दनः। जनार्दनः। लवणः। गणे निपातनाण्णत्वम्। ग्राही। स्थायी। मन्त्री। पचः। आकृतिगणोऽयम्॥

इगुपधज्ञाप्रीकिरः कः ।३।१।१३५। एभ्यः कः स्यात्। क्षिपः। बुधः। कृशः। ज्ञः। प्रियः। किरः॥ आतश्चो-

१ अग्निधारणार्थे स्थलविशेषे एते साधवः। अग्निशब्द इष्टकारचितस्थण्डिलविशेषेऽत्र बोध्यः। परिपूर्वाच्चिनोतिर्ण्यदायादेशश्च, संपूर्वाद्वहेः संप्रसारणदीर्घौ निपात्येते। २ अग्नावेतौ निपात्येते। ३ चीयते इति चित्यः। कर्मणि क्यप्। इति कृत्यप्रक्रिया।

४ एतौ = ण्वुल्तृचौ। ५ करोतीति—कारकः। कर्त्ता। ६ द्वन्द्वान्ते श्रूयमाणतया आदिशब्दस्य प्रत्येकमन्वय इत्याशयेनाह—नन्द्यादेरिति। ७ 'णेरनिटी'ति णिलोपः। ८ लुनातीति लवणः। ९ गणे = नन्द्यादिगणे। १० पचतीति पचः। ११ अयं = पचादिः,—आकृतिगणः। १२ 'आतो लोप इटि चे'त्यालोपः। १३ कॄधातोः के 'ऋत इ'दितीत्त्वे रपरत्वम्।

पसर्गे ।३।१।१३६। प्रज्ञः । सुग्लः ॥ **पाघ्राध्माधेट्दृशः शः** ।३।१।१३७। एभ्यः शः स्यात् । पिबः । जिघ्रः । धमः । धयः । पश्यः ॥ **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च**[2] ।३।१।१३८। लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातयः । साहयः । अनुपसर्गात्किम् ? प्रलिपः ॥ ***गवादिषु**[3] **विन्देः संज्ञायाम्** । गोविन्दः[4] । अरविन्दम्[5] ॥ **ददातिदधात्योर्विभाषा**[6] ।३।१।१३९। ददः । दधः । पक्षे—वक्ष्यमाणो णः ॥ **ज्वलितिकसन्तेभ्यो**[7] **णः** ।३।१।१४०। वा स्यात् । ज्वालः । ज्वलः । चालः । चलः ॥ **श्याद्व्यधास्रुसंस्र्वतीणवसाऽवहृलिहश्लिषश्वसश्च**[8] ।३।१।१४१। अवश्यायः । आत्—दायः । धायः । व्याधः । आस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ॥ **विभाषा ग्रहः**[9] ।३।१।१४३। व्यवस्थितविभाषेयम् । तेन जलचरे ग्राहः । ज्योतिषि ग्रहः ॥ **गेहे कः** ।३।१।१४४। गृह्णाति धान्यादिकमिति गृहम् ॥ **शिल्पिनि ष्वुन्** ।३।१।१३५। क्रियाकौशलं शिल्पम्, तद्वत्कर्तरि ष्वुन् स्यात् ॥ **षः प्रत्ययस्य**

---

१ उपसर्गे उपपदे आदन्ताद्धातोः कः स्यात् । २ उपसर्गरहितेभ्यो लिम्पादिभ्यः शः स्यात् । ३ गवादिषूपपदेषु विन्देः शः स्यात् । ४ गाः = उपनिषद्वाचः प्रमाणतया विन्दति = लभते इति गोविन्दः । ५ अराः—अरसदृशानि पत्राणि विन्दतीति—अरविन्दम् । ६ आभ्यां वा शः स्यात् ।

७ इतिशब्द आद्यर्थः । ज्वलादिभ्यः कसन्तेभ्यश्च णो वा स्यात् । ८ श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात् । ९ ग्रहेर्णो वा स्यात् ।

।१।३।६। आदिरित् । **नृतिखनिरञ्जिभ्य एव** । नर्त्तकः । खनकः ॥ * **असि अकेऽने च रञ्जेर्नलोपो वाच्यः** । रजकः ॥ **गः स्थकन्** ।३।१।१४६। गायतेस्थकन् । गाथकः ॥ **ण्युट् च** ।३।१।१४७। गायनः ॥ **प्रुसृल्वः समभिहारे वुन्** ।३।१।१४९। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ॥ **आशिषि च** ।३।१।१५०। वुन् स्यात् । जीवतात्—जीवकः ॥ **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते पदे 'कर्मणी'त्यादौ वाच्यत्वेन स्थितं यत् कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥ **कर्मण्यण्** ।३।२।१। कर्मण्युपपदे धातोरण् । कुम्भं करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः** ।३।२।३। कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कः स्यान्नाऽण् । अणोऽपवादः । गोदः । कम्बलदः । अनुपसर्गे किम् ? गोसंदायः ॥ * **मूलविभुजादिभ्यः कः** । मूलानि विभुंजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ॥

**सुपि स्थः** ।३।२।४। कः स्यात् । समस्थः । विषमस्थः । 'सुपी'ति योगविभागादन्यस्मादपि । द्वाभ्यां पिबति इति द्विपः ॥ **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशंकङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** ।८।३।९७। एभ्यः स्थस्य

---

१ विभुजति = उत्पाटयति । २ अत्र सुपिति प्रत्याहारो न सप्तमी-बहुवचनम् । ३ सुप्युपपदे आदन्तात्कः स्यादित्यर्थः । ४ अन्यस्मात् = स्थाधातुभिन्नादपि धातोः क इत्यर्थः । ५ द्वाभ्यां = शुण्डादण्डमुखाभ्याम् ।

सस्य षः स्यात् । द्विष्ठः । त्रिष्ठः ॥ **तुन्दशोकयोः परिमृजापनुदोः ।३।२।५।** तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां[1] कः ॥ ***आलस्यसुखाऽऽहरणयोरिति वक्तव्यम्** । तुन्दपरिमृजोऽलसः । शोकापनुदः—सुखस्याऽऽहर्ता ॥ **प्रे दाज्ञः ३।२।६।** कः स्यात् । सर्वप्रदः । पथिप्रज्ञः ॥ **समि ख्यः ।३।२।७।** गोसंख्यः ॥ **गापोष्टक् ।३।२।८।** कर्मण्युपपदे[2] । सामगः । ***पिबतेः सुराशीध्वोरिति वाच्यम्** । सुरापी । शीधुपी ॥ अन्यत्र क्षीरपा ब्राह्मणी ।

**हरतेरनुद्यमनेऽच् ।३।२।९।** अंशहरः । अनुद्यमने किम् ? भारहारः ॥ * **शक्तिलाङ्गलाङ्कुशतोमरयष्टिघट[3]घटीधनुष्षु ग्रहेरुपसङ्ख्यानम्** । शक्तिग्रहः ॥

**वयसि च ।३।२।१०।** उद्यमनार्थं सूत्रम् । कवचहरः कुमारः ॥ **आङि ताच्छील्ये ।३।२।११।** पुष्पाण्याहरति तच्छीलः पुष्पाहरः ॥ **अर्हः ।३।२।१२।** अच्स्यात् कर्मण्युपपदे । पूजार्हा ब्राह्मणी ॥ **स्तम्बकर्णयो रमिजपोः ।३।२।१३।** **हस्तिसूचकयोरिति वक्तव्यम्** । स्तम्बेरमो हस्ती । कर्णेजपः[4] सूचकः ॥

**अधिकरणे शेतेः ।३।२।१५।** खे शेते खशयः ॥ **पार्श्वादिषूपसंख्यानम्** । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः ।

---

१ सूत्रे परिमृजापनुदोरिति पञ्चम्यर्थे षष्ठीत्याशयेनाह—आभ्यामिति । २ कर्मण्युपपदे गापोष्टक् स्यात् । ३ घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन मद्रराज्ञीत्यत्र 'राजाहःसखिभ्य' इति टज्न । ४ तत्पुरुषे कृतीति हलदन्तात्सप्तम्याः सञ्ज्ञायामिति वा सप्तम्या अलुक् ।

उदरशयः ॥ **चरेष्टः ।३।२।१६।** अधिकरणे उपपदे । कुरुचरः[1] ॥ **भिक्षासेनादायेषु च ।३।२।१७।** भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम्[2] । आदायचरः ॥ **कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।** एषु द्योत्येषु कृञष्टः ॥ **अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।८।३।४६।** अत उत्तरस्यानव्ययविसर्गस्य समासे नित्यं सादेशः करोत्यादिषु । अयस्कारः । अयस्कामः । अयस्कंसः । अयस्कुम्भः । अयस्पात्रम् । अयः सहिता कुशा—अयस्कुशा । अयस्करणी । अतः किम् ? गीःकारः । अनव्ययस्य किं ? स्वःकारः । अनुत्तरपदस्थस्य किं ? परमयशःकारः । यशस्करी[3] विद्या । श्राद्धकरः[4] । वचनकरः[5] ॥ **दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ३।२।२१।** एषु कृञष्टोऽहेत्वादावपि । दिवाकरः । विभाकरः । निशाकरः । कस्कादित्वात्सः । भास्करः । बहुकरः । एककरः । द्विकरः । अहस्करः । धनुष्करः । अरुष्करः[6] ॥ **न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।३।२।२३।** एषु कृञष्टो न । शब्दकारः ॥ **स्तम्बशकृतोरिन् ।३।२।२४।** व्रीहिवत्सयोरिति वक्तव्यम् ।

---

१ कुरुषु देशविशेषेषु चरतीति कुरुचरः । २ आदाय = गृहीत्वा चरतीत्यादायचरः । ३ यशः करोति तद्धेतुः—यशस्करी । ४ श्राद्धं करोति तच्छीलः—श्राद्धकरः । ५ वचनं करोति तदनुवर्त्ती वचनकरः । ६ अरुष्करः = भल्लातकः ।

स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः॥ **हरतेर्दृतिनाथयोः पशौ ।३।२।२५।** दृतिहरिः। नाथं—नासारज्जु—हरतीति नाथहरिः पशुः॥ पशौ किं? दृतिहारः। नाथहारः।

**फलेग्रहिरात्मम्भरिश्च ।३।२।२६।** एतौ निपात्येते। चात्कुक्षिम्भरिः। चान्द्रास्तु—'आत्मोदरकुक्षिष्विति' पेटुः। 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः॥ **एजेः खश्** ।३।२।२८। ण्यन्तात्[1]॥ **अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।** अरुषो द्विषतोऽजन्तस्य च मुम् खिदन्ते नत्वव्ययस्य। शित्वाच्छबादि। जनमेजयतीति जनमेजयः। ***वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश्**। वातमजा मृगाः॥ **खित्यनव्ययस्य ।६।३।६६।** खिदन्ते उत्तरपदे पूर्वपदस्य ह्रस्वः। ततो मुम्। शुनिन्धयः। तिलन्तुदः॥ शर्द्धजहा[2] माषाः॥

**नासिकास्तनयोर्ध्माधेटोः ।३।२।२९। स्तने धेटो नासिकायां ध्मश्चेति वक्तव्यम्**। स्तनन्धयः। टित्वात्स्तनन्धयी[3]॥ **नाडीमुष्ट्योश्च ।३।२।३०।** ध्माधेटोः खश्[4]। यथासंख्यं नेष्यते। नाडिन्धमः। नाडिन्धयः। मुष्टिन्धमः। मुष्टिन्धयः॥

**उदि कूले रुजिवहोः ।३।२।३१।** कूलमुद्रुजः।

---

१ एजेरिति ण्यन्तस्य निर्देशो नत्विका निर्देशः, खशः शित्करणात्। तद्धि शित्त्वात्सार्वधातुकतया शबर्थः, न च शुद्धादेजेः शप्यसति सति वा कश्चन विशेष इत्यवधेयम्। २ शर्द्धमपानशब्दं जहति—त्याजयन्ति—इति शर्द्धजहाः—माषाः ( उडद )। ३ धेटष्टित्त्वस्याऽवयवेऽचरितार्थतया समुदायाट्टित्त्वान्ङीबत्र भवतीत्याशयः। ४ **नाडिन्धमः** = कलादः—स्वर्णकारः।

कूलमुद्वहः ॥ **वहाभ्रे लिहः ।३।२।३२।** वहः= स्कन्धः, तं लेढीति वहंलिहो गौः । अभ्रंलिहो वायुः ॥ **परिमाणे पचः ।३।२।३३।** प्रस्थंपचा स्थाली[1] । खारिंपचः कटाहः ॥ **मितनखे च ।३।२।३४।** मितंपचा ब्राह्मणी । नखंपचा यवागूः ॥ **विध्वरुषोस्तुदः ।३।२।३५।** विधुन्तुदः[2] । अरुन्तुदः ॥

**असूर्यललाटयोर्दृशितपोः ।३।२।३६।** असूर्यमित्यसमर्थसमासः, दृशिना नञः संबन्धात् । असूर्यंपश्या[3] राजदाराः । ललाटन्तपः सूर्यः ॥ **प्रियवशे वदः खच् ।३।२।३८।** प्रियंवदः[5] । वशंवदः ॥ **गमेः सुपि वाच्यः ।** मितङ्गमो हस्ती ॥ **विहायसो विह च खच्च डिद्वा वाच्यः ।** विहङ्गमः[6] । विहङ्गः । भुजङ्गमः[7] । भुजङ्गः ॥ **द्विषत्परयोस्तापेः ।३।२।३९।** खच् ॥ **खचि ह्रस्वः ।६।४।९४।** खचि परे णौ उपधाया ह्रस्वः । द्विषन्तं परं वा तापयति द्विषन्तपः । परन्तपः[8] ॥ **वाचि यमो व्रते ।३।२।४०।** खच् ॥

**वाचंयमपुरन्दरौ च ।६।३।६९।** वाक्पुरोरमन्तत्वं निपात्यते । वांचंयमो[10] मौनव्रती । व्रते किम् ? अशक्त्यादिना वाचं यच्छतीति वाग्यामः ॥ **पूःसर्वयोर्दारिसहोः ।३।२।४१।** खच् ।

१ प्रस्थः = सेटकमितमन्नम् । स्थाली = वर्त्तुलं भाण्डम् । (बटलोही) । २ विधुन्तुदः = राहुः । ३ सूर्यं न पश्यन्तीत्यसूर्यम्पश्याः । ४ अत्र खकारो मुमर्थः, चकारो 'खचि ह्रस्व' इत्यत्र विशेषणार्थः । ५ प्रिये वशे च कर्मण्युपपदे वदेः खच् स्यादिति सूत्रार्थः । ६ विहायसा गच्छतीति विहङ्गमः । ७ भुजैर्गच्छति—भुजङ्गमः । ८ द्विषन्तं तापयति द्विषन्तपः । परं तापयति—परन्तप इत्यन्वयः । ९ वाक्शब्दे उपपदे यमेः खच्—स्याद्व्रते गम्ये । १० वाचं यच्छतीति **वाचंयमः** ।

पुरं दारयतीति पुरन्दरः । सर्वंसहः ॥ भगं दारयतीति भगन्दर इति कथम् ? बाहुलकात् ॥ **सर्वकूलाभ्रकरीषेषु कषः ।३।२।४२।** सर्वंकषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषंकषा वात्या ॥ **मेघर्तिभयेषु कृञः ।३।२।४३।** मेघंकरः । ऋतिंकरः । भयंकरः । भयशब्देन तदन्तविधिः । अभयंकरः ॥ **क्षेमप्रियमद्रेऽण् च ।३।२।४४।** एषु कृञोऽण् चात्खच् । क्षेमंकरः । क्षेमकारः । प्रियंकरः । प्रियकारः । मद्रंकरः । मद्रकारः । कथं तर्हि 'अल्पारम्भाः क्षेमकराः'[1] इति ?, कर्मणः शेषत्वविवक्षायां पचाद्यच् । एवं गङ्गाधरभूधरादयः ॥ **आशिते भुवः करणभावयोः ।३।२।४५।** खच् । आशितो भवत्यनेन आशितंभव[2] ओदनः । आशितस्य भवनं आशितंभवः ॥ **संज्ञायां भृतॄवृजिधारिसहितपिदमः ।३।२।४६।** खच् । विश्वं बिभर्तीति विश्वम्भरः । रथन्तरं साम । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुन्तपः । अरिन्दमः ॥

**गमश्च[3] ।३।२।४७।** सुतङ्गमः ॥ **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।३।२।४८।** गमेः[4] । अन्तगः । **॥सर्वत्रपन्नयोरिति वाच्यम्** । सर्वत्रगः । पन्नं पतितं गच्छतीति पन्नगः ॥ **उरसो लोपश्च** । उरसा गच्छतीत्युरगः ॥ **सुदुरोरधिकरणे** । सुखेन

---

१ क्षेमकारा इति भाव्यमणा 'कृञो हेत्वि'ति टस्य बाधादित्याशयः ।
२ यावता ओदनेन अतिथ्यादिर्भोजितो भवति स ओदन आशितम्भव इत्युच्यते । ३ गमः सञ्ज्ञायां खच्—स्यात् । ४ एषु गमेर्डः स्यात् । सञ्ज्ञायामिति निवृत्तम् ।

गच्छतीत्यत्र सुगः । दुर्गः । **अन्यत्रापि दृश्यत इति वाच्यम्** । ग्रामगः ॥ **डे च विहायसो विहादेशो वाच्यः** । विहगः ॥

**आशिषि हनः** ।३।२।४९। शत्रुं वध्यात् शत्रुहः । आशिषि किम्? शत्रुघातः ॥ **दारावाहनोऽणन्तस्य च टः संज्ञायाम्** । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः । दार्वाघाटः ॥ **चारौ वा** । चार्वाघाटः । चार्वाघातः ॥

**अपे क्लेशतमसोः** ।३।२।५०। अपपूर्वाद्धन्तेर्डः । अनाशीरर्थमिदम् । क्लेशापहः पुत्रः । तमोपहः सूर्यः ॥ **कुमारशीर्षयोर्णिनिः** ।३।२।५१। कुमारघाती । शिरसः शीर्षभावो निपात्यते । शीर्षघाती ॥ **लक्षणे जायापत्योष्टक्** ।३।२।५२। हन्तेष्टक् लक्षणवति कर्तरि । जायाघ्नो ना । पतिघ्नी स्त्री ॥ **अमनुष्यकर्तृके च** ।३।२।५३। जायाघ्नस्तिलकालकः । पतिघ्नी पाणिरेखा । पित्तघ्नं घृतम् । अमनुष्येति किम्? आखुघातः शूद्रः । अथ कथं 'बलभद्रः प्रलम्बघ्नः' शत्रुघ्नः कृतघ्न इत्यादि? । मूलविभुजादित्वात्सिद्धम् । 'चोरघातो नगरघातो हस्ती'ति तु बाहुलका-

---

१ विहायसा गच्छतीति विहगः । २ दार्वाघाटः—पक्षिविशेषः । ('कठफोरा' 'खुडियाखाती'ति प्रसिद्धः) । ३ चारावुपपदे आङ्पूर्वाद्धन्तेरण् टश्चान्तादेशो वेत्यर्थः । ४ एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् ।

५ सूत्रे लक्षणशब्द अर्श आद्यजन्त इत्याशयः । ६ तिलाकृतिः कृष्णबिन्दुः । (तिल) । ७ अत्र हन्तेर्मनुष्यकर्तृकतया टकोऽसम्भवादिति प्रश्नाशयः । ८ ननु कथं चोरघातो हस्तीति? अत्राऽमनुष्यकर्तृकत्वेन हन्तेष्टको दुर्वारत्वादिति चेदत आह—बाहुलकादिति । कृत्यल्युट इत्यत्र बहुलग्रहणात्क्वचिदन्यथाऽपीत्याशयः ।

दण् ॥ **शक्तौ हस्तिकपाटयोः ।३।२।५४।** हन्तेष्टक् । मनुष्यकर्तृकार्थमिदम् । हस्तिघ्नो ना । कपाटघ्नश्चोरः । कवाटेति पाठान्तरम् ॥ **पाणिघताडघौ शिल्पिनि ।३।२।५५।** शिल्पिनि किं ? पाणिघातः ॥ ***राजघ उपसंख्यानम् ।** राजानं हन्ति राजघः ॥

**आढ्यसुभगस्थूलपलितनग्नाऽन्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।३।२।५६।** एषु च्व्यर्थेष्वच्व्यन्तेषु[1] कर्मसूपपदेषु कृञः ख्युन् । अनाढ्यमाढ्यंकुर्वन्त्यनया आढ्यंकरणी । अच्वौ किम् ? आढ्यीकुर्वन्त्यनेन ॥ **कर्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।** आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवति आढ्यंभविष्णुः । आढ्यंभावुकः ॥ **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।** एभ्यः क्विप्स्यादुपसर्गे सत्यसति च सुप्युपपदे । द्युसत् । 'सदिरप्रते'रिति षः । उपनिषत्[2] । अण्डसूः[3] । प्रसूः । मित्रद्विट्[4] । प्रद्विट् । मित्रध्रुट्[5] । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित्[6] । निवित् ॥ *** अग्रग्रामाभ्यां नयतेर्णो वाच्यः ।** अग्रणीः । ग्रामणीः ॥ **भजो ण्विः[7] ।३।२।६२।** अंशभाक् । प्रभाक् ॥ **अदोऽनन्ने ।३।२।६८।** विट् स्यात् । आममत्तीति—आमात् । सस्यात् । अनन्ने किम् ? अन्नादः ।

---

१ अभूततद्भावविषयेषु । २ उपनिषीदतीति उपनिषत् । ३ अण्डानि सूते इति अण्डसूः । ४ मित्रं द्वेष्टीति मित्रद्विट् । ५ मित्रं द्रुह्यतीति मित्रध्रुट् । ६ वेदं वेत्तीति वेदवित् । ७ सुपि उपपदे भजेर्ण्विः स्यात् ।

**क्रव्ये च ।३।२।६९।** अदेर्विट् । पूर्वेण सिद्धे वचनं वाऽसरूपेति प्राप्ताण्बाधनार्थम् । क्रव्यात्—आममांसभक्षकः ॥ **दुहः कप् घश्च ।३।२।७०।** कामदुघा[1] ॥ **अन्येभ्योऽपि दृश्यन्ते ।३।२।७५।** मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः ॥ **नेड्वशि कृति ।७।२।८।** वशादेः कृत इण्न । सुशर्मा[2] । प्रातरित्वा[3] ॥ **विड्वनोरनुनासिकस्याऽऽत् ।६।४।४१।** विजायते इति विजावा । **ओणृ** अपनयने । अवावा । रोट्[4] । रेट् । सुगण् ॥

**क्विप् च ।३।२।७६।** अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥ **अन्तः ।८।४।२०।** पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत् । हे प्राण् ॥ * **आशासः क्वावुपधाया इत्वं वाच्यम्** । आशीः । इत्वोत्वे । गीः । पूः । **मो नो धातोः** । प्रतान् । प्रशान् ॥ **गमः क्वौ ।६।४।४०।** अनुनासिकलोपः । अङ्गगत् ॥ **गमादीनामिति[5] वक्तव्यम्** । परीतत् । संयत् । **ऊङ् च गमादीनामिति वक्तव्यम्** । लोपश्च । अग्रेगूः । अग्रेभ्रूः ॥ **स्थः क च ।३।२।७७।** चात्क्विप् । शंस्थः । शंस्थाः ॥

**सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७८।** अजात्यर्थे धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी[6] । शीतभोजी ॥ **मनः**

१ सुप्युपपदे दुहेः कप्स्यात्प्रकृतेर्घश्चान्तादेशः । २ सुष्ठु शृणाति—सुशर्मा । शॄ हिंसायाम् । मनिन् । ३ प्रातरेतीति प्रातरित्वा । ४ रुष रिष हिंसायाम् । विच् । वेरपृक्तस्येति वलोपः । गुणः । ५ न केवलं गमः क्वौ नलोपः, किन्तर्हि—गमादीनां क्वौ नलोप इति वाच्यम् । तेन 'गमादेः क्वौ' इति सूत्रं कार्यमित्याशयः । ६ उष्णं भुङ्क्ते तच्छीलः—उष्णभोजी ।

।३।२।८२। सुपि मन्यतेर्णिनिः । दर्शनीयमानी ॥ **आत्ममाने खश्च** ।३।२।८३। स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश्, चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ॥ **इच एकाचोऽम् प्रत्ययवच्च** ।६।३।६८। इजन्तादेकाचोऽम्स्यात्स च स्वाद्यम्वत् खिदन्ते परे । **औतोऽम्शसोः** । गांमन्य. । **वाऽम्शसोः** । स्त्रियंमन्यः । स्त्रींमन्यः । नृ । नरंमन्यः । भुवंमन्यः । श्रियमात्मानं मन्यते श्रिमन्यं कुलम् । भाष्यकारप्रयोगाच्छ्रीशब्दस्य ह्रस्वो मुममोरभावश्च ॥ **भूते** ।३।२।८४। अधिकारोऽयं वर्तमाने लडिति यावत् ॥ **करणे यजः** ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः कर्तरि । सोमेनेष्टवान्सोमयाजी ॥ **कर्मणि हनः** ।३।२।८६। पितृव्यघाती ॥ **ब्रह्मभ्रूणवृत्रेषु क्विप्** ।३।२।८७। ब्रह्महा । भ्रूणहा । वृत्रहा । 'क्विप्चे'त्येव सिद्धे 'ब्रह्मादिष्वेव' 'क्विबेवे'ति द्विविधनियमार्थमिदम् । एवमग्रेऽपि ॥

**सुकर्मपापमन्त्रपुण्येषु कृञः** ।३।२।८९। सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् ॥ **सोमे सुञः** ।३।२।९०। सोमसुत् ॥ **अग्नौ चेः** ।३।२।९१। अग्निचित् ॥ **कर्मण्यग्न्याख्यायाम्** ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप्, अग्न्याधारस्थलविशेषस्याख्यायाम् । श्येन इव चितः

१ एकस्याप्यात्मन उपाधिभेदात्कर्तृत्वं कर्मत्वञ्च बोध्यम् । २ स्वाद्यम्वद्भावात् 'औतोऽम्शसोः' इत्यादिप्रवृत्तिरित्याह—गामिति । ३ पितृव्यं हतवान्—पितृव्यघाती । ४ सौ कर्मादिषु च कृञः क्विप् स्यात् । ५ अत्र भूतकालस्य क्विपि नियततया अग्निं चितवान् अग्निचाय इति अण् न भवति ।

सिनो ग्रासः[1] । ग्रासेति किम् ? सिता पाशेन सूकरी । कर्मकर्तृकेति[2] किम् ? सितो ग्रासो देवदत्तेन ॥ **ओदितश्च** ।८।२।४५। प्राग्वत्[3] । **भुजो** । भुग्नः । **टु ओश्वि** । शूनः ॥

**द्रवमूर्तिस्पर्शयोः श्यः** ।६।१।२४। द्रवस्य मूर्तौ काठिन्ये स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम् ॥ **श्योऽस्पर्शे** ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे । शीनं घृतम् । अस्पर्शे किम् ? शीतं जलम् । द्रवमूर्तिस्पर्शयोरिति किम् ? संश्यानो वृश्चिकः । शीतात्सङ्कुचित इत्यर्थः ॥ **प्रतेश्च** ।६।१।२५। संप्रसारणं निष्ठायाम् । प्रतिशीनः ॥ **विभाषाऽभ्यवपूर्वस्य**[4] ।६।१।२६। तथा । अभिश्यानं घृतम् । अभिशीनम् । अवश्यानः अवशीनो वृश्चिकः । व्यवस्थितविभाषेयम् । तेनेह न—समवश्यानः ॥ **अञ्चोऽनपादाने** ।८।२।४८। निष्ठातस्य नः ॥

**यस्य विभाषा** ।७।२।१५। यस्य क्वचिद्विभाषयेड्विहितस्ततो निष्ठायामिण् न । 'उदितो वे'ति क्त्वायां वेट्त्वादिह नेट् । समक्नः[5] । अनपादाने किम् ? उदक्तमुदकं[6] कूपात् ॥ **दिवोऽवि-**

---

१ पिण्डीक्रियमाणो ग्रासो दध्यादिव्यञ्जनोपसेकवशाद्बन्धनेऽनुकूलो भवतीति कर्मण्येव कर्तृत्वमिति बोध्यम् ।

२ 'ग्रासकर्मकस्ये'त्येवास्तु, कर्तृपदं किमर्थमिति प्रश्नः । ३ ओदितः परस्य निष्ठातस्य नत्वं स्यात् । ४ अभ्यवपूर्वस्य श्यः सम्प्रसारणं वा स्यात् । ५ सङ्गत इत्यर्थः । सम्पूर्वादञ्चतेः क्ते 'यस्य विभाषे' त्यनेन इटो निषेधेऽनिदितामिति नलोपः, नत्वं, तस्याऽसिद्धत्वात् कुत्वम् । ६ उद्धृतमित्यर्थः अत्र कूपादिति अपादानसमभिव्याहारोऽस्तीति नाऽनेन नत्वम् ।

**जिगीषायाम्** ।८।२।४९। छ्वोरित्यूठ् । द्यूनः । विजिगीषायां तु द्यूतम्[2] ॥ **निर्वाणोऽवाते** ।८।२।५०। 'अवाते' इति च्छेदः । निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्ता न । निर्वाणोऽग्निर्मुनिर्वा[3] । वाते तु—निर्वातो वातः । **शुषः कः** ।८।२।५१। निष्ठातस्य कः । शुष्कः ॥ **पचो वः** ।८।२।५२। पक्वः ॥ **क्षायो मः**[4] ।८।२।५३। क्षामः[5] ॥ **स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रास्त्यः संप्रसारणं निष्ठायाम् ॥ **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। निष्ठातस्य मो वा । प्रस्तीमः । प्रस्तीतः । प्रात्किम् ? स्त्यानः ॥ **अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। एते निपात्यन्ते । **ञिफला** । फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्यापीदं निपातनमिष्यते । फुल्लवान् । अनुपसर्गात्किम् ? । **आदितश्च** ।७।२।१६। आकारेतो निष्ठाया इण्न । **ति च** ।७।४।८९। चरफलोरत उत्, तादौ किति । प्रफुल्तः । प्रक्षीवितः । प्रकृशितः । प्रोल्लाघितः ॥ * **उत्फुल्लसंफुल्लयोरुपसंख्यानम्** ।

**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्**[6] ।८।२।५६। निष्ठातस्य नः । नुन्नः । नुत्तः । विन्नः । वित्तः । उन्दी ॥ **श्वीदितो निष्ठायाम्** ।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण् न । उन्नः[7] ।

---

१ च्छ्वोरित्यूठ् । द्यूनः = स्तुतः । २ विजेतुमिच्छयैव द्यूतस्य प्रवृत्तेरस्ति तत्र विजिगीषा । ३ निर्वाणोऽग्निः = विनष्टः । निर्वाणो मुनिः = मृत इत्यर्थः । ४ 'क्षै क्षये' इत्यतः परस्य निष्ठातस्य मः स्यात् । ५ 'आदेच' इत्यात्त्वम्, 'गत्यर्थाकर्मके'ति कर्त्तरि क्तः । क्षीण इत्यर्थः । ६ नुदादेः—'रदाभ्यां' 'संयोगादेरातः' इति नित्ये प्राप्ते, 'ह्री'धातोरप्राप्ते उभयत्र विभाषेयम् । ७ 'उन्दी क्लेदने' इत्यस्य रूपम् ।

उत्तः । इत्यादि ॥ **न ध्याख्यापॄमूर्च्छिमदाम्** ।८।२।५७। एभ्यो निष्ठातस्य नो न । ध्यातः । ख्यातः । पूर्तः ॥ **राल्लोपः** ।६।४।२१। राच्छ्वोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये । मूर्तः । मत्तः ॥ **वित्तो भोगप्रत्यययोः** ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीते चार्थे । वित्तं धनम्[1] । वित्तः पुरुषः । अनयोः किम् ? विन्नः ॥ **भित्तं शकलम्**[2] ।८।२।५९। भिन्नमन्यत् ॥ **ऋणमाधमर्ण्ये**[3] ।८।२।६०। ऋतमन्यत्[4] ॥ **स्फायः स्फी निष्ठायाम्**[5] ।६।१।२२। स्फीतः ॥

**इण्निष्ठायाम्** ।७।२।४७। निरः कुषो निष्ठाया इट् । यस्य विभाषेति निषेधे प्राप्ते पुनर्विधिः । निष्कुषितः ॥ **वसतिक्षुधोरिट्** ।७।२।५१। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् । उषितः[6] । क्षुधितः ॥

**अञ्चेः पूजायाम्** ।७।२।५३। क्त्वानिष्ठयोरिट्[7] । अञ्चितः । गतौ तु अक्तः । **लुभो विमोहने** ।७।१।५४। क्त्वानिष्ठयोरिट्[8] नतु गार्ध्ये । लुभितः । गार्ध्ये तु लुब्धः । **क्लिशः क्त्वानिष्ठयोः** ।७।२।५०। इट् वा । क्लिशितः । क्लिष्टः ॥ **पूङश्च** ।७।२।५१।

---

१ वित्तं धनमिति भोग्यस्य, वित्तः पुरुष इति प्रत्ययस्योदाहरणम् । वित्तः = प्रसिद्धः । २ रदाभ्यामिति प्राप्तस्य नत्वस्याऽभावो निपात्यते । ३ अधमं = कष्टदं ऋणमस्यास्तीत्यधमर्णः = ऋणी । ४ सत्यमित्यर्थः । ५ 'स्फायी वृद्धौ' इत्यस्य स्फीत्ययमादेशः स्यान्निष्ठायाम् । ६ अस्य यजादित्वेन कित्त्वाद्वचिस्वपीति सम्प्रसारणम् । शासिवसीति षः । ७ निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते क्त्वायाम्—'उदितो वे'ति विकल्पे प्राप्ते विधिः । ८ निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते, क्त्वायां 'तीषसहे'ति विकल्पे प्राप्ते वचनम् ।

क्त्वानिष्ठयोरिड् वा ॥ **पूङः क्त्वा च** ।१।२।२२। निष्ठा सेट् किन्न स्यात् । पवितः । पूतः । क्त्वाग्रहणमुत्तरार्थम् । नोपधादित्यत्र हि क्त्वैव सम्बध्यते ॥ **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** ।१।२।१९। सेट् किन्न । शयितः ॥ * **आदिकर्मणि निष्ठा वक्तव्या**[१] ॥ **आदिकर्मणि क्तः कर्तरि च** ।३।४।७१। चाद्भावकर्मणोः ॥ **विभाषा भावादिकर्मणोः** ।७।२।१७। आदितो निष्ठाया इड् वा । प्रस्वेदितश्चैत्रः । प्रस्वेदितं तेन । ञिष्विदेति भ्वादिरत्र गृह्यते । ञिद्भिः साहचर्यात् । स्विद्यतेस्तु–स्विदित इत्येव । ञिमिदा ञिक्ष्विदा दिवादी भ्वादी च । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । धर्षितं तेन । सेट् किम् ? प्रस्विन्नं तेनेत्यादि ॥ **मृषस्तितिक्षायाम्** ।१।२।२०। सेण् निष्ठा किन्न । मर्षितः । क्षमायां किम् ? अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम्** ।१।२।२१। उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न । द्युतितम्[२] । द्योतितम् । मुदितम् । मोदितं साधुना । प्रद्योतितः[३] । प्रद्युतितः । प्रमुदितः । प्रमोदितः साधुः । उदुपधात्किम् ? विदितम् । भावेत्यादि किम् ? रुचितं कार्षापणम् । सेट् किम् ? क्रुष्टम् । * **शब्विकरणेभ्य**

१ आद्येषु क्षणेषु भूतेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् । आदिकर्मणि विहितस्य क्तस्य कर्त्तरि विधानार्थञ्चेत्यपि बोध्यम् । २ भावे उदाहरति–द्युतितमिति । ३ कर्मण्युदाहरति–प्रद्योतित इति ।

**एवेष्यते** । नेह गुर्ध्यतेर्गुधितम् ॥ **निष्ठायां सेटि** ।६।४।५२। णेर्लोपः । भावितः । भावितवान् ॥ **दृढः स्थूलबलयोः** ।७।२।०२। स्थूले बलवति च निपात्यते ॥ **दधातेर्हिः** ।७।४।४२। तादौ किति । हितम् ॥ **दो दद्घोः** ।७।४।४६। घुसंज्ञकस्य 'दा' इत्यस्य 'दथ्' तादौ किति । चर्त्वम् । दत्तः ॥

**गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च । गङ्गां प्राप्तः । ग्लानः सः । लक्ष्मीमाश्लिष्टो हरिः । शेषमधिशयितः । **द्यतिस्यतिमास्थामित्ति किति** ।७।४।४०। एषामित्तादौ किति । वैकुण्ठमधिष्ठितः । शिवमुपासितः । हरिदिनमुपोषितः । राममनुजातः । गरुडमारूढः । विश्वमनुजीर्णः । पक्षे—प्राप्ता गङ्गा तेनेत्यादि ॥

**क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** ।३।४।७६। एभ्योऽधिकरणे क्तः, चाद्यथाप्राप्तम् ॥

**मुकुन्दस्याऽऽसितमिदमिदं यातं रमापतेः ।**
**भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥ १ ॥**

पक्षे आसेरकर्मकत्वात्कर्तरि भावे च । आसितो मुकुन्दः ।

---

१ गुध्यतिर्हि श्यन्विकरणो दिवादिर्न शब्विकरणः । २ बलमस्यास्तीति बलः, अर्श आद्यच् । तदाह—बलवतीति । ३ पक्षे = भावे कर्मणि च क्तप्रत्यये सति । आदिपदात्—'ग्लानं तेन' 'हरिणा लक्ष्मीराश्लिष्टा' 'शेषोऽधिशयितो हरिणा' 'वैकुण्ठोऽधिष्ठितः' 'शिव उपासितः' 'हरिदिनमुपोषितं तेने' त्यादि ग्राह्यम् । ४ आस्यतेऽस्मिन्निति आसितम् = आसनं पीठादिकम् । यायतेऽस्मिन्निति यातं = मार्गः । भुज्यतेऽस्मिन्निति भोजनं = भोजनस्थानं रसवत्यादिकम् । ५ 'क्त' इति शेषः ।

आसितं तेन ॥ **गत्यर्थेभ्यः कर्तरि कर्मणि च**। रमापतिरिदं यातः। तेनेदं यातम्। **भुजेः कर्मणि**। अनन्तेनेदं भुक्तम्। वर्तमाने इत्यधिकृत्य—॥ **ञीतः क्तः** ।३।२।१८७। क्ष्विण्णः[1]। इद्धः[2]। **मतिबुद्धिपूजार्थेभ्यश्च** ।३।२।१८८। राज्ञां मतः[3]। इष्टः[4]। बुद्धः। विदितः। पूजितः। अर्चितः। चकारोऽनुक्तसमुच्चयार्थः। शीलितः। रक्षितः। क्षान्तः। आक्रुष्टः। जुष्ट इत्यादि ॥ **नपुंसके भावे क्तः** ।३।३।११४। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः। जल्पितम्। हसितम् ॥ **सुयजोर्ङ्वनिप्** ।३।२।१०३। भूते। सुत्वा। यज्वा ॥ **जीर्यतेरतृन्** ।३।२।१०४। जरन्[6]। जरन्तौ। वासरूपन्यायेन निष्ठाऽपि। जीर्णः। जीर्णवान् ॥ **छन्दसि लिट्** ।३।२।१०५। **लिटः कानज्वा** ।३।२।१०६। **क्वसुश्च** ।३।२।१०७। भूतसामान्ये छन्दसि लिट्। तस्य कानच्क्वसू वा स्तः। **तङानावात्मनेपदम्**। चक्राणः। चक्रे। **म्वोश्च**। जगन्वान्। कवयस्तु बाहुलकाल्लोकेऽपि प्रयुञ्जते। 'तं तस्थिवांसं नगरोपकण्ठे' 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि ॥ **वस्वेकाजाद्घसाम्** ।७।२।६७। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् स्यान्नान्येषाम्। आदिवान्। आरिवान्। ददिवान्। जक्षिवान्। एषां किम्? बभूवान् ॥ **भाषायां सदवसश्रुवः** ।३।२।१०८।

---

१ ञीतो धातोर्वर्त्तमाने क्तः स्यात्। २ आदितश्चेति नेट्। ३ 'श्वीदितः' इति नेट्। ४ 'क्तस्य च वर्त्तमाने' इति षष्ठी। ५ तीषसहेति वेट्कत्वात् 'यस्य विभाषा' इति नेट्। ६ ऋकारस्य गुणे रपरोऽकारः। उगिदचामिति नुम्। संयोगान्तलोपस्याऽसिद्धत्वान्न दीर्घः।

सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात् तस्य च नित्यं क्वसुः । 'निषेदुषीमासनबन्धधीरः' । 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् ॥ **उपेयिवाननाश्वाननूचानश्च** ।३।२।१०९। एते निपात्यन्ते । उपादिणो लिड् वा । तस्य क्वसुः । इट् । उपेयिवान् । नाऽत्रोपसर्गस्तन्त्रम् ।[1] ईयिवान् । नञोऽश्नातेः क्वसोरिडभावश्च । अनश्वान् । अनोर्वचेः कर्तरि कानच् । वेदस्यानुऽवचनं कृतवान्—अनूचानः ॥ **लटः शतृशानचावप्रथमासमानाधिकरणे** ।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये[2] लट एतौ वा स्तः । शबादिः । पचन्तं चैत्रं पश्य ॥ **आने मुक्** ।७।२।८२। अङ्गस्याऽतः[3] । पचमानं चैत्रं पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन्द्विजः ॥ **ईदासः** ।७।२।८३। आनस्यै । 'आदेः परस्य' । आसीनः ॥[4] **विदेः शतुर्वसुः** ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा । विद्वान् । विदन् ॥ **तौ सत्** ।३।२।१२७। तौ=शतृशानचौ[5] सत्संज्ञौ स्तः ॥

**लटः सद्वा** ।३।३।१४। करिष्यन्तं करिष्यमाणं पश्य ॥ **ताच्छील्यवयोवचनशक्तिषु चानश्**[6] ।३।२।१२९। एषु द्योत्येषु कर्त्तरि चानश् । अग्नौ[7] जुह्वानः । कवचं बिभ्राणः ।

---

१ अत्र = अस्मिन्सूत्रे । तन्त्रं = विवक्षितः । २ आदेशद्वारकं प्रथमासामानाधिकरण्यं तदसामानाधिकरण्यञ्च ग्राह्यम् । ३ अङ्गावयवस्यातो मुगागमः स्यादाने परत इत्यर्थः । ४ आसः परस्यानस्य ईत्स्यादित्यर्थः । ५ 'तौ' इत्यस्यार्थमाह—शतृशानचाविति । ६ एषु द्योत्येषु धातोः कर्त्तरि चानश् प्रत्ययः स्यात् । चानशो लादेशत्वाभावेनात्मनेपदित्वाभावः । ७ ताच्छील्ये—'जुह्वानः' इति । वयोवचने—'कवचं बिभ्राणः' इति । अत्र हि

शत्रुं निघ्नानः[1] ॥ **आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन्** ।३।२।१३५। कर्ता कटान् ॥

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः । स्पृहयालुः ॥ ❀ **शीङो वाच्यः** । शयालुः ॥

**अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्** ।३।२।१३६। अलङ्करिष्णुः ॥ **ग्लाजिस्थश्च ग्स्नुः** ।३।२।१३९। गिदयं नतु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद्भुवः । श्र्युकः कितीत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ॥ **त्रसिगृधिधृषिक्षिपेः क्नुः** ।३।२।१४०। त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ॥ **शमित्यष्टाभ्यो[2] घिनुण्** ।३।२।१४१। उकार उच्चारणार्थ इति काशिका । अनुबन्ध इति भाष्यम् । तेन शमिनितरा शमिनीतरेत्यत्र उगितश्चेति ह्रस्वविकल्पः । नचैवं शमी शमिनावित्यादौ नुम्प्रसङ्गः झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । नोदात्तोपदेशस्येति वृद्धिनिषेध । शमी । तमी । इत्यादि ॥ **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरज-**

कवचधारणयोग्यं वयो गम्यते ।

१ शक्तौ-'निघ्नानः' इति । अत्र गमहनेत्युपधालोपः । २ इतिशब्द आद्यर्थः ।

**जातिचरापचरामुपाभ्याहनश्च** ।३।२।१४२। घिनुण् स्यात् । संपर्की[1]त्यादि ॥ **वौ कषलसकत्थस्रम्भः** ।३।२।१४३। विकाषी ॥ **अपे च लषः** ।३।२।१४४। चाद्वौ । अपलाषी । विलाषी ॥ **चलनशब्दार्थादकर्मकाद्युच्** ।३।२।१४८। चलनार्थाच्छब्दार्थाच्च युच् स्यात् । चलनः । चोपनः । कम्पनः । शब्दनः । रवणः । अकर्मकात्किम्? पठिता विद्याम् ॥ **अनुदात्तेतश्च हलादेः** ।३।२।१४९। अकर्मकाद्युच् । वर्तनः । वर्धनः । अनुदात्तेतः किम् ? भविता । हलादेः किम् ? एधिता । अकर्मकात्किम् ? वसिता वस्त्रम् ॥ **निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ्** ।३।२।१४६। एभ्यो वुञ् । निन्दकः । हिंसक इत्यादि ॥ **देविक्रुशोश्चोपसर्गे** ।३।२।१४७। आदेवकः । आक्रोशकः । उपसर्गे किम् ? देवयिता । क्रोष्टा ॥ **लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्** ।३।२।१५४। लाषुकः । पातुकः ॥ **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५। जल्पाकः ॥ **सनाशंसभिक्ष उः** ।३।२।१६८। चिकीर्षुः । आशंसुः । भिक्षुः ॥ **स्थेशभासपिसकसो वरच्** ।३।२।१७५। स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । इत्यादि ॥

---

१ चजोरिति कुत्वम् । आदिपदात्—अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी । द्रोही । दोही । योगी । आक्रीडी । विवेकी । त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ।

**यश्च यङः ।३।२।१७६।** यातेर्यङन्ताद्वरच् । अतोलोपः । तस्याचः परस्मिन्निति स्थानिवद्भावे प्राप्ते । **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ।१।१।५८।** पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् । इति यलोपं प्रति स्थानिवत्त्वनिषेधाल्लोपो व्योर्वलीति यलोपः । अल्लोपस्य स्थानिवत्त्वमाश्रित्याऽल्लोपे प्राप्ते—**वरे लुप्तं न स्थानिवत्** । यायावरः ॥ **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।३।२।१७७।** विभ्राट् । भाः । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्यापकर्षणाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् ॥ * **क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** । वक्तीति वाक् । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥ **द्युतिगमिजुहोतीनां द्वे च** । दिद्युत् । जगत् । **जुहोतेर्दीर्घश्च** । जुहूः । **ध्यायतेः संप्रसारणं च** । धीः ॥

**भुवः संज्ञान्तरयोः ।३।२।१७९।** मित्रभूर्नामकश्चित् । प्रतिभूः । **विप्रसंभ्यो ड्वसंज्ञायाम् ।३।२।१८०।** एभ्यो भुवो डुः । विभुर्व्यापकः । प्रभुः स्वामी । संभुः जनिता । सञ्ज्ञायान्तु विभूर्नाम कश्चित् । **धः कर्मणि ष्ट्रन् ।३।२।१८१।** कर्मण्यर्थे । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ।

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।३।२।१८२।** दावादेः ष्ट्रन् करणेऽर्थे । दान्त्यनेन दात्रम्[1] । नेत्रम् ॥

1 दात्रं = लवनसाधनम् । ( दांतली ) ।

तितुत्रतथसिसुसरकसेषु च ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्रम्[1]। सेत्रम्। सेक्त्रम्। मेढ्रम्[2]। पत्रम्। दंष्ट्रा। नद्ध्री[3]॥ **हलसूकरयोः पुवः** ।३।२।१८३। पूङ्पूञोः करणे ष्ट्रन्, तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रं मुखमित्यर्थः॥ **अर्तिलूधूसूखनसहचर इत्रः** ।३।२।१८४। अरित्रम्। लवित्रम्। धवित्रम्[4]। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्॥ **पुवः संज्ञायाम्** ।३।२।१८५। पवित्रम्॥ **इति पूर्वकृदन्तम्।**

## अथोणादयः।

**कृवापाजिमिस्वदिसाध्यशूभ्य उण्।** करोतीति कारुः। वायुः। पायुर्गुदम्। जायुरौषधम्। मायुः पित्तम्। स्वादुः। साध्नोति परकार्यमिति साधुः। आशु शीघ्रम्। **हरिमितयोर्द्रुवः।** द्रु गतौ। अस्मात् हरिमितयोरुपपदयोः कुः, स च डित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितं द्रवतीति मितद्रुः समुद्रः। **शते च।** शतधा द्रवतीति शतद्रुर्नदीभेदः। **अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः।** एते कूप्रत्ययान्ता निपात्यन्ते। **शमेर्ढः।** बाहुलकात् इत्संज्ञा, ढस्य एयादेश इट् च न भवति। 'शण्ढः स्यात्पुंसि गोपतौ'। **कमेरठः।** 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी। **रमेर्वृद्धिश्च।** रामठं हिङ्गु।

---

१ तोत्रं ताडनदण्डः। ( चाबुक )। २ 'मेढ्रं मेहनशेफसी' इत्यमरः। ३ 'नहो धः' इति धत्वं, जश्त्वम्। नद्ध्री = चर्मरज्जुः। ( 'वरी' 'बाधी' 'रस्सी' )। ४ धवित्रं = व्यजनम्। इति पूर्वकृदन्तम्।

**शमेः खः** । शङ्खः । **कणेष्ठः** । कण्ठः । **अमन्ताड्डः** । अमिति प्रत्याहारः । 'दण्डोऽस्त्री लगुडेपि स्यात्' इत्यमरः । 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति' इति मेदिनी । 'खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः' इति मेदिनी । **मन ज्ञाने** । 'मण्डः पञ्चाङ्गुले शङ्कुभेदे क्लीबं तु वस्तुनि' इति मेदिनी ।

**पतिचण्डिभ्यामालञ्** । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी । चण्डालो मातङ्गः । प्रज्ञादित्वादणि चाण्डालोऽपीत्युज्ज्वलदत्तः, तन्न, 'कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसि' इति चण्डालशब्दात्स्वार्थेऽणं विदधता वार्तिकेन तद्भाष्येण च सह विरोधात् । **गन्गम्यद्योः** । गङ्गा । अद्गः पुरोडाशः । **भृञः किन् नुट् च** । भृञो गन्कित्स्यात्तस्य नुट् च । 'भृङ्गाः षिड्गाऽलिधूम्याटाः' । **शृणातेर्ह्रस्वश्च** । शृङ्गम् । **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** । एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः । सोमः । होमः । सर्मो गमनम् । धर्मः । क्षेम कुशलम् । क्षौमम् । भाम आदित्यः । यामः । 'वामः शोभनदुष्टयोः' । पद्मम् । यक्ष्मो रोगराजः । नेमः । **अवतेष्टिलोपश्च** । मन्प्रत्ययस्यायं टिलोपो नतु प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** ।६।४।२०। एषामुपधावकारयोरूठ् क्वौ झलादावनुनासिकादौ च प्रत्यये । अत्र क्ङितीति नानुवर्तते । अवतेस्तुनि कृते ओतुरिति दर्शनात् । स्वरादिपाठादव्ययत्वम् । अवतीति ओम् । **ग्रसेरा च** । ग्रासः ॥ **अविसिविसिशुषिभ्यः कित्** । एभ्यो मन् । ऊमं

नगरम् । स्यूमो रश्मिः । सिमः सर्वः । 'शुष्ममग्निसमीपयोः' । **घर्मः** । घृधातोर्निपातोऽयम् । **ग्रीष्मः** । ग्रसतेर्निपातोऽयम् ॥

**अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** । अश्वः । 'पुष्पः स्याद्धतुसूर्ययोः' । लट्वः पक्षिभेदः, फलं च । कण्वं पापम् । खट्वा । विश्वम् । **कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः** । यौति इति युवा । वृषा इन्द्रः । तक्षा राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यत्यस्मिन्प्रतिदिवा दिवसः । **उपिकुषिगार्तिभ्यः स्थन्** । ओष्ठः । कोष्ठम् । गाथा । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । **पातृतुदिवचिरिचिसिचिभ्यस्थक्** । 'पीथो रविर्घृतं पीथम्' । 'तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' इति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्दचेरपि । 'रिक्थमृक्थं धनं वसु' । सिक्थम् ।

**ग्लानुदिभ्यां डौः** । ग्लौः । नौः । **च्विरयम्** । डौरित्येव । ग्लौकरोति । 'कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति । **गमेर्डोः** । 'गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ तु सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति । बाहुलकात् द्युतेरपि डो । 'द्यौः स्त्रीस्वर्गान्तरिक्षयोः' ॥ **रातेर्डैः** । राः । **भ्रमेश्च डूः** । भ्रूः । चाद्गमेः । अग्रेगूः । **उन्देर्नलोपश्च** । चाद्युच् । ओदनः । **गमेर्गश्च** । चाद्युच् । गगनम् । **कॄपॄवृजिमन्दिनिधाञः क्युः** । किरणः । पुरणः समुद्रः । वृजिनमन्त-

रिक्षम् । मन्दनं स्तोत्रम् । निधनं कुलनाशयोः । **धृषेर्धिष च संज्ञायाम्** । धिषणो गुरुः । धिषणा धीः । **तृन्तृचौ संसिजदादिभ्यः संज्ञायाम्** । शंसादिभ्यः क्षपादिभ्यश्च क्रमात्तृन्तृचौ स्तस्तौ चाऽनिटौ । शंस्ता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वेश्यायामपि शूद्रजे' । **बहुलमन्यत्रापि** । मन्–मन्ता । हन्–हन्ता । इत्यादि । **नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** । एते तृजन्ता निपात्यन्ते । नप्ता । इत्यादि । **सावसेर्ऋन्** । स्वसा । **यतेर्वृद्धिश्च** । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' । **नञि च नन्देः** । न नन्दतीति नानान्दा । इह वृद्धिर्नानुवर्तत इत्येके । 'ननान्दा तु स्वसापत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः । **दिवेर्ऋः** । देवा । देवरः । 'स्वामिनो देवृदेवरौ' । **नयतेर्डिच्च** । ना । नरौ । **अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसिः** ॥ 'अर्चिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः' । हविः । सर्पिः । **इस्मन्त्रन्क्विषु च** ।३।४।९७। ह्रस्वः स्यात् । छदिः पटलं । छर्दिः । **बृहेर्नलोपश्च** । 'बर्हिर्ना कुशशुष्मणोः' । **द्युतेरिसिन्नादेश्च जः** । ज्योतिः । **जनेरुसिः** । 'जनुर्जननजन्मानि' इत्यमरः । **अर्तिपृवपियजितनिधनितपिभ्यो नित्** । अरुः । परुर्ग्रन्थिः । यजुः । तनुषी । धनुः । धनुरस्त्रियाम् । 'तपुः सूर्याग्निशत्रुषु' । **एतेर्णिच्च** । आयुः । आयुषी । **चक्षेः शिच्च** । चक्षुः । **मुहेः किच्च** । मुहुः । पुनः अव्ययम् । **पानीविषिभ्य पः** । रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः ।

नेपः पुरोहितः। वेष्पः पानीयम्। **स्तुवो दीर्घश्च**। स्तूपः समुच्छ्रायः। **सुशृभ्यां निच्च**। चात्कित्। सूपः। बाहुलकादूत्वम्। शूर्पः। **कुयुभ्यां च**। कुवन्ति मण्डूका अस्मिन्निति कूपः। युवन्ति बध्नन्ति अस्मिन्निति यूपः। **खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः**। सप्तैते पप्रत्ययान्ता निपात्यन्ते। **स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्**। अयामन्तेति णेरय्। स्तनयित्नुः। हर्षयित्नुः। पोषयित्नुः। गदयित्नुः। मदिरा। **अशेः सरः**। अक्षरम्। **वसेश्च**। वत्सरः। **संपूर्वाच्च**। संवत्सरः। परिवत्सरः। **कृशृशलिकलिगर्दिभ्योऽभच्**। करभः। शरभः। शलभः। कलभः करिशावकः। गर्दभः। **ऋषिवृषिभ्यां कित्**। ऋषभः। वृषभः। **रासिवल्लिभ्यां च**। रासभः। वल्लभः। **नियो मिः**। नेमिः। **अर्तेरूच्च**। ऊर्मिः। **भुवः कित्**। भूमिः। **अङ्गेर्निर्नलोपश्च**। अग्निः। **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्**। वह्निः। श्रेणिः। श्रोणिः। योनिः। द्रोणिः। ग्लानिः। तूर्णिः। **पातेर्डतिः**। पतिः। **सूडः क्रिः**। सूरिः। **अदिशदिभूशुभिभ्यः क्रिन्**। अद्रिः। शद्रिः। शर्करा। भूरि प्रचुरम्। शुभ्रिः। ब्रह्मा। **वलिमलितनिभ्यः कयन्**। वलयः। मलयः। तनयः। **माछाससिभ्यो यः**। माया। छाया। सस्यम्। बाहुलकात्सव्यं दक्षिणवामयोः॥ **जनेर्यक्**। 'ये विभाषा'। जन्यं युद्धम्। जाया। **सर्वधातुभ्य इन्**। पचिः। रश्मिः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः। काशते इति काशिः। पतिः। मल्लिः। केलिः। मसी परिणामे। मसिः।

बोधिः । नन्दिः । कलिः । 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवंगे च यमे वाते च कीर्तितः' **इगुपधात्कित्** । कृषिः । ऋषिः । शुचिः । **मनेरुच्च** । मुनिः । **जनिघसिभ्यामिण्** । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

अच इः । रविः । तरिः । पविः । कविः । अविः । अरिः । **कुण्डिकम्प्योर्नलोपश्च** । कुडिः । कपिः । **इषेःक्सुः** । इक्षुः । **कृषेर्वर्णे नक्** । कृष्णः । **दाभाभ्यां नुः** । दानुः दाता । भानुः । **विषेः किच्च** । विष्णुः । **सितनिजनिगमिमसिसच्यविधाञ्-क्रुशिभ्यस्तुन्** । सेतुः । तन्तुः । जन्तुः । गन्तुः । मस्तुः—दधि-मण्डम् । सक्तुः । ओतुः । धातुः । क्रोष्टा । **अवितृस्तृतन्त्रिभ्य ईः** । 'अवीर्नारी रजस्वला' । तरीः । स्तरीः-धूमः । तन्त्रीः । **यापोः कित् द्वे च** । ययीः । 'पपीः स्यात्सोमसूर्ययोः' । **वातप्रमीः** । निपातोऽयम् । **लक्षेर्मुट् च** । लक्ष्मीः । **सर्वधातुभ्यो मनिन्** । कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम । **बृंहेर्नोच्च** । नकारस्य अकारः । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' । **नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन्** । सप्तैते निपात्यन्ते । **साऽतिभ्यां मनिन्मनिणौ** । साम । आत्मा । **हनिमशिभ्यां सिकन्** । 'हंसिका हंसयोषिति' । मक्षिका । **गिरं उडच्** । गरुडः । **शृदृभसोऽदिः** । शरत् । 'दरत्हृदय-कूलयोः' । भसज्जघनम् । **त्यजितनियजिभ्यो डित्** । त्यत् । तद् । यद् । **एतेस्तुट् च** । एतद् । **युष्यसिभ्यां मदिक्** । त्वम् । अहम् । **इन्देः कमिन्नलोपश्च** । इदम् । **कायतेर्डिमिः** ।

किम्। **सर्वधातुभ्यः ष्ट्रन्**। वस्त्रम्। अस्त्रम्। शास्त्रम्। **असिचिमिदिशसिभ्यः क्त्रः**। अन्त्रम्। चित्रम्। मित्रम्। शस्त्रम्। **पुवो ह्रस्वः**। पुत्रः। **स्त्यायतेर्ड्रट्**। स्त्री। **सूचेः स्मन्**। सूक्ष्मम्। **पातेर्डुम्सुन्**। पुमान्। **वसेस्तिः**। 'वस्तिर्नाभेरधो द्वयो.'। **सावसेः**। स्वस्ति। **वौ तसेः**। 'वितस्तिर्द्वादशाङ्गुलः' इत्यमरः। **सर्वधातुभ्योऽसुन्**। चेतः। सरः। पयः। पयसी इत्यादि। **अशेर्देवने युट् च**। देवने=स्तुतौ। यशः। **उब्जेर्बले बलोपश्च**। ओजः। **श्रयतेः स्वाङ्गे शिरः किच्च**। श्रयतेः शिर आदेशोऽसुन्किच्च। शिरः। **अर्तेरुच्च**। उरः। **भूरञ्जिभ्यां कित्**। भुवः। रजः। **वसेर्णिच्च**। वासो वस्त्रम्। **चन्देरादेश्च छः**। छन्दः। **पचिवचिभ्यां सुट् च**। 'पक्षसी तु स्मृतौ पक्षौ'। वक्षः। **नञि हन एह च**। अनेहा। अनेहसौ। **विधाञो वेध च**। वेधाः। **चन्द्रे मो डित्**। चन्द्रोपपदान्माङोऽसिः स च डित्। चन्द्रमाः। **उषः कित्**। उषः—अप्सराः। **सर्तेरप्पूर्वादसिः**। प्रायेणाऽयं भूम्नि। अप्सरसः। **वसेः कनसिः**। उशना। **अदिभुवो डुतच्**। अद्भुतम्। **गुधेरूमः**। गोधूमः। **तृहेः क्नो हलोपश्च**। तृणम्। **उदि चेर्डैसिः**। उच्चैः। **नौ दीर्घश्च**। नीचैः। **पूञो यण्णुग्घ्रस्वश्च**। यत्प्रत्ययः। पुण्यम्। **उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च**। उदरम्। **डित्खनेर्मुट् चोदात्तः**। अजल् स च डिद्धातोर्मुट् च। मुखम्। **अमेः सन्**। असः। **मुहेः खो मूर् च**। मूर्खः। **नहेर्हलोपश्च**। नखः।

**शीङो ह्रस्वश्च** । शिखा । **माङ ऊखो मय च** । मयूखः । **जनेष्टन्लोपश्च** । जटा । **क्लिशेरन् ललोपश्च** । केशः । **फलेरितजादेश्च पः** । पलितम् । **कृञादिभ्यः संज्ञायां वुन्** । करकः । कटकः । नरकः । 'नरको नारकोऽपि च' इति द्विरूपकोशः । **चीकयतेराद्यन्तविपर्ययश्च** । कीचकः ॥ **जनेररन्नष्ठ च** । जठरम् । **हर्यतेः कन्यन् हिर च** । हिरण्यम् । **कृञः पासः** । कर्पासः । बिल्वादित्वात्—कार्पासम् । **ऊर्णोतेर्डः** । ऊर्णा । **दधातेर्यन् नुट् च** । धान्यम् ॥ **चतेरुरन्** । चत्वारः । **प्रातेररन्** । प्रातः । **अमेस्तुट् च** । अन्तः । **दहेर्गो लोपो दश्च नः** । दहेर्गप्रत्ययो धातोरन्तस्य लोपो दस्य नः । नगः ।

**हन्तेरच्घुरश्च** । घोरम् । **तरतेर्ड्रिः** । त्रयः । **ग्रहेरणिः** । ग्रहणिः । **प्रथेरमच्** । प्रथमः । **चरेश्च** । चरमः । **मङ्गेरलच्** । मङ्गलम् । इत्युणादयः ॥

## अथ उत्तरकृदन्तम् ।

**उणादयो बहुलम्** ।३।३।१। एते वर्तमाने संज्ञायाञ्च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

**संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।**
**कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥**

---

१ संक्षेपत उणादिव्युत्पादनरीतिमाह—सञ्ज्ञास्विति । सञ्ज्ञासु = लोकप्रसिद्धासु डित्थडवित्थादिसञ्ज्ञासु । धातुरूपाणि = धातुस्वरूपाणि-विद्यात् । ततः = धातुभ्यः, परे प्रत्ययाश्च—'स्वयमूह्याः' इति शेषः । कार्यात् = प्रयोगे गुणाभावादिकं कार्यं विलोक्य, अनुबन्धं = ककारणकाराद्यनुबन्धं,

**दाशगोघ्नौ सम्प्रदाने ।३।४।७३।** एतौ निपात्येते । दाशन्ति अस्मै दाशः । गां हन्ति अस्मै गोघ्नः—अतिथिः । **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।३।३।१०।** क्रियार्थायां क्रियायामुपपदे भविष्यदर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । **कालसमयवेलासु तुमुन् ।३।४।१६७।** कालः समयो वेला वा भोक्तुम् ॥ **भावे ३।३।१८** सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम् ।३।३।१९।** कर्तृभिन्ने कारके घञ् । **घञि च भावकरणयोः ।६।४।२७।** रञ्जेर्नलोपः । रागः अनयोः किम् ? रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१।** एषु चिनोतेर्घञ् आदेश्च कः

विद्यात् = कल्पयेत् । एतत् = एतावदेव । उणादिषु-शास्त्रम् = अनुशासनीयमित्यर्थः । एवञ्च 'कृफिड'इत्यादौ ऋधातोः फिडप्रत्ययः, गुणाभावदर्शनात्तस्य ककारश्चानुबन्ध ऊह्य इत्याशयः।

१ क्रिया अर्थः प्रयोजनं यस्याः सा—क्रियार्थां, तस्यां—क्रियार्थायामिति विग्रहः । २ 'कृन्मेजन्तः' इत्यव्ययत्वम् । ३ 'अव्ययकृतो भावे' इति भावे तुमुन्, कर्त्तरि कृदिति कर्त्तरि ण्वुल् । क्रियायामिति सप्तमीनिर्देशात्तद्वाचकस्य यातीत्यस्योपपदत्वम् । दर्शनरूपक्रियार्था क्रिया यानक्रिया, तद्वाचके उपपदे दृशेस्तुमुन्ण्वुलाविति बोध्यम् । ४ कृष्णकर्मकं यद्भविष्यद्दर्शनं तत्प्रयोजनकं यानमित्यर्थः । ५ पर्यायोपादानमर्थोपलक्षणार्थम् । तेन कालार्थकोपपदेषु तुमुन्निति लभ्यते, तेन अनेहश्शब्दे उपपदेऽपि तुमुन् भवति 'अनेहा भोक्तु'मिति । ६ पचनं पाकः । ७ रञ्जनं रागः । ( रंगना )। रज्यतेऽनेनेति वा रागः । ( रंग ) । ८ रङ्गः = रङ्गस्थलम् । ( 'अखाडा' 'स्टेज' ) ।

उपसमाधानं=राशीकरणम् । निकायः[2] । आकायम्[3] । कायः[4] । गोमयनिकायः[5] ॥ **एरच् ।३।३।५६।** इवर्णान्तादच् । चयः[6] ॥ **ॠदोरप् ।३।३।५७।** ऋदन्तादुवर्णान्तादप् । करः[7] । गरः । शरः । यवः । लवः । स्तवः । पवः । **घञर्थे कविधानम्** । प्रस्थः[8] । विघ्नः[9] ॥ **ड्वितः क्त्रिः ।३।३।८८।** भावे स्वभावात् ॥ **क्त्रेर्मम्नित्यम् ।४।४।२०।** क्त्रिप्रत्ययान्तान्मम्निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् । उप्त्रिमम्[10] ॥ **ट्वितोऽथुच् ।३।३।८९।** अयमपि भावे । टुवेपृ कम्पने । वेपथुः[11] । श्वयथुः । **यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०।** यज्ञः[12] । याच्ञा[13] । यत्नः । विश्नः । प्रश्नः । रक्ष्णः ॥ **स्वपो नन् ।३।३।९१।** स्वप्नः[14] ॥

**उपसर्गे घोः किः ।३।३।९२।** प्रधिः[15] । उपाधिः[16] । **स्त्रियां क्तिन् ।३।३।९४।** स्त्रीलिङ्गे भावादौ क्तिन् । घञोऽपवादः ।

---

१ तच्च धात्वर्थः । निवासादयस्तु प्रयोगोपाधयः । २ निचीयतेऽस्मिन् धान्यादिकमिति निकायः = निवासः–गृहम् । ३ आचीयन्तेऽस्मिन्निष्टका इति–आकायः–अग्निस्थलविशेषः । ४ चीयतेऽस्मिन्नस्थ्यादिकमिति कायः = शरीरम् । ५ निचयनं निकायः = राशीकरणम् । ( इकट्ठा करना ) । गोमयानां निकायः–गोमयनिकायः । ६ चयनं चयः । चीयते इतिवा । ७ किरत्यनेन, कीर्यते इतिवा करः । शृणाति अनेन इति शरः । ८ प्रतिष्ठन्त्यस्मिन् धान्यादिकमिति–प्रस्थः परिमाणविशेषः ।

९ विहननं विघ्नः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः । १० वापेन निर्वृत्तम्–उप्त्रिमम् । ११ वेपनं–वेपथुः । १२ इज्यते इति, यजत्यनेनेति वा यज्ञः । कर्मणि करणे वा नङ् । १३ याचनं–याच्ञा । १४ स्वपनं स्वप्नः । १५ प्रधीयतेऽनेन प्रधिः = रथचक्रप्रान्तभागः । 'नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः । 'आतो लोप इटि चे'त्यालोपः । १६ उपाधीयतेऽनेनेत्युपाधिः ।

कृतिः । स्तुतिः । **ऋल्वादिभ्यः क्तिन्निष्ठावद्वक्तव्यः ।** तेन नत्वम् । कीर्णिः । गीर्णिः । धूनिः । लूनिः । पूनिः ॥ **सम्पदादिभ्यः क्विप् ।** सम्पत् । विपत् । आपत् । **क्तिन्नपीष्यते ।** सम्पत्तिः । विपत्तिः । आपत्तिः ॥ **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** ।३।३।९७। एते निपात्याः ॥ **कृञः** ।३।३।१००। क्यप् । कृत्या ॥ **श च** ।३।३।१००। कृञः शः । चात् क्तिन् । प्रकरणम्—प्रक्रिया । कृतिः ॥ **इच्छा** ।३।३।१०१। इषेर्निपातोऽयम् ॥ **अ प्रत्ययात्** ।३।३।१०२। प्रत्ययान्तेभ्यः स्त्रियामकारप्रत्ययः । चिकीर्षा । पुत्रकाम्या ॥ **गुरोश्च हलः** ।३।३।१०३। गुरुमतो हलन्तात्स्त्रियामप्रत्ययः । ईहा । ऊहा ॥ **षिद्भिदादिभ्योऽङ्** ।३।३।१०४। जॄष् । **ऋदृशोऽङि गुणः** । जरा । **त्रपूष्** । त्रपा । भिदा । विदारण एवायम् । भित्तिरन्या । छिदा । मृजा । **कृपेः सम्प्रसारणं च** । कृपा ॥ **आतश्चोपसर्गे** ।३।३।१०६। अङ् स्यात् । उपदा । अन्तर्द्धा ॥ **ण्यासश्रन्थो युच्** ।३।३।१०७। अस्याऽपवादः । कारणा ॥ **रोगाख्यायां ण्वुल् बहुलम्** ।३।३।१०८। प्रच्छर्दिका । प्रवाहिका । विचर्चिका । क्वचिन्न—शिरोर्तिः । *** धात्वर्थनिर्देशे ण्वुल्वक्तव्यः ।**

---

१ करणं कृतिः । स्तवनं स्तुतिः । करण कीर्णिः । गरणं गीर्णिः । २ धवनं धूनिः । ३ सम्पदनं—सम्पत् । ४ करणं कृत्या । ५ एषणम्—इच्छा । इषेर्भावे शो यगभावश्च निपातनात् । ८ पुत्रस्य इच्छा पुत्रकाम्या । ७ ईहनम्—ईहा । ८ जरणं जरा । जीर्यतेऽनया इति वा । ९ त्रपणं त्रपा । १० क्रपणं कृपा । ११ उपदानम्—उपदा = उपहारः । उपदीयते इति वा विग्रहः । १२ 'अ प्रत्यया'दित्यकारप्रत्ययस्यापवाद इत्यर्थः ।

आसिका[1]। शायिका। **इक्श्तिपौ धातुनिर्देशे**। पचिः[2]। पचतिः। **वर्णात्कारः**। निर्देश इत्येव। अकारः[3]। ककारः। **रादिफः**। रेफः॥ **नपुंसके भावे क्तः** ।३।३।११४। **ल्युट् च** ।३।३।११५। हसितम्। हसनम्॥ **करणाधिकरणयोश्च** ।३।३।११७। ल्युट्। अनुमानम्। अनुमानी। गोदोहनी स्थाली। **पुंसि संज्ञायां घः प्रायेण** ।३।३।११८। **छादेर्घेऽद्व्युपसर्गस्य** ।३।४।९६। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वो घे। दन्तच्छदः[4]। आकुर्वन्त्यस्मिन्निति—आकरः[5]॥ **अवे तॄस्त्रोर्घञ्**[6] ।३।३।१२०। अवतारः[7]। अवस्तारो[8] जवनिका॥ **हलश्च** ।३।३।१२१। हलन्ताद्घञ्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिकमिति—अपामार्गः॥ **ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्** ।३।३।१२६। एषु दुःखसुखार्थेषूपपदेषु खल्। तयोरेवेति भावे[9] कर्मणि च। **कृच्छ्रे**—दुष्करः कटो भवता। **अकृच्छ्रे**—ईषत्करः। सुकरः। **आतो युच्**[10] ।३।३।१२८। खलोऽपवादः[11]। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः॥ **आवश्यका-**

---

१ आसनम्—आसिका। २ निर्देशः=अनुकरणम्। 'पच्' इति—पचिः। पचिः=पच्-धातुः। ३ अ इति—अकारः। ४ दन्ताश्छाद्यन्तेऽनेन इति दन्तच्छदः=ओष्ठः। ५ आकरः=खनिः। ६ अपे उपपदे तॄस्तॄभ्यां करणाधिकरणयोः पुंसि सञ्ज्ञायां घञ् स्यात्। घाऽपवादः। ७ अवतरन्त्यनेन—अवतारः=कूपादिमार्गः। ८ अवस्तृणन्त्यनेन अवस्तारः=जवनिका। (परदा)। ९ अकर्मकेभ्यो भावे, सकर्मकेभ्यस्तु कर्मणि। १० ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोर्युच् स्यात्। ११ वासरूपविधिस्तु न, 'क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति तन्निषेधात्।

**अवश्यकाधमर्ण्ययोर्णिनिः** ।३।३।१७०। अवश्यङ्कारी । शतन्दायी ॥ **कृत्याश्च**[1] ।३।३।१७१। तथा धातोः । अवश्यं सेव्यो हरिः । शतं देयम् ॥ **क्तिच्क्तौ च संज्ञायाम्** ।३।३।१७४। आशिषि[2] । भवताद्भूतिः । वातिर्वायुः[3] । शिवो देयादेनं—शिवदत्तः ॥

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** ।३।४।१८। प्राचामिति पूजार्थम्[4] । प्रतिषेधयोरलंखल्वोरुपपदयोः[5] क्त्वा । दो द्धोः । अलं दत्त्वा । 'घुमास्थे'तीत्वम् । पीत्वा खलु । अलंखल्वोः किम् ? मा कार्षीः । प्रतिषेधयोः किम् ? अलङ्कारः ॥

**समानकर्तृकयोः पूर्वकाले** ।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः[6] पूर्वकाले विद्यमानाद्धातोः क्त्वा । **अव्ययकृतो भावे** । भुक्त्वा व्रजति । द्वित्वमतन्त्रम्[7] । स्नात्वा भुक्त्वा पीत्वा व्रजति ॥

**न क्त्वा सेट्** ।१।२।१८। सेट् क्त्वा किन्न । शयित्वा । सेट् किम् ? कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च** ।१।२।२६। इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा । द्योतित्वा । लिखित्वा । लेखित्वा । व्युपधात्किम् ? वर्तित्वा । रलः किम् ? सेवित्वा । हलादेः किम् ? एषित्वा । सेट् किम् ?

---

१ आवश्यकाधमर्ण्ययोर्धातोः कृत्याश्च स्युः । २ धातोः क्तिच् क्तश्च स्यादाशिषि सञ्ज्ञायाम् । ३ वायादिति वातिः । ४ ननु 'उदीचां माङो व्यतीहारे' इति सूत्रे उदीचांग्रहणादस्य सूत्रस्य नित्यत्वावश्यकतया प्राचांग्रहणमत्र नोचितं, विकल्पापत्तेरत आह—**पूजार्थमिति** । 'न विकल्पार्थ'-मिति शेषः । ५ प्रतिषेधार्थयोरित्यर्थः । ६ धातोरित्याधिकारादेतल्लब्धम् । ७ समानकर्तृकयोरिति द्विवचनेन प्रत्यायितं द्वित्वमविवक्षितमित्यर्थः । तेन समानकर्तृकेषु धात्वर्थेषु पूर्वकाले विद्यमानादपि क्त्वा भवति ।

भुक्त्वा ॥ **उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड् वा । शमित्वा । शान्त्वा[1] । देवित्वा । 'छ्वोः शूडनुनासिके च' इति ऊठ् । द्यूत्वा । **दधातेर्हिः** । हित्वा ॥ **जहातेश्च क्त्वि** ।७।४।४३। हित्वा । हाङस्तु—हात्वा ॥

**समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः । तुक्[2] । प्रकृत्य । अनञ् किम् ? अकृत्वा । अव्ययपूर्वपदात्किम् ? परमकृत्वा ॥ **वा ल्यपि** ।६।४।३८। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः । स च व्यवस्थितः । **मान्तानिटां वा । नान्ताऽनिटां वनादिनाञ्च नित्यम्** । आगम्य । आगत्य । प्रहत्य । **अदो जग्धिः** । प्रजग्ध्य ॥ **नल्यपि** ।६।४।६९। घुमास्थेतीत्त्वम् । प्रदाय । प्रमायेत्यादि ॥

**आभीक्ष्ण्ये णमुल् च** ।६।४।२२। पौनःपुन्ये द्योत्ये क्त्वाविषये[3] णमुल् । क्त्वा च ॥ **नित्यवीप्सयोः** ८।१।४। आभीक्ष्ण्ये वीप्सायां च द्योत्ये परस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । पचति-पचति[4] । स्मारं-स्मारं[5] नमति गुरुम् । स्मृत्वा-स्मृत्वा । पायम्[6]-पायम् । भोजम्-भोजम् । श्रावं-श्रावम् ॥ **अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत्** ।३।४।२७।

---

१ 'अनुनासिकस्य क्विझलोः' इति दीर्घः । २ 'ह्रस्वस्य पिति कृति तुक्' इति तुक् । ३ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले इत्यर्थः । ४ अत्र तिङन्ते आभीक्ष्ण्यम् । ५ अव्ययसञ्ज्ञककृदन्तेष्वाभीक्ष्ण्ये उदाहरति-**स्मारमिति** । ६ 'आतो युक् चिण्कृतोः' इति युक् । मान्तत्वादव्ययत्वम् । आभीक्ष्ण्ये द्वित्वम् ।

एषु कृञो णमुल्स्यात् सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत्कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम्, एवंकारम्, इत्थंकारं भुङ्क्ते । इत्थं भुङ्क्ते इत्यर्थः । सिद्धेति किम्? शिरोऽन्यथा-कृत्वा भुङ्क्ते ॥ **यावति विन्दजीवोः** ।३।४।३०। यावद्वेदं भुङ्क्ते । यावल्लभते तावदित्यर्थः । यावज्जीवमधीते ॥ **निमूल-समूलयोः कषः** ।३।४।३४। कर्मण्युपपदे ॥ **कषादिषु यथा-विध्यनुप्रयोगः** ।३।४।४६। यस्माण्णमुलुक्तः स एवानुप्रयो-क्तव्यः । निमूलकाषं कषति । समूलकाषं कषति । निमूलं समूलं कषतीत्यर्थः ॥ **शुष्कचूर्णरूक्षेषु पिषः** ।३।४।३५। एषु कर्मसु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषम् । रूक्षपेषम् ॥ **समूलाकृतजीवेषु हन्कृञ्ग्रहः** ।३।४।३६। कर्मणीत्येव । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवन्तं गृह्णातीत्यर्थः ॥ **करणे हनः** ।३।४।३७। पादघातं हन्ति । पादेन हन्तीत्यर्थः ॥ **स्नेहने पिषः** ।३।४।३८। स्निह्यते येन तस्मिन्करणे पिषेर्णमुल् ।

---

१ व्यर्थत्वात् = निष्प्रयोजनत्वात् । २ निष्प्रयोजनत्वमेव दर्शयति- इत्थमिति । इह शाब्दबोधे विशेषस्य सत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तम्, अनतिप्रयोजनत्वात् । ३ इह शिरोऽन्यथा कृत्वा भुङ्क्ते इत्यर्थलाभाय कृञः प्रयोग आवश्यकः । तद-भावे तु भुजिक्रियागत एव प्रकारो गम्येत, न तु शिरसोऽन्यथा करणम् । अतः करोतेरत्र प्रयोगार्हत्वमस्तीति नाऽत्र णमुलित्याशयः । ४ यावच्छब्दे उपपदे विन्दजीवोर्णमुल्स्यात् । ५ निमूले समूले च कर्मण्युपपदे कषेर्णमुल्स्यात् । ६ जीवतीति जीवः । इगुपधलक्षणः कः ।

उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ॥ **हस्ते वर्तिग्रहोः** ।३।४।३९। हस्तार्थे करणे । हस्तवर्तं वर्तयति । करवर्तम् । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ॥ **स्वे पुषः** ।३।४।४०। करणे इत्येव । 'स्व' इत्यर्थग्रहणम् । तेन स्वरूपे पर्याये विशेषेषु च णमुल् । स्वपोषं पुष्णाति । धनपोषम् । गोपोषम् ॥ **समासत्तौ** ।३।४।५०। तृतीयासप्तम्योर्णमुल् सन्निकर्षे । केशग्राहं युध्यन्ते । हस्तग्राहं युध्यन्ते ॥ **स्वाङ्गे तस्प्रत्यये कृभ्वोः** ।३।४।६१। क्त्वाणमुलौ स्तः । मुखतःकृत्य । मुखतःकृत्वा । मुखतःकारम् । मुखतोभूय । मुखतोभूत्वा । मुखतोभावम् ॥ **इति कृदन्तप्रक्रिया ॥**

## अथ विभक्त्यर्थाः ॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** ।२।३।४६। नियतोपस्थितिकः—प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः ।

---

१ स्वरूपे = स्वशब्दे । पर्याये = धनादौ । विशेषेषु = गवादिषु । २ धनेन पुष्णातीत्यर्थः । ३ केशेषु ग्रहणं भवतु मा वा भूत्, सन्निकर्षमात्रप्रतिपादनमेतत् । एवञ्च अतिसन्निहिता युध्यन्ते इत्यर्थः । ४ तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृञो भुवश्च क्त्वाणमुलौ स्तः ।

५ त्रिकादिपक्षेषु लिङ्गस्यापि प्रातिपदिकार्थत्वात् लिङ्गस्य पृथग्ग्रहणं व्यर्थमित्यत आह—**नियतेति** । नियता उपस्थितिर्यस्येति विग्रहः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः । एवंच तटः तटी तटमित्याद्यनियतलिङ्गेषु नियमेन कस्यापि लिङ्गस्योपस्थित्यभावात् प्रातिपदिकार्थशब्देनाग्रहणात् पृथक् लिङ्गग्रहणमावश्यकमिति भावः ।

६ मात्रशब्दस्य वचनशब्देनैवान्वयभ्रमं वारयति—**मात्रशब्दस्येति** । प्राति-

**प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे सङ्ख्यामात्रे च प्रथमा । प्रातिपदिकार्थमात्रे**—उच्चैः[१] । नीचैः । कृष्णः । श्रीः । ज्ञानम् । **लिङ्गमात्रे**—तटः[२] । तटी । तटम् । **परिमाणमात्रे**[३]—

पदिकार्थश्च लिङ्गं च परिमाणं च वचनं चेति द्वन्द्वः । 'प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्र'मित्यस्वपदविग्रहः । मात्रशब्दोऽवधारणे । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । 'मयूरव्यंसकादयश्च' इति नित्यसमासः । मात्रशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रातिपदिकार्थे, लिङ्गे, परिमाणे, वचने च प्रत्येकमन्वय इत्यर्थः । ननु प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे संख्यामात्रे च प्रथमेत्यनुपपन्नं, लिङ्गादीनां केवलानां प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेरित्याशङ्क्य—'अतएव चाधकालिङ्गमात्रेऽधिके इति विवक्षित'मित्यभिप्रेत्य व्याचष्टे—**लिङ्गमात्राद्याधिक्ये इति** । लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये चेत्यर्थः ।

१ प्रातिपदिकार्थमात्र इत्यस्योदाहरति—**उच्चैरित्यादि** । नन्वव्ययेषु 'सामान्ये नपुंसकम्' इति नपुंसकत्वस्य, कृष्णशब्दे पुंस्त्वस्य, श्रीशब्दे स्त्रीत्वस्य, ज्ञानशब्दे नपुंसकत्वस्य च भानात् कथं प्रातिपदिकार्थस्योदाहरणान्येतानीति चेदुच्यते—'अव्ययादाप्सुपः' इति सूत्रे 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' इति भाष्योक्तरीत्या अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति अव्ययम्—'प्रातिपदिकार्थमात्रे' इत्यस्य उदाहरणं युक्तमेवेति । कृष्णशब्दे पुंस्त्वस्य श्रीशब्दे स्त्रीत्वस्य ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति, तेषां नियतलिङ्गत्वात्, अतस्तेषु लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात्तेषामपि 'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणत्वं निर्बाधमिति भावः । यद्यपि कृष्णः पटः, कृष्णा शाटी, कृष्णं वस्त्रमित्यादौ कृष्णशब्दस्त्रीलिङ्गः, तथापि वासुदेवे भगवति नियतपुंलिङ्ग इति स एवात्र कृष्णशब्दो विवक्षित इति भावः ।

अनियतलिङ्गास्तु तटादिशब्दा लिङ्गमात्राधिक्यस्योदाहरणमित्याशयः । तत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थानन्तर्भावादित्यवधेयम् ।

२ तटः तटी तटमिति । 'तटं त्रिषु' इत्यमरः ।

३ **परिमाणमात्रे इति** । उदाहरणं वक्ष्यते इत्यर्थः ।

द्रोणो व्रीहिः। वचनं सङ्ख्या। एकः। द्वौ। बहवः॥

१ द्रोणो व्रीहिरिति। द्रोणः परिमाणविशेषः। व्रीहिरिति। जातावेकवचनम्। 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या'मिति वचनात्। व्रीहिराशिरिति यावत्। नहि व्रीहिव्यक्तेर्द्रोणपरिमाणं सम्भवति। ननु द्रोणशब्दस्य परिमाणविशेषवाचिनो नियतपुंलिङ्गत्वे 'प्रातिपदिकार्थमात्रे' इत्येव सिद्धम्। यदि तु 'अस्त्रियामाढकद्रोणौ' इति द्विलिङ्गता, तर्हि 'लिङ्गमात्राधिक्ये' इत्येव सिद्धम्, तत् किं परिमाणग्रहणेनेति चेन्न; न हि द्रोणत्वेन रूपेण परिमाणविशेषवाचिद्रोणशब्दात् स्वार्थे प्रथमाविभक्तिरिष्यते, येन 'प्रातिपदिकार्थमात्रे' इत्यनेन गतार्थता स्यात्। किन्तर्हि द्रोणत्वेन परिमाणवाचिनो द्रोणशब्दात् परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधीयते। ततश्च प्रत्ययार्थे परिमाणसामान्ये द्रोणशब्दार्थात्मकप्रकृत्यर्थः परिमाणविशेषः सामान्यविशेषात्मकाभेदसंसर्गेणान्वेति। परिमाणसामान्यात्मकप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति। तथाच द्रोणाख्यपरिमाणविशेषात्मकं यत् सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। परिमाणग्रहणाऽभावे तु द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात्। परिमाणसामान्यंतु न प्रतीयेत। तदर्थमिह परिमाणग्रहणमित्याशयः। एवञ्च द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणं, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः।

२ वचनं संख्येति। पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः। तथाच संख्यामात्रे प्रथमेति लभ्यते। नच 'लिङ्गमात्राधिक्ये' इतिवत् 'संख्यामात्राधिक्ये' इति कुतो न व्याख्यातमिति वाच्यम्, केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानां नियतोपस्थितिसत्त्वेन 'संख्यामात्रे' इत्येव व्याख्यातुमुचितत्वात्। अतएव भाष्ये वचनग्रहणांशे एको द्वौ बहव इत्युदाहृतम्। ननु एको द्वौ बहव इत्यत्र एकत्वद्वित्वबहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे'

**सम्बोधने च**।२।३।४७। प्रथमा। हे राम॥ **कारके** ।१।४।२३। इत्यधिकृत्य। **कर्तुरीप्सिततमं कर्म**।१।४।४९। कर्तुः क्रिययाऽऽप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात्॥ **कर्मणि द्वितीया**।२।३।२। अनुक्ते। हरिं भजति। अभिहिते तु कर्मादौ प्रथमैव। हरिः सेव्यते। लक्ष्म्या सेवितो हरिः। शतेन क्रीतः

---

इत्येव सिद्धे वचनग्रहणं व्यर्थमिति चेन्न; प्रकृतिभिरेवैकत्वादीनामुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्याशयात्।

१ **सम्बोधने च**। सम्बोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः। **हे रामेति**। 'मां पाही'ति शेषः। २ **कर्तुरीप्सितेति**। 'कारके' इत्यनुवृत्तं प्रथमया विपरिणम्यते। आप्तुमिष्यमाणम्-ईप्सितम्। 'आप्लृ व्याप्तौ', इत्यस्मात् सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। मतिरिच्छा, बुद्धेः पृथग्ग्रहणात्। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। अतिशयेनेप्सितम्-ईप्सिततमम्। धातूपात्तव्यापाराश्रयः कर्ता। केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते। तत् फलितमाह-**कर्तुः क्रियये त्यादिना**।

३ **कर्मणि द्वितीया**। 'अनभिहिते' इत्यनुवृत्तं व्याचष्टे—**अनुक्ते इति**। **हरिं भजतीति**। तुष्ट्यनुकूलपरिचरणात्मकव्यापारो भजेरर्थः। पूजादिव्यापारेण हरिं तोषयतीत्यर्थः। कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म। हरिनिष्ठतुष्ट्यनुकूल एकदेवदत्तनिष्ठो वर्तमानो व्यापार इति बोधः। ४ **अभिहिते त्विति**। 'हरिः सेव्यते' इत्यादाविति शेषः। **प्रथमैवेति**। तद्विधावनभिहिताधिकाराभावात्, 'अभिहिते प्रथमा' इति वार्तिकाच्चेति भावः। **अभिधानं चेति**। 'समासै'रित्यनन्तरं 'विवक्षित'मिति शेषः।

५ **हरिः सेव्यत इति**। 'लः कर्मणि' इति कर्मणि लकारः। 'भावकर्मणो'रित्यात्मनेपदम्। तिङन्तेन अभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः। ६ **लक्ष्म्या सेवित इति**। भूते कर्मणि क्तः, कर्तरि तृतीया। लक्ष्मीनिष्ठपरिचरणजनिततुष्ट्याश्रयो हरिरिति बोधः। अत्र सेवितहरेः कर्मणः

शत्यः—अश्वः। प्राप्तानन्दश्चैत्रः। अभिधानञ्च प्रायेण तिङ्कृत्तद्धितसमासैः। क्वचिन्निपातेनाभिधानम्। 'क्रमादमुं नारद इत्यबोधि सः'॥ **तथा युक्तश्चानीप्सितम्** ।१।४।५०। ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात्। ग्रामं गच्छन् तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते।

**अकथितं च** ।१।४।५१। अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।**
**कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥**

---

कृता अभिहितत्वान्न द्वितीया।

१ **शत्य इति**। 'शताच्च ठन्यतावशते' इति यत्प्रत्ययस्तद्धितः। अत्र कर्मणस्तद्धितेनोक्तत्वान्न द्वितीया। २ **प्राप्तानन्द इति**। 'गत्यर्थाकर्मके'-त्यादिना प्राप्तेति कर्तरि क्तः। अन्यपदार्थस्य कर्मणो बहुव्रीहिसमासेनाऽभिहितत्वान्न द्वितीयेति भावः। आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः। ३ प्रायेणेत्यस्य फलं दर्शयति—**क्वचिदिति**।

४ अकथितशब्दं व्याचष्टे—**अपादानादिविशेषैरिति**। अपादानं, संप्रदानम्, अधिकरणं, कर्म, करणं, कर्त्तेति कारकषट्कम्। तदेतद्यदा अपादानत्वादिविशेषात्मना न विवक्षितं किन्तु संबन्धसामान्यात्मनैव तदा तत्कर्मसंज्ञकमित्यर्थः।

५ ननु नटसंबन्धि श्रवणमित्यर्थके 'नटस्य शृणोति' इत्यत्र नटस्यापि कर्मत्वं स्यात्, तस्य क्रियान्वयित्वेन कारकत्वात्, वस्तुतः अपादानस्य संबन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति—**दुह्याजिति**। वार्तिकार्थसंग्रहश्लोकोऽयम्। दुह प्रपूरणे, डुयाचृ याच्ञायाम्, डुपचष् पाके, दण्ड दण्डनिपातने। रुधिर् आवरणे, प्रच्छ ज्ञीप्सायाम्, ( श्लोके प्रच्छीत्यत्रेकार उच्चार-

गां दोग्धि पयः । बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति ।

णार्थः । इका निर्देशे तु 'ग्रहिज्या' इति संप्रसारणप्रसङ्गात् । ) चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये, णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे इति—षोडश धातूनां कर्मणा यद्युज्यते तदेवाऽकथितं कर्मेत्यर्थः ।

१ **गां दोग्धि पय इति**। क्षरणानुकूलव्यापारः क्षारणपर्यायो दुहेरर्थः । क्षारणात्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म । गौस्तु क्षरणे अपादानम् । तदपादानत्वमुपेक्ष्य संबन्धित्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति। ततश्च शेषषष्ठीनिरासे द्वितीया भवति । २ **बलिं याचते वसुधामिति।** 'हरि'रिति शेषः । बलिर्नामासुरविशेषः । मह्यं देहीति प्रार्थना याचेरर्थः । दानानुकूलो मह्यं देहीति शब्दप्रयोगरूपव्यापार इति यावत् । बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयते इत्यर्थः । कर्तुः कर्मत्वविवक्षायां द्वितीयेति **नव्याः** । प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात् । बलिसंबन्धि यद्वसुधाकर्मकं दानं तत् प्रार्थयत इत्यर्थ इति तु **प्राचीनाः । अविनीतं विनयं याचत इति** । अभ्युपगमप्रार्थना याचेरर्थः । यदा कश्चिद्बलवान् अविनीतो दुर्बलं कंचिद्बाधते तदा दुर्बलमधिकृत्येदं वाक्यं प्रवृत्तम् । अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयते इत्यर्थः । कर्तुः कर्मत्वविवक्षायां द्वितीयेति **नवीनाः** । अविनीतसंबन्धिनमभ्युपगममिति तु **प्राचीनाः** ।

३ **तण्डुलानोदनं पचतीति** । विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तप्तोदकप्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः । तया ओदनाख्यद्रव्यान्तरं प्रकृतिभूतेषु तण्डुलेषु समवेतं निष्पद्यते इति स्थितिः । तत्र शिथिलावयवसंयोगविशेषात्मिका विक्लित्तिः समवायसंबन्धेन तण्डुलेषु वर्तते । ओदने तु जन्यजनकभावेन वर्तते । तण्डुलैः प्रकृतिभूतैः ओदनं करोतीत्यर्थः । तण्डुलसमवायिकारणिकां तत्समवेतामोदनजनिकां विक्लित्तिं निर्वर्तयतीत्यर्थः । तत्र व्यापारफलं विक्लित्तिं प्रति जन्यतया आश्रयत्वादोदनः

गर्गान् शतं दण्डयति[1]। व्रजमवरुणद्धि गाम्[2]। माणवकं पन्थानं पृच्छति[3]। वृक्षमवचिनोति फलानि[4]।

---

प्रधानं कर्म। तादृशौदनजनिकां विक्लित्तिं प्रति समवायित्वेनाधारत्वात् तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया। तण्डुसम्बन्धिनीमोदनजनिकां विक्लित्तिं निर्वर्तयतीति तु प्राचीनाः। १ **दण्डयतीति**। दण्डधातुग्रहणानुकूलव्यापारार्थकः। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः। ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वात् शतं प्रधानकर्म। गर्गाणां तु तद्ग्रहणावधित्वाद्गुणकर्मत्वम्। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम्, ग्रहणघटकतादृशविश्लेषप्रतियोगिभूतस्वत्वाश्रयत्वात् कर्मत्वं च। तत्रापादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया। २ **गामिति**। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धनद्वारकपिधानादिव्यापारो रुधेरर्थः। गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया। व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थ इति प्राचीनाः। ३ **माणवकं पन्थानं पृच्छतीति**। जिज्ञासितव्यार्थज्ञानानुकूलः 'केन पथा गन्तव्य'मित्यभिलापादिरूपव्यापारः पृच्छेरर्थः। तत्र विषयतया ज्ञानरूपफलाश्रयत्वात् पन्थाः प्रधानं कर्म। तज्ज्ञानं प्रति जनकतया आश्रयत्वान्माणवको गुणकर्म। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। अत्र माणवके करणत्वाविवक्षायां द्वितीया। पथिविषयकं माणवकसंबन्धि ज्ञानमिच्छतीत्यर्थ इति प्राञ्चः।

४ **वृक्षमवचिनोति फलानीति**। वृक्षात् प्रच्याव्य फलान्यादत्त इत्यर्थः। प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपः—अवपूर्वकचिधातोरर्थः। तत्र प्रच्याव्यादानविषयत्वात् फलानि प्रधानकर्म। प्रच्यवावधित्वाद्वृक्षोऽपादानम्। तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया, वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात्। प्रच्यवस्य विभागस्य द्विनिष्ठत्वात्। वृक्षसम्बन्धि यत् प्रच्युतफलादानं तत् करोतीत्यर्थ इति **प्राचीना इति वासुदेवदीक्षिताः**।

माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा ।

१ माणवकं धर्मं ब्रूते शास्ति वेति । बोधनानुकूलव्यापारो ब्रूञोऽर्थः । माणवकाय धर्मं बोधयतीत्यर्थः । व्यापारप्रयोज्यबोधविषयत्वाद्धर्मः प्रधानकर्म । बोधविषयेण कर्मणाऽभिप्रेयमाणत्वान्माणवकः संप्रदानम् । तस्य संप्रदानत्वमुपेक्ष्य धर्मद्वारा बोधाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । धर्मविषयकं माणवकसंबन्धिनं बोधं जनयतीत्यर्थ इति तु प्राञ्चः । शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधानानुकूलव्यापारोऽर्थः । इतरत् प्राग्वम् । २ देवदत्तमिति । 'जि अभिभवे' । ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः । गर्गान् शतं दण्डयतीतिवद्व्याख्येयम् । ३ मथ्नातीति । 'मन्थ विलोडने' । द्रवद्रव्यगतसारोद्भवनानुकूलो मन्थानदण्डभ्रमजनितसंक्षोभात्मक आस्फालापरपर्यायो व्यापारो मन्थेरर्थः । क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः । व्यापारप्रयोज्योद्भवाश्रयत्वात् सुधा प्रधानकर्म । क्षीरोदधिस्तु उद्भवं प्रत्यपादानम् । तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । सुधाश्रयं क्षीरोदधिसम्बन्धिनमुद्भवं करोतीत्यर्थ इति तु प्राचीनाः । ४ मुष्णातीति । अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयाऽऽदत्ते इत्यर्थः । परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासंचारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः । व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म । अपनयनावधित्वाद्देवदत्तोऽपादानम् । अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । शतकर्मकं देवदत्तसम्बन्ध्यपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः । ५ ग्राममजां नयतीति । ग्रामे अजां प्रापयतीत्यर्थः । णीञ् प्रापणे । प्राप्तिः । ननु देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः देशान्तर-

**अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि । * अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् ।**

---

संयोगमात्रम् । ग्रामं प्रति चलनदशायामेव प्राप्नोति गच्छतीति प्रयोगदर्शनात्, चलनेन संयोगे जाते अजा ग्रामं गता प्राप्तेत्येव दर्शनात्, तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः । एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वादजा प्रधानकर्म । तादृशाजाधारत्वाद्ग्रामोऽधिकरणम् । अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । अजाकर्मकं ग्रामसम्बन्धि नयनमित्यर्थ इति तु **प्राचीनाः** । एवमेव ग्राममजां हरति कर्षति वहतीत्यपि व्याख्येयम् । तत्र देशान्तरसंयोगानुकूलमजाचलनं वाहकद्वारकं, तादृशचलनानुकूलव्यापारः स्कन्धग्रहणादिरूपो **हरतेरर्थः** । रज्जुबन्धनादिना बलाच्चालनं **कृषेरर्थः** । शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो **वहेरर्थ** इति विशेषः ।

१ **अर्थनिबन्धनेयं संज्ञेति** । कैयटादिभिस्तथा व्याख्यातत्वादिति भावः । तथा च एतदर्थकधात्वन्तरसंयोगेऽपि द्विकर्मत्वं लभ्यते । २ ननु कुरून्स्वपिति देवदत्तः, मासमास्ते इत्यादौ कुर्वादेरनुद्देश्यत्वात् 'कर्तुरीप्सिततमम्' इति कर्मत्वं न सम्भवति । कर्तुरेव स्वापादिक्रियाश्रयत्वात् 'तथायुक्तम्' इत्यपि न कर्मत्वमित्यत आह—**अकर्मकधातुभिरिति** । ग्रामसमूहात्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, नतु ग्रामादिरपि । तेन ग्रामे स्वपितीत्यत्र न द्वितीया । अत्र च 'अधिशीङ्स्थासां कर्म' इति लिङ्गम् । अन्यथा 'अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः' इत्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहरति—**कुरून् स्वपितीति** । 'देवदत्त' इति शेषः । कुरुषु निद्रां करोतीत्यर्थः । देवदत्तात्तु न तृतीया, तिङा अभिहितत्वादिति **भावः** । कुर्वादिशब्दा जनपदविशेषु स्वाभावा-

कुर्वन् स्वपिति। मासमास्ते[1]। गोदोहमास्ते[2]। क्रोशमास्ते॥

**गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ।१।४।५२।**[3] गत्याद्यर्थानां शब्दकर्मणामकर्मकाणां चाणौ यः कर्ता स णौ कर्म स्यात्।

'शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम्॥[4]

---

न्नित्यबहुवचनान्ताः।

१ **मासमास्ते इति।** मासस्याधिकरणसंज्ञां बाधित्वा कर्मत्वम्।

२ **गोदोहमिति।** दोहनं दोहः। भावे घञ्। भावो धात्वर्थः। गोदोहनकालोऽत्र विवक्षितः। नचेह कालत्वादेव सिद्धिः शङ्क्या, अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात्। गन्तव्यत्वेनाध्वनो विशेषितत्वान्नियतपरिमाणः क्रोशादिरेव गृह्यत इत्यभिप्रेत्योदाहरति—**क्रोशमास्ते इति।** गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति। अनत्यन्तसंयोगार्थमिदं वार्तिकम्। अत्यन्तसंयोगे तु 'कालाध्वनोरत्यन्तसंयोगे' इत्येव सिद्धम्।

३ **गतिबुद्धि।** गतिश्च बुद्धिश्च प्रत्यवसानं च तानीति द्वन्द्वः। प्रत्यवसानं भक्षणम्। गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति विग्रहः। शब्दः कर्म येषां ते शब्दकर्माणः, तेषामिति बहुव्रीहिः। अविद्यमानं कर्म येषां ते अकर्मकाः। उभयत्रापि कर्मशब्दः कारकपरः। गतिबुद्धिप्रत्यवसानार्थाश्च शब्दकर्माणश्च अकर्मकाश्च तेषामिति द्वन्द्वः। अणौ कर्ता अणिकर्ता। यच्छब्दोऽध्याहार्यः। तदाह—**गत्याद्यर्थानामिति।** णौ अनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्तधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यादित्यर्थः। ४ क्रमेणोदाहरति—**शत्रूनिति।** 'शत्रूनगमयत् स्वर्गम्' इति गत्यर्थकस्योदाहरणम्। शत्रवो युद्धे मृताः स्वर्गमगच्छन्, तान् यो हरिः शस्त्रघातेनागमयत् स्वर्गं स श्रीहरिर्मे गतिरित्यत्रान्वयः। अत्र गमेरण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः। स्वर्गस्तु कर्म। ण्यन्तावस्थायां

**आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः।**
**नीवह्योर्न**[२]**। नाययति वाहयति वा भारं भृत्येन ॥ नियन्तृकर्तृ**[३]**-कस्य वहेरनिषेधः। वाहयति रथं वाहान्सूतः ॥ आदिखाद्योर्न**[४]**।**

---

तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्रघातक्रियां प्रति घातयिता हरिः कर्ता। शत्रवस्तु कर्म। शास्त्रघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात्। एवंच हरिः प्रयोजककर्ता, शत्रवस्तु प्रयोज्यकर्तारः। **स्वानवेदयदिति।** बुद्ध्यर्थधातोरुदाहरणम्। स्वशब्दः आत्मीयपरः। स्वे = स्वकीया विधिप्रमुखाः वेदार्थमविदुः, तान् हरिर्वेदार्थमवेदयदित्यर्थः। अत्र स्वेषां प्रयोज्यकर्तॄणां कर्मत्वम्। **देवानिति।** शब्दकर्मण उदाहरणम्। देवा अमृतमाश्नन्, तान् हरिराशयदित्यर्थः। **वेदमध्यापयद्विधिमिति।** शब्दकर्मण उदाहरणमेतत्। विधिः=ब्रह्मा वेदमधीतवान्, तं हरिरध्यापयदित्यर्थः। अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम्। १ **आसयत्सलिले पृथ्वीमिति।** अकर्मकस्योदाहरणम्। सलिले पृथ्वी आस्त, तां हरिरासयदित्यर्थः। अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम्। 'यः स मे श्रीहरिर्गति'रिति प्रतिवाक्यमन्वयः। २ **नीवह्योर्नेति।** णीञ् प्रापणे, वह प्रापणे इत्यनयोर्ण्यन्तयोः प्रयोज्यकर्तुः 'गतिबुद्धीत्युक्तं नेति वक्तव्यमित्यर्थः। **नाययति वाहयति वेति।** भृत्यो भारं नयति वहति वा, तं प्रेरयतीत्यर्थः। अत्र प्रयोज्यकर्तुर्भृत्यस्य णिचप्रकृत्यर्थनयनं वहनं च प्रति कर्तुः प्रयोजकव्यापारं प्रति कर्मत्वे निवृत्ते णिचप्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात्तृतीया बोध्या। यद्यपि नीवह्योः प्रापणमर्थः, तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात् प्राप्तिरिति भावः। ३ **वहेरनिषेध इति।** एवंच तत्र प्रयोज्यकर्तुरुक्तस्य 'नीवह्योर्न' इति प्रतिषेधस्याभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्। **वाहयतीति।** वाहाः = अश्वाः वहन्ति, तान् सूतः प्रेरयतीर्थः।

४ **आदिखाद्योर्नेति।** अद भक्षणे, खाद भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। **आदयति खादयति वेति।** अत्ति खादति वा अन्नं वटुः, तं प्रेरयतीत्यर्थः।

आदयति खादयति वा अन्नं बटुना ॥ **भक्षेरहिंसार्थस्य न**[1] । भक्षयत्यन्नं बटुना[2] । अहिंसार्थस्य किम् ? भक्षयति बलीवर्दान् सस्यम् ॥ **जल्पतिप्रभृतीनामुपसङ्ख्यानम्**[3] । जल्पयति भाषयति वा धर्मं पुत्रं देवदत्तः[4] । **दृशेश्च**[5] । दर्शयति हरिं भक्तान् । सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं नतु तद्विशेषार्थानामिति–अनेन ज्ञाप्यते । तेन स्मरति जिघ्रत्यादीनां न । स्मारयति घ्रापयति देवदत्तेन । * **शब्दायतेर्न**[6] । शब्दाययति देवदत्तेन ।

---

१ **भक्षेरिति** । अहिंसार्थकस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः । ननु 'गतिबुद्धि' इति सूत्रे अणौ कर्तुर्णौ कर्मत्वमुक्तम् । भक्षधातुस्तु चुरादित्वात् नित्यं स्वार्थिकण्यन्तः । तस्याणि कर्ता नास्त्येव । अतस्तस्य कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेत्, न—अत एव निषेधाल्लिङ्गात् 'गतिबुद्धि' इति सूत्रे णिग्रहणेन हेतुमत एव विवक्षितत्वात् । एवञ्च हेतुमण्णिचि अनुत्पन्ने सति अण्यन्तभक्षिधातुवाच्यां क्रियां प्रति कर्तुः हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्यतीति न दोषः ।

२ **भक्षयत्यन्नं बटुनेति** । चुरादिण्यन्ताद्भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे हेतुमण्ण्यन्तात्तिवादौ सति भक्षयतीति रूपम् । एवंच भक्षयत्यन्नं बटुः, खादतीत्यर्थः । तं प्रेरयतीति ण्यन्तस्यार्थः । **सस्यमिति** । क्षेत्रे प्ररूढमलूनं सस्यमिह विवक्षितम् । तस्य तदानीमन्तःप्रज्ञजीवत्वात्तद्भक्षणं हिंसैवेति भावः । ३ **जल्पतिप्रभृतीनामिति** । एतेषामणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । ४ **जल्पयति भाषयति वेति** । धर्ममिति शेषः । पुत्रो धर्मं जल्पति, भाषते वा, तं देवदत्तः प्रेरयतीत्यर्थः । गत्यर्थादिष्वनन्तर्भावाद्वचनम् । ५ **दृशेश्चेति** । 'दृशिर् प्रेक्षणे' । अस्याप्यणौ यः कर्ता स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । **दर्शयतीति** । हरिं भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः । ६ **शब्दायतेर्नेति** । शब्दं करोतीत्यर्थे 'शब्दवैरे'त्यादिना क्यङि, 'अकृत्सार्वधातुकयो'रिति

**हृक्रोरन्यतरस्याम्**[1] ।१।४।५३। हृक्रोरणौ यः कर्ता स णौ वा कर्म स्यात् । हारयति कारयति भृत्येन भृत्यं वा कटम् ॥ ❀ **अभिवादिदृशोरात्मनेपदे वेति वाच्यम्**[2] । अभिवादयते दर्शयते देवं भक्तेन भक्तं वा ॥ **अधिशीङ्स्थासां कर्म**[3] ।१।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः ॥

**अभिनिविशश्च**[4] ।१।४।४७। अभिनीत्येतत्सङ्घातपूर्वस्य

---

दीर्घे, 'सनाद्यन्ताः' इति धातुत्वे श्तिपा निर्देशोऽयम् । शब्दायेति क्यङन्तधातोरणौ कर्ता णौ कर्म नेति वक्तव्यमित्यर्थः । **शब्दाययति देवदत्तेनेति** । शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः । देवदत्तस्य कर्मत्वाभावात् प्रयोज्यकर्तृत्वमादाय तृतीयैव ।

१ **हृक्रोरिति** । हा च का च हृकरौ, तयोरिति विग्रहः । **हारयति कारयति वेति** । हरति करोति वा कटं भृत्यः, तं हारयतीत्यर्थः । अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः । २ **अभिवादीति** । हेतुमण्ण्यन्तस्याभिपूर्वकवदधातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ कर्ता णौ कर्म वेत्यर्थः । **अभिवादयते इति** । अभिवदति नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः । कर्तृगामिनि फले 'णिचश्च' इत्यात्मनेपदम् । अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः । ३ **अधिशीङ्** । शीङ्, स्था, आस् एषां द्वन्द्वः । अधिपूर्वाः शीङ्स्थास इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपः । तदाह—**अधिपूर्वाणामिति** । अधिकरणसंज्ञापवादोऽयम् । **अधिशेते इति** । अधिशेते वैकुण्ठं हरिः, अधितिष्ठति वैकुण्ठं हरिः, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः । अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः । वैकुण्ठे शेते तिष्ठत्यास्ते वेत्यर्थः । ४ **अभिनिविशश्च** । आधार इति, कर्मेति चानुवर्तते । अभिनीति संघातग्रहणम् । **सन्मार्गमिति** । आग्रहवानित्यर्थः । अप्रतिहप्रवृत्तिमानिति यावत् । नन्वेवं सति पापेऽभिनिवेश इत्यत्रापि

विशतेराधारः कर्म स्यात्। अभिनिविशते सन्मार्गम्। परिक्रयणे सम्प्रदानमितिसूत्रादिह मण्डूकप्लुत्याऽन्यतरस्यां ग्रहणमनुवर्त्त्य व्यवस्थितविभाषाश्रयणात्क्वचिन्न—पापेऽभिनिवेशः॥

उपान्वध्याङ्वसः।१।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात्। उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः। ❀ अभुक्त्यर्थस्य तु न। वने उपवसति।

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते'॥

उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक्कृष्णा-

---

कर्मत्वात्-द्वितीया स्यादित्यत आह—'परिक्रयणे' इति। सूत्रादन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्नेत्यन्वयः। 'एष्वर्थेष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम्। १ उपान्वध्याङ्वसः। उप अनु अधि आङ् इत्येतेषां द्वन्द्वः। उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवादित्वात् समासः। तदाह—उपादिपूर्वस्येति। उपवसतीत्यादि। वैकुण्ठे वसतीत्यर्थः। उपसर्गा आधारत्वद्योतकाः।

२ उभसर्वतसोरिति। वार्तिकमेतत्। उभशब्दसर्वशब्दप्रकृतिकतसन्तयोः प्रयोगे सति द्वितीया कार्येत्यर्थः। धिगिति। धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या। 'प्रकृतिवदनुकरणम्' इत्यव्ययत्वात्सुपो लुक्। उपर्यादिष्वित्यनेन 'उपर्यध्यधसः सामीप्ये' इति सूत्रोपात्तान्यव्ययानि गृह्यन्ते। द्विरुक्तस्य परमाम्रेडितम्, तदन्तेषु कृतद्विर्वचनेष्विति यावत्। तथाच कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः। तत इति। उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः।

३ गोपा इति। कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः। आद्यादित्वात्तसिः। 'उभयोऽन्यत्र' इत्ययच्। षष्ठ्यर्थे द्वितीया। सर्वतः कृष्णमिति। कृष्णस्य सर्वेषु

भक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् ॥ * अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि[1] । अभितः कृष्णम् । परितः कृष्णम् । ग्रामं समया । निकषा लङ्काम् । हा कृष्णाभक्तम्[2] । ऋते । 'बुभुक्षितं न प्रतिभाति किञ्चित्' ॥ **अन्तरान्तरेण युक्ते[3] ।२।३।४।** द्वितीया स्यात् । अन्तरा त्वां मां वा हरिः । अन्तरेण हरिं न सुखम् ॥

---

पार्श्वेषु गोपा इत्यर्थः । **धिक् कृष्णाभक्तमिति** । धिगिति निन्दायाम् । कृष्णाभक्तस्य निन्देत्यर्थः । केचित्तु कृष्णाभक्तो निन्द्य इत्यर्थः । प्रथमार्थे द्वितीयेत्याहुः । धिङ्मूर्खेत्यत्र तु निषिद्धाचरणमित्यध्याहार्यम् । **उपर्युपरीति** । 'उपर्यध्यधसः सामीप्ये' इति द्विर्वचनम् । लोकस्य समीपे उपरि हरिरस्तीत्यर्थः । **अध्यधीति** । लोकस्य समीपदेशे हरिरस्तीत्यर्थः । **अधोऽध इति** । लोकस्य समीपे अधो हरिरस्तीत्यर्थः । १ **अभितःपरित इति** । 'ततोऽन्यत्रापि दृश्यते' इत्यस्य प्रपञ्चोऽयम् । 'योगेऽपी'त्यनन्तरं 'द्वितीये'ति शेषः । **अभितः कृष्णमिति** । गोपा इति शेषः । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । **परितः कृष्णमिति** । कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः । 'पर्यभिभ्यां च' इति तसिल् । **ग्रामं समया निकषेति** । समया निकषा इति च आकारान्ते अव्यये । ग्राममित्यस्य प्रत्येकमन्वयः । ग्रामस्य समीपे इत्यर्थः । 'निकषान्तिके' इति 'समयाऽन्तिकमध्ययोः' इति चामरः । 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः । २ **हा कृष्णाभक्तमिति** । हा इत्याकारान्तमव्ययं खेदे । 'हा विषादशुगार्तिषु इत्यमरः । तदाह—**तस्य शोच्यतेत्यर्थ इति** । कृष्णाभक्तः शोच्य इत्यर्थ इत्यन्ये । प्रतियोगमुदाहरति—**बुभुक्षितमिति** । क्षुधार्तस्य किंचिदपि न स्फुरतीत्यर्थः । 'भा दीप्तौ' इह तु उपसर्गबलात् स्फुरणे वर्तते ।

३ **अन्तरान्तरेण युक्ते** । अन्तरा इत्याकारान्तमव्ययं, नतु टावन्तम् । अन्तरेणेत्यप्यव्ययमेव, नतु तृतीयान्तमिति भाष्ये स्थितम् । **अन्तरा**

कर्मप्रवचनीयाः ।१।४।८३। इत्यधिकृत्य ॥ **अनुर्लक्षणे** ।१।४।८४। लक्षणे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । गत्युपसर्गसंज्ञापवादः ॥ **कर्मप्रवचनीययुक्ते द्वितीया** ।२।३।८। 'जपे जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः । 'परोऽपि वर्षणलक्षणत्वञ्च—वर्षणज्ञानानुकूलज्ञानविषयत्वम्' ।

त्वां मां हरिरिति । तव च मम मध्ये हरिरित्यर्थः । 'अन्तरा मध्ये' इत्यमरः । अन्तरेण हरिमिति । हरेर्वर्जने सुखं नास्तीत्यर्थः । 'पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने ।' इत्यमरः । इत्यधिकृत्येति । 'प्राग्रीश्वरान्निपाताः' इति पर्यन्तमिति बोध्यम् । अनुर्लक्षणे । लक्षणे द्योत्ये इति । लक्ष्यलक्षणभावसम्बन्धे द्योत्ये इत्यर्थः ।

१ गत्युपसर्गसंज्ञापवाद इति । अनेन क्रियायोगे एव कर्मप्रवचनीयसंज्ञेति सूचितम् । 'कर्मप्रवचनीयाः इति महासंज्ञाकरणसामर्थ्यादन्वर्थत्वम् । कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः कर्मप्रवचनीयाः । भूते कर्तरि बाहुलकादनीयप्रत्ययः, ततश्च क्रियामेव न द्योतयन्ति किंतु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति । एवं च अनुप्रत्यादिषु क्रियानिरूपितसम्बन्धस्य द्योत्यत्वेन अन्वयात् तत्र गत्युपसर्गसंज्ञयोः प्राप्तिर्बोध्या । जपमन्विति । कदा पर्जन्योऽवर्षदिति प्रश्ने उत्तरमिदम् । अत्र वृष्टिकाल उपदेश्यः, स च दुर्ज्ञानत्वात् शाखाग्रं प्रति द्विकलश्चन्द्र इतिवत् प्रज्ञानं किंचिदवलम्ब्यैव ज्ञाप्यः । जपोऽत्र प्रज्ञानम् , तत्र जपकाले पर्जन्यः प्रावर्षदिति सम्भवति । हेतुभूतजपो ह्यत्र लक्षणम् । हेतुत्वं च पूर्वकालवृत्तित्वघटितम् । एवं च वर्षहेतुभूतवरुणजपोत्तरकाले पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति । तत्र लक्षणत्वं हेतुत्वं चेति द्वयं द्वितीयार्थः । तदुभयमनुना द्योत्यते । लक्षणत्वं च ज्ञानजनकज्ञानविषयत्वम् । जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते । ततश्च जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः । तदाह—**हेतुभूतेति** । अनभिहिताधिकारान्न पर्जन्यात्तृतीया, तस्य तिङा अभिहितत्वात् ।

हेताविति तृतीयाऽनेन बाध्यते, 'लक्षणेत्थंभूते'त्यादिना सिद्धे पुनः-संज्ञाविधानसामर्थ्यात् । **तृतीयार्थे** [1] ।१।४।८५। अनुरुक्तसंज्ञः । नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । षिञ् बन्धने । क्तः । **हीने** ।१।४।८६। अनुरुक्तसंज्ञः । अनु हरिं सुराः । हरेर्हीना इत्यर्थः ॥ **उपोऽधिके च** [2] ।१।४।८७। अधिके हीने च उपेत्यव्ययं प्राग्वत् । अधिके सप्तमी वक्ष्यते । हीने—उप [3] हरिं सुराः ॥ **लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः** ।१।४।९०।उक्तसंज्ञाः स्युः । **लक्षणे**—वृक्षं प्रति पर्यनु वा विद्योतते विद्युत् । **इत्थंभूताख्याने**—भक्तो [4] विष्णुं प्रति

---

१ **तृतीयार्थे** । अनुरित्यनुवर्तते । 'कर्मप्रवचनीयाः' इत्यधिकृतम् । **सम्बद्धेति** । साहित्यं द्वितीयार्थः, अनुस्तद्द्योतक इति भावः । **प्राग्वदिति** । कर्मप्रवचनीयसंज्ञ इत्यर्थः । **अनु हरिं सुरा इति** । अत्र निकृष्टभावोऽनुद्योत्यो द्वितीयार्थः । तदाह—**हरेर्हीना इत्यर्थ इति** । हरेरिति षष्ठी प्रतियोगितायाम्, हरिप्रतियोगिकनिकर्षवन्त इत्यर्थः । २ **उपोऽधिके च** । चकारात् 'हीने' इति समुच्चीयते । तदाह—**अधिके हीने चेति** । आधिक्ये निकर्षे चेत्यर्थः । **वक्ष्यत इति** । 'यस्मादधिकम्' इत्यनेन कर्मप्रवचनीयसंज्ञाकार्यं सप्तमी वक्ष्यते इत्यर्थः । ३ **हीने इति** । 'उदाहरणं वक्ष्यते' इति शेषः । **उप हरिं सुरा इति** । हरेर्हीना इत्यर्थः । **लक्षणेत्थंभूतेति** । लक्षणं ज्ञापकम् । अयं प्रकारः इत्थं, तं प्राप्तः—इत्थंभूतः, तस्याख्यानमुपपादकमित्थंभूताख्यानम् । भागः स्वीकार्योंऽशः, तत्स्वामी विवक्षितः । व्याप्तुं कार्त्स्न्येन सम्बन्धुमिच्छा वीप्सा । लक्षणं च इत्थंभूताख्यानं च भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी । तदाह—**एष्विति** ।

४ **भक्तो विष्णुं प्रतीति** । भज सेवायाम् । भक्तिरस्त्यस्येति भक्तः, मत्वर्थीयोऽर्श आद्यच् । विषयतासम्बन्धः प्रत्यादिद्योत्यो द्वितीयार्थः, तस्य

पर्यनु वा । **भागे**—लक्ष्मीर्हरिं प्रति पर्यनु वा । हरेर्भाग इत्यर्थः । **वीप्सायाम्**—वृक्षं वृक्षं प्रति पर्यनु वा सिञ्चति । एषु किम् ? परिषिञ्चति ॥ **अभिरभागे** ।१।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात् । हरिमभिवर्तते । भक्तो हरिमभि । देवं देवमभि सिञ्चति । अभागे किम् ? यदत्र[2] ममाभिष्यात्तद्दीयताम् ॥

---

भक्तावेकदेशेऽन्वयः । विष्णुविषयकभक्तिमानित्यर्थः । अत्र भक्तो भक्तिरूपं प्रकारविशेषं प्राप्तत्वात् इत्थंभूतः । तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासम्बन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम् । **लक्ष्मीर्हरिं प्रतीति** । स्वामित्वं द्वितीयार्थः, प्रत्यादिद्योत्यः । तदाह—**हरेर्भाग इत्यर्थ इति** । हरेः स्वभूतेति यावत् । १ **वृक्षं वृक्षं प्रतीति** । 'नित्यवीप्सयोः' इति द्विर्वचनम् । **एषु किमिति** । 'लक्षणेत्थंभूताख्यानभागवीप्सासु' इति किमर्थमित्यर्थः । **परिषिञ्चतीति** । 'अभि'मित्यादि शेषः । अत्र लक्षणाद्यभावात् कर्मप्रवचनीयत्वाभावे 'उपसर्गात्सुनोति' इति षत्वमिति भावः ।

**लक्षणादाविति** । आदिना इत्थंभूताख्यानवीप्सयोः संग्रहः । लक्षणे उदाहरति—**हरिमभि वर्तत इति** । जयः क्वेति प्रश्ने इदमुत्तरम् । लक्ष्यभावोऽभिद्योत्यो द्वितीयार्थः । हरिलक्ष्यो जय इत्यर्थः । **भक्तो हरिमभीति** । इत्थंभूताख्याने उदाहरणमिदम् । विषयतासम्बन्धोऽभिद्योत्यो द्वितीयार्थः । हरिविषयभक्तिमानित्यर्थः । वीप्सायामुदाहरति—**देवं देवमभि सिञ्चतीति** । कात्स्न्र्यसम्बन्धात्मिका व्याप्तिर्द्वितीयार्थः, अभिद्योत्यश्च । कृत्स्नं देवमभिषिञ्चतीत्यर्थः । षत्वाभावादि पूर्ववत् । २ **यदत्रेति** । बहूनां द्रव्यं तण्डुलादि यत्र संसृष्टं तत्रेदं वाक्यम् । स्वस्वामिभावः षष्ठ्यर्थः, अभिस्तद्द्योतकः । अत्र संसृष्टद्रव्ये यद्वस्तु मम स्वभूतं स्यात्, तन्मह्यं दीयतामित्यर्थः । स्यादित्यस्तेर्लिङि रूपम् । अत्र मम भाग इत्यर्थतः पर्यवसानादभाग इति कर्मप्रवचनीयत्वपर्युदासादुपसर्गत्वस्य निर्बाधत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् ।

**सुः पूजायाम्** ।१।४।९४। सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् ? सुषिक्तं किं तवात्र । क्षेपोऽयम् ॥ **अतिरतिक्रमणे च** ।१।४।९५। चात्पूजायामतिरुक्तसंज्ञः । अति देवान्कृष्णः ॥ **कालाध्वनोरत्यन्तसंयोगे** ।२।३।५। इह द्वितीया स्यात् । मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं

---

१ **सुः पूजायामिति** । कर्मप्रवचनीय इति शेषः । सोः कर्मप्रवचनीयत्वे प्रयोजनमाह—**अनुपसर्गत्वान्न ष इति** । 'उपसर्गात् सुनोति' इत्यनेनेति शेषः । **पूजायां किमिति** । सुना पूजायाः नित्यं प्रतीतेः प्रश्नः । **तवात्रेति** । त्वया सम्यक् सिक्तं, किन्तु अत्रास्मिन् सुसेके कृते सति सेक्तुस्तव किं, न किञ्चिदपीत्यर्थः । **क्षेपोऽयमिति** । निन्दात्र गम्यत इत्यर्थः । सेकक्रियाकर्तुः पूज्यत्वे गम्य एवात्र कर्मप्रवचनीयत्वम् । तदभावात् 'उपसर्गात् सुनोति' इति षत्वमिति भावः । २ **अतिरतिक्रमणे च** । चकारात् पूजायामिति समुच्चीयत इत्याह—**पूजायां चेति** । अतिक्रमणमुचितादाधिक्यम् । **अति देवान् कृष्ण इति** । प्रपञ्चसंरक्षणविषये देवेभ्योऽधिकः कृष्ण इत्यर्थः । देवानां पूज्य इति वा । आद्येऽर्थे 'कुगतिप्रादयः' इति समासो न 'स्वती पूजायामेवेति नियमात् । द्वितीये त्वनभिधानान्न । **इहेति** । कालाध्वनोरत्यन्तसंयोगे इत्यर्थः । निरन्तरसंयोगः–अत्यन्तसंयोगः । गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये द्वितीया स्यादित्यर्थः । सा च कालाध्वभ्यामेव भवति, श्रुतत्वात् । तत्र गुणात्यन्तसंयोगे उदाहरति—**मासं कल्याणीति** । भवतीति शेषः । त्रिंशद्दिनात्मको मासः । तस्मिन्नविच्छिन्नमङ्गलवानित्यर्थः । ३ क्रियात्यन्तसंयोगे उदाहरति—**मासमधीते इति** । त्रिंशद्दिनात्मके प्रतिदिनमुचितकाले निरन्तरमधीत इत्यर्थः । ४ द्रव्यात्यन्तसंयोगे उदाहरति—**मासं गुडधाना इति** । मासे प्रतिदिनं निरन्तरं गुडधानाः सन्तीत्यर्थः । कालात्यन्तसंयोगमुदाहृत्य अध्वात्यन्तसंयोगे उदा-

कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्? मासस्य द्विरधीते। क्रोशस्यैकदेशे पर्वतः।

**स्वतन्त्रः कर्तेति** कर्तृसंज्ञा॥ **साधकतमं करणम्** ।१।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्॥

**कर्तृकरणयोस्तृतीया** ।२।३।१८। अनभिहिते कर्तरि करणे च तृतीया स्यात्। रामेण बाणेन हतो वाली॥ ❀ **प्रकृत्यादिभ्य उपसंख्यानम्**। प्रकृत्या चारुः। प्रायेण याज्ञिकः। गोत्रेण

---

ह्रति—क्रोशं कुटिला नदीत्यादि।

१ **मासस्य द्विरिति**। मासे त्रिंशद्दिनात्मके द्वयोर्दिनयो प्रतिदिनमेकवारमित्येवं द्विरधीत इत्यर्थः। 'द्वित्रिचतुर्भ्यः सुच्' इति द्विशब्दात् कृत्वोर्थे सुच् 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठी। शेषषष्ठीति केचित्।

२ **क्रियासिद्धाविति**। क्रियोत्पत्तावित्यर्थः। कारकाधिकारलभ्यमिदम्। **प्रकृष्टोपकारकमिति**। कर्त्रा क्रियायां जनयितव्यायां यत् सहायभूतं तदुपकारकमित्युच्यते॥ साधकतममित्यस्य व्याख्यानमेतत्। साधकशब्दात् 'अतिशायने तमप्' इति तमप्। अतिशयितं साधकतममिति भावः। यद्व्यापारानन्तरं क्रियानिष्पत्तिः तत् प्रकृष्टम्। कर्तृव्यापाराधीनयद्व्यापाराऽव्यवहिता क्रियानिष्पत्तिः तत्तस्यां करणमिति यावत्। 'अनभिहिते' इत्यधिकारादाह—**अनभिहित इति**। **रामेणेति**। रामकर्तृकबाणकरणकहिंसाक्रियाविषयो वालीत्यर्थः। **प्रकृत्यादिभ्य उपसंख्यानमिति**। 'तृतीयाया' इति शेषः। ३ उपपदविभक्तिरियम्। यथायोग सर्वविभक्त्यपवादः। ४ **प्रकृत्या चारुरिति**। सम्बन्धस्तृतीयार्थः। प्रकृतिः स्वभावः, तत्सम्बन्धिचारुत्ववानित्यर्थः। यदा तु स्वभावेनैवायमभिरूपो न त्वलंकारादिनेति करणान्तरव्युदासाय प्रकृतेः करणत्वं विवक्ष्यते तदा 'कर्तृकरणयोः' इत्येव सिद्धमिति भाष्यम्। **प्रायेण याज्ञिक इति**। प्रायशब्दो बहुलवाची। बहुलाचार-

गार्ग्यः । समेनैति । विषमेणैति[1] । द्विद्रोणेन धान्यं क्रीणाति । पञ्चकेन पशून्गृह्णाति । सुखेन दुःखेन[2] वा यातीत्यादि ॥ **दिवः कर्म च**[3] ।१।४।४३। दिवः साधकतमं कर्मसंज्ञं स्याच्चात्करणसंज्ञम् । अक्षैरक्षान्वा दीव्यति ॥ **सहयुक्तेऽप्रधाने** ।२।३।१९। सहार्थेन युक्तेऽप्रधाने तृतीया । पुत्रेण[4] सहागतः पिता । एवं साकंसार्धसमंयोगेऽपि । विनापि तद्योगं तृतीया, वृद्धो यूनेति

---

सम्वन्धियाज्ञिकत्ववानित्यर्थः । सम्वन्धश्च ज्ञाप्यज्ञापकभावः । वहुलेन आचारेण हेतुना ज्ञाप्ययाज्ञिकत्ववानित्यर्थे तु 'इत्थंभूतलक्षणे' इत्येव सिद्धम् । वहुलेन आचारेण सम्पन्नयाज्ञिकत्ववानित्यर्थे तु करणत्वादेव सिद्धिमिति भाष्यम् । **गोत्रेण गार्ग्य इति**। गोत्रमस्य गार्ग्य इत्यर्थः । अत्र प्रथमा प्राप्ता । गोत्रेण हेतुना ज्ञाप्यगार्ग्यत्ववानित्यर्थे तु 'इत्थंभूतलक्षणे' इत्येव सिद्धम् ।

१ **विषमेणैतीति** । क्रियाविशेषणमेतत् । समं विषमं च गमनं करोतीत्यर्थः । कर्मणि द्वितीया प्राप्ता । समेन विषमेण वा पथा एतीत्यर्थेतु करणत्वादेव सिद्धम् । **क्रीणातीति** । द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वान्न स्त्रीत्वम् । द्विद्रोणसंवन्धि धान्यमित्यर्थे पष्ठी प्राप्ता । द्विद्रोणपरिमितधान्यमूल्यं हिरण्यं द्विद्रोणं, तेन क्रीणातीत्यर्थे तु करणत्वादेव सिद्धम् ।

२ **सुखेनेति** । सुखजनकं यानं करोतीत्यर्थः । क्रियाविशेषणत्वात्—द्वितीया प्राप्ता । ३ **दिवः कर्म च** । साधकतममित्यनुवर्तते । तदाह—**दिवः साधकतममिति** । दिवुधात्वर्थं प्रति साधकतममित्यर्थः । **चादिति** । चकारात् करणसंज्ञकमित्यपि लभ्यत इत्यर्थः । 'पृथग्विनानानाभिः' इतिवत् सहेनेत्येव सिद्धे युक्तग्रहणं सहार्थकशब्दानां साकमित्यादिनामपि ग्रहणार्थमित्याह—**सहार्थेनेति** । ४ **पुत्रेणेति** । पितुरत्रागमनक्रियासंवन्धः शाब्दः । पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याऽप्राधान्यम् । अर्थग्रहणस्य प्रयोजनमाह—**एवं साकमिति** । ननु 'पुत्रेणागतः पिता' इत्यत्र सहादिशब्दाभावात् कथं तृतीयेत्यत आह—**विनापीति** । 'वृद्धो यूना तल्लक्षणश्चेत्' इति सूत्रे

निर्देशात् ॥ येनाङ्गविकारः ।२।३।२०। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया। अक्ष्णा[2] काणः। अक्षिसम्बन्धिकाणत्व-विशिष्ट इत्यर्थः ॥ अपवर्गे तृतीया ।२।३।६। अपवर्गः = फल-प्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। अह्ना क्रोशेन वाऽनुवाकोऽधीतः। अपवर्गे किम् ? मासमधीतो नायातः ॥ हेतौ ।२।३।२३। तृतीया। दण्डेन घटः। पुण्येन दृष्टो हरिः। इत्थंभूतलक्षणे[3] ।२।३।२१। कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात्। जटाभिस्तापसः। जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ॥ संज्ञोऽन्यतरस्यां कर्मणि ।२।३।२२। सम्पूर्वस्य जानातेः कर्मणि तृतीया। पित्रा पितरं वा सञ्जानीते ॥

सहादिशब्दाभावेऽपि तदर्थावगमेऽपि तृतीयानिर्देशदर्शनादित्यर्थः।

१ येनाङ्गविकारः। अङ्गान्यस्य सन्तीत्यङ्गि शरीरम्। अर्श आद्यच्। तस्य विकार इति विग्रहः। येनेत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते। नह्य-विकृतेन अङ्गेन अङ्गिनो विकारः सम्भवति। तदाह—येनाङ्गेनेत्यादिना।

२ अक्ष्णा काण इति। काणशब्दः काणत्ववति वर्तते। सम्बन्धस्तृती-यार्थः। स च काणत्वेऽन्वेति। तदाह—अक्षिसम्बन्धीति। संबन्धश्च विकार-प्रयुक्तत्वरूपः। अक्षिविकारप्रयुक्तकाणत्ववानिति यावदिति श्रीवासुदेवदीक्षिताः।

३ इत्थंभूतलक्षणे। अयं प्रकारः इत्थं, तं भूतः प्राप्तः—इत्थंभूतः। 'भू प्राप्तौ' इति चौरादिकात् 'आधृषाद्वा' इति णिजभावे 'गत्यर्थाकर्मके'त्यादिना कर्तरि क्तः। लक्षणं ज्ञापकम्। प्रकारविशेषं प्राप्तस्य ज्ञापके इत्यर्थः। तदाह—कंचित्प्रकारमिति। जटाभिस्तापस इति। तपः अस्यास्तीति तापसः। 'तपस्सहस्राभ्यां विनीनी' 'अण्च' इति मत्वर्थीयोऽण् प्रत्ययः। तापसशब्दश्च तापसत्ववति वर्तते। लक्ष्यलक्षणभावस्तृतीयार्थः। तदाह—जटाज्ञाप्येति। तदाह—संपूर्वस्य संपूर्वस्य ज्ञाधातोरनुकरणात् षष्ठ्येकवचनं—'संज्ञ' इति।

**कर्मणा यमभिप्रैति स सम्प्रदानम्** ।१।४।३२। दानस्य[1] कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः ॥ **चतुर्थी सम्प्रदाने** ।२।३।१३। अनुक्ते । विप्राय गां ददाति । **क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्**[2] । पत्ये[3] शेते ॥ **परिक्रयणे सम्प्रदानमन्यतरस्याम्** ।१।४।४४। नियतकालं[4] भृत्या स्वीकरणं-परिक्रयणं, तस्मिन्साधकतमं कारकं सम्प्रदानं वा । शतेन शताय वा परिक्रीतः ॥ ❀ **तादर्थ्ये[5] चतुर्थी वाच्या** । मुक्तये[6] हरिं भजति ॥ **उत्पातेन[7] ज्ञापिते च** । वातेन[8] कपिला विद्युत् ॥ **नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च** ।२।३।१६। एभिर्योगे चतुर्थी स्यात् । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । **अलमिति[9] पर्याप्त्यर्थग्रहणम्** । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । वषडिन्द्राय ।

**ध्रुवमपायेऽपादानम्** ।१।४।२४। अपायो विश्लेषस्तस्मिन्

---

जानातेरिति । द्वितीयापवादोऽयं तृतीयाविकल्पः । **संजानीते इति** । सम्यक् जानीते इत्यर्थः । 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदम् ।

१ कर्मसञ्ज्ञकेन गवादिना यमभिप्रैति = यं भोक्तृत्वेनाध्यवस्यति स सम्प्रदानमित्यर्थः । २ दानक्रियाकर्मोद्देश्यवत् क्रियोद्देश्यमपि सम्प्रदानसञ्ज्ञं स्यादिति यावत् । ३ पतिमुद्दिश्य शेते इत्यर्थः । ४ परिक्रयणे साधकतमं कारकं सत्सम्प्रदानसञ्ज्ञं वेत्यर्थः । ५ तस्मै कार्याय इदं तदर्थं = कारणं, तदर्थस्य भावः—तादर्थ्यम् । ब्राह्मणादित्वात्ष्यञ् । उपकार्योपकारकभावसम्बन्धे-उपकार्याच्चतुर्थीति तदर्थः । ६ मुक्त्यर्थमित्यर्थः । ७ आकस्मिकः प्राणिनां शुभाशुभसूचको भूतविकारविशेष उत्पातः । तेन सूचितेऽर्थे विद्यमानाच्चतुर्थीत्यर्थः । ८ वाताय = वातस्य ज्ञापिका । ९ वार्त्तिकमेतत् ।

साध्ये ध्रुवमवधिभूतमपादानम् ॥ **अपादाने पञ्चमी** ।२।३।२८। ग्रामादायाति । धावतोऽश्वात्पतति । इत्यादि ॥ **जनिकर्तुः प्रकृतिः** ।१।४।३०। जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते ॥ * **ल्यब्लोपे कर्मण्यधिकरणे च** । प्रासादात्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः ।

**विभाषा गुणेऽस्त्रियाम्** ।२।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । गुणे किम् ? धनेन कुलम् । अस्त्रियां किम् ? बुद्ध्या मुक्तः । विभाषेति योगविभागादगुणे स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ॥

**पृथग्विनानानाभिस्तृतीयान्यतरस्याम्** ।२।३।३२। एभिर्योगे तृतीया स्यात् पञ्चमीद्वितीये च । पृथग् ग्रामेण ग्रामाद् ग्रामं वा । एवं विना नाना ॥ **अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते** ।२।३।२९। अन्य इत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो भिन्न इतरो वा कृष्णात् । आराद्वनात् । ऋते कृष्णात् । पूर्वो ग्रामात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन सम्प्रति देशकालवृत्तिना योगेऽपि भवति । चैत्रात्पूर्वः फाल्गुनः । प्राक्

---

१ 'ध्रुव स्थैर्ये' कुटादिः । पचाद्यच् । विश्लेषः = विभागः । 'ध्रुव'मित्यस्य विवरणम्–'अवधिभूत'मिति । २ जननं जनिः = उत्पत्तिः । जनेः कर्त्तेति शेषषष्ठ्या समासः । तृजकाभ्यां कर्त्तरीति निषेधस्तु कारकषष्ठ्या एव । ३ प्रकृतिः = हेतुः । ४ ल्यबन्तस्य लोपे = अप्रयोगे सति गम्यमानल्यबन्तार्थं प्रति कर्मणः, अधिकरणाच्च पञ्चमीत्यर्थः ।

प्रत्यग्वा ग्रामात् । **आच्**—दक्षिणा ग्रामात् । **आहि**—दक्षिणाहि ग्रामात् ॥ **अपपरी वर्जने** ।१।४।८८। एतौ वर्जनार्थे कर्मप्रवचनीयसंज्ञौ स्तः ॥ **आङ् मर्यादावचने** ।१।४।८९। आङ् मर्यादायामुक्तसंज्ञः[1] । वचनग्रहणादभिविधावपि ॥ **पञ्चम्यपाङ्परिभिः** ।२।३।१०। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी । अप हरेः परि हरेः संसारः । परिरत्र वर्जने—साहचर्यात्[2] । लक्षणादौ तु—हरिं परि । आमुक्तेः संसारः । आसकलाद्[3] ब्रह्म ॥ **प्रतिः प्रतिनिधिप्रतिदानयोः** ।१।४।९२। एतयोरर्थयोः प्रतिरुक्तसंज्ञः स्यात् ॥ **प्रतिनिधिप्रतिदाने च यस्मात्** ।२।३।११। अत्र कर्मप्रवचनीययोगे पञ्चमी । प्रद्युम्नः कृष्णात्[4] प्रति । तिलेभ्यः प्रतियच्छति[5] माषान् ॥

**षष्ठी शेषे** ।२।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषः[6] तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि

---

१ तेन विना इति मर्यादा । तत्सहितोऽभिविधिः । मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनम्—'आङ्मर्यादाभिविध्योः' इति सूत्रे, तत्र दृष्टो य आङ् स कर्मप्रवचनीयसञ्ज्ञ इत्यर्थः । तत्र च आङ् अभिविधावपि दृश्यते इति वचनग्रहणादभिविधावपीति सूपपन्नम् । २ वर्जनार्थकेनाऽपेन साहचर्यात् । मुक्तिं मर्यादीकृत्य संसारः । मुक्तौ सत्यां निवर्त्तते इति यावत् । ३ सकलमभिव्याप्येत्यर्थः । अभिविधावत्र आङ् । ४ कृष्णस्य प्रतिनिधिः । कृष्णनिरूपितसादृश्यवान् । ५ दत्तस्य प्रतिनिर्यातनं-प्रतिदानम् ।

६ उक्तादन्यः शेषः । प्रथमाद्वितीयादिविधिषु प्रातिपदिकार्थः कर्मादीनि कारकाणि च उक्तानि, एवञ्च एभ्यो व्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषपदार्थ इत्यर्थः ।

सम्बन्धमात्रविवक्षायां षष्ठ्येव । [1]सतां गतम्[2] । सर्पिषो जानीते । मातुः स्मरति । एधो [3]दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः । फलानां तृप्तः ॥ **कर्तृकर्मणोः कृति ।२।३।६५।** कृद्योगे कर्तरि कर्मणि च षष्ठी । कृष्णस्य[4] कृतिः । जगतः[5] कर्ता कृष्णः । **गुणकर्मणि[6] वेष्यते।** नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वा । कृति[7] किम् ? तद्धिते[8] मा भूत् । कृतपूर्वी[9] कटम् ॥ **उभयप्राप्तौ कर्मणि**

---

१ सतां गतमित्यादौ कर्तृतृतीयादिकनिरासायाह—**कर्मादीनामिति** । कर्मत्वकर्तृत्वादीनामपि सम्बन्धत्वेन विवक्षायां षष्ठ्येव न तु कारकविभक्तय इत्यर्थः । २ सत्सम्बन्धि गमनमित्यर्थः ।

३ उदकपर्यायो दकशब्दोऽप्यस्ति । 'भुवनममृतं जीवनीयं दकञ्चे'ति हलायुधः । एधांसि च दकञ्चेति विग्रहः । ४ अत्र कर्त्तरि षष्ठी । ५ अत्र च जगत इति कर्मणि षष्ठी । ६ गौणे कर्मणि षष्ठी वा स्यादित्यर्थः । अकथितञ्चेत्यनेन यस्य गवादेः कर्मसञ्ज्ञा स गौणं कर्म । उदाहरणे स्रुघ्नो गौणं कर्म ।

७ नन्विह कर्तृकर्मभ्यां क्रिया आक्षिप्यते, क्रियावाची च धातुरेव । धातोश्च द्विविधा एव प्रत्ययाः—कृतस्तिङश्च । तत्र कटं करोतीत्यादौ तिङो योगे न लोकेति निषेधान्न षष्ठी, ततश्च परिशेषात्कृद्योगे एवानेन षष्ठी भविष्यतीति किं कृद्ग्रहणेनेति प्रश्नः । कृतपूर्वी कटमित्यत्र करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्यास्तीति ततोऽपि षष्ठी स्यात् । अतः कृद्ग्रहणम् । तथा च तद्धिताधिक्ये षष्ठी न भवतीत्यर्थः । ८ **तद्धिते इति** । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च माभूदित्यर्थः ।

९ कृतपूर्वीत्यत्र च सकर्मककृधात्वादिप्रकृतिकभावक्तान्तस्य ईदृशतद्धितवृत्तिमात्रविषयतया तादृशतद्धितनिर्मुक्तस्य केवलस्य भावक्तान्तस्य कृतेत्यस्य क्वाप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकतया तत्र न षष्ठी । कृद्ग्रहणात्—कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोरेवेह ग्रहणात् । कृतपूर्वी कटमित्यत्र चाऽतथात्वमिति न दोष इतितत्त्वम् ।

।२।३।६६। उभयोः[1] प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी । आश्चर्यो[2] गवां दोहोऽगोपेन ॥ **कृत्यानां कर्तरि वा** ।२।३।७१। षष्ठी[3] । मया मम वा सेव्यो हरिः ॥ **क्तस्य च वर्तमाने** ।२।३।६७। वर्तमानार्थस्य क्तस्य योगे षष्ठी । न लोकेति वक्ष्यमाणनिषेधस्याऽपवादः । राज्ञां मतः[4] बुद्धः पूजितो वा ॥ **अधिकरणवाचिनश्च** ।२।३।६८। क्तस्य योगे षष्ठी । इदमेषामासितम्[5] । इदमेषां शयितम् ॥

**न लोकाव्ययनिष्ठाखलर्थतृनाम्** ।२।३।६९। एषां योगे षष्ठी न । **लादेशः**[6]—कुर्वन् कुर्वाणः सृष्टिं हरिः । **उः**—हरिं दिदृक्षुः[7], अलङ्करिष्णुर्वा[8] । **उक** । दैत्यान् घातुको[9] हरिः । ***कमेरनिषेधः** । लक्ष्म्याः कामुकः । **अव्ययम्**—जगत्सृष्ट्वा[10] । **निष्ठा**-दैत्यान् हतवान् विष्णुः । विष्णुना हता दैत्याः । **खलर्थः**—ईषत्करः प्रपञ्चो हरिणा । **तृन्निति** प्रत्याहारः, शतृशानचाविति तृशब्दादारभ्य तृनो नकारात् । **शानन्**[11]—सोमं पवमानः । **चानश्**—

१ उभयोः = कर्तृकर्मणोः । २ अत्र गवामिति कर्मण्येव षष्ठी भवति न तु अगोपेनेत्यत्र कर्त्तुरपि षष्ठी भवतीत्याशयः । ३ कृत्यसञ्ज्ञकप्रत्यययोगे कर्त्तरि षष्ठी वा स्यादित्यर्थः । ४ मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः ।

५ आस्यतेऽस्मिन्निति आसितं = स्थानम् । शय्यतेऽत्रेति शयितं = शयनस्थानम् । क्तोऽधिकरणे च ध्रौव्येति अधिकरणे क्तः । ६ लपदेन लादेशग्रहणम् । उदाहरणे शतृशानचौ लडादेशौ । ७ सनाशंसेति उः । ८ अलंकृञिति इष्णुच्प्रत्ययः । ९ लषपतपदेत्यादिना उकञ् । १० 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वम् । ११ 'पूङ्यजोः शानन्' इति शानन् ।

आत्मानं मण्डयमानः[1] । शतृ—वेदमधीयन्[2] । तृन्—कर्ता लोकान् । ***द्विषः शतुर्वा** । मुरस्य मुरं वा द्विषन्[3] । सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः[3] । शेषे षष्ठी तु स्यादेव[4] । ब्राह्मणस्य कुर्वन् । नरकस्य जिष्णुः । **अकेनोर्भविष्यदाधमर्ण्ययोः** ।२।३।७०। भविष्यत्यकस्य[5] भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न । सतः[6] पालकोऽवतरति । व्रजं गामी[7] । शतं दायी । ***निमित्तपर्यायप्रयोगे सर्वासां विभक्तीनां प्रायदर्शनम्** । किंनिमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं किं कारणं, को हेतुः किं प्रयोजनमित्यादि । प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि ॥ **षष्ठ्यतसर्थप्रत्ययेन**[8] ।२।३।३०। ग्रामस्य दक्षिणतः । पुरः पुरस्तात् । उपरि उपरिष्टात् ॥ **एनपा द्वितीया**[9] ।२।३।३१। एनपेति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं ग्रामस्य वा । एवमुत्तरेण ॥ **दूरान्ति-**

---

१ 'मडि भूषायाम्' । 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्ययः । २ 'इङ्धार्योः शत्रकृच्छ्रिणि' इति शतृप्रत्ययः ।

३ 'द्विष अप्रीतौ' इत्यस्माद्विहितो यः—'द्विषः शतुर्वा' इति शतृप्रत्ययः तद्योगे षष्ठी वा स्यादित्यर्थः । ४ अनन्तरस्येति न्यायात् । शाब्दबोधे वैलक्षण्यमस्तीत्याशयः । ५ आधमर्ण्येऽकस्याऽसम्भवादाह—भविष्यत्यकस्येति ।

६ सत इति शत्रन्तम् । ७ 'आवश्यकाधमर्ण्ययोः' इत्यावश्यके णिनिः । 'भविष्यति गम्यादयः' इत्युक्तेरयं भविष्यदर्थकः । ८ 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः—( अस्तातिप्रभृतय पञ्च प्रत्ययाः ) तदन्तेन योगे षष्ठी स्यात् । ९ एनबन्तेन योगे द्वितीया स्यादित्यर्थः । उदाहरणे एनबन्यतरस्यामित्यादिना एनप् ।

**कार्थैः षष्ठ्यन्यतरस्याम्** ।२।३।३४। एतैर्योगे षष्ठी स्यात्, पञ्चमी च। दूरं निकटं वा ग्रामस्य ग्रामाद्वा ॥ **दिवस्तदर्थस्य**[1] ।२।३।५८। द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी। शतस्य दीव्यति। तदर्थस्य किम्? ब्राह्मणं दीव्यति। स्तौतीत्यर्थः ॥ **विभाषोपसर्गे** ।२।३।५९। शतस्य शतं वा प्रतिदीव्यति ॥

**आधारोऽधिकरणम्**[2] ।१।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् ॥ **सप्तम्यधिकरणे च** ।२।३।३६। चाद्दूरान्तिकार्थेभ्यः। औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा। कटे[3] आस्ते। स्थाल्यां पचति। मोक्षे[4] इच्छास्ति। सर्वस्मिन् आत्मास्ति। वनस्य दूरेऽन्तिके वा। ***क्तस्येन्विषयस्य**[5] **कर्मण्युपसंख्यानम्**। अधीती व्याकरणे।

१ तच्छब्देन व्यवहृपणौ परामृश्येते। तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे व्यवहृपणोः समर्थयोरित्यत्र गृहीतावित्याशयेनाह–द्यूतेति।

२ आध्रियतेऽस्मिन्नित्याधारः। स च आधारः कस्येत्याकाङ्क्षायां कारकाधिकारात् क्रियाया इति लभ्यते। इयञ्च सञ्ज्ञा साक्षात्क्रियाधारयोर्न सम्भवति, पराभ्यां कर्तृकर्मसञ्ज्ञाभ्यां बाधितत्वादतो व्याचष्टे–कर्तृकर्मद्वारेति। एवञ्च भूतले घट इत्यादावन्ततोऽस्तिक्रियाया अध्याहारो बोध्यः। ३ देवदत्तादिकर्तृद्वारा आसनादिक्रियाधारत्वात्कटस्याधिकरणत्वम्। स्थाल्यां पचतीत्यत्र च ओदनरूपकर्मद्वारा पाकक्रियाधारतया स्थाल्या अधिकरणत्वमिति विवेकः।

४ वैषयिकाधारमुदाहारति–मोक्षे इति। अधीतमनेनेत्यर्थे इष्टादिभ्यश्चेति कर्त्तरि इनिः। ५ **इन्** = इन्नन्तः शब्[illegible]यः = वर्त्तनभूमिर्यस्य [illegible] तस्य योगे

साध्वसाधुप्रयोगे च । साधुः कृष्णो मातरि । असाधुर्मातुले ।
*निमित्तात्कर्मयोगे[1] ।

'चर्मणि[2] द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि[3] पुष्कलको हतः ॥'

यस्य च भावेन भावलक्षणम् ।२।३।३७। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी । गोषु दुह्यमानासु गतः ॥ षष्ठी चानादरे ।२।३।३८। अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ[4] स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ॥ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।२।३।३९। एभिर्योगे षष्ठीसप्तम्यौ स्तः । गवां गोषु वा स्वामी[5] ॥ आयुक्तकुशलाभ्यां चाऽऽसेवायाम् ।२।३।४०। आभ्यां योगे षष्ठीसप्तम्यौ स्तः । आयुक्तो—व्यापारितः । आयुक्तः कुशलो वा हरिपूजने हरिपूजनस्य वा । आसेवायां किम् ? आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ॥

यतश्च निर्धारणम् ।२।३।४१। जातिगुणक्रियासंज्ञाभिः

---

१ निमित्तवाचकात्प्रवृत्तिप्रयोजनवाचकात्सप्तमी स्यात्, तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योगे सतीत्यर्थः । योगः—संयोगसमवायात्मकः । २ चर्मद्वीप्यादेः समवायः सम्बन्धः, दन्तकोशादेश्च संयोगः । चर्मादिनिमित्तं द्वीप्यादिकं हन्तीत्यर्थः । ३ सीमा—अण्डकोशः । 'सीमाऽऽघाटस्थितिक्षेत्रेष्वण्डकोशेषु च' इति मेदिनी ।' 'पुष्कलको गन्धमृगे क्षपणे कीलकेऽपि चे'ति विश्वः । ४ षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनम् । ५ गोसम्बन्धी स्वामीतिबोधः ।

समुदायादेकदेशस्य पृथक्करणं यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां नृषु वा ब्राह्मणः श्रेष्ठः। गवां गोषु वा कृष्णा गौर्बहुक्षीरा। गच्छतां गच्छत्सु वा धावन् शीघ्रः। छात्राणां छात्रेषु वा मैत्रः पटुः॥ **पञ्चमी विभक्ते** ।२।३।४२। विभागो–विभक्तम्। निर्धार्यमाणस्य यत्र भेद[1] एव तत्र पञ्चमी। माथुराः पाटलिपुत्रेभ्य आढ्यतराः[2]॥ **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** ।२।३।४३। मातरि साधुर्निपुणो वा। अर्चायां किम्? निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्॥ ***अप्रत्यादिभिरिति वक्तव्यम्**। साधुर्निपुणो वा मातरं प्रति पर्यनु वा॥ **अधिरीश्वरे** ।१।४।९७। स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयः॥ **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी** ।२।३।९। अत्र कर्मप्रवचनीययुक्ते सप्तमी। उपपरार्धे हरेर्गुणाः। परार्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी। अधिभुवि रामः। अधिरामे भूः॥ **इति विभक्त्यर्थाः**॥

## अथ समासप्रकरणम्।

समासः **पञ्चधा**। तत्र समसनं[3] समासः। स[4] च विशेष-

१ भेद एव भवेन्न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः।

२ नह्यत्र निर्धारणावधेर्निर्धार्यमाणस्य च 'गवां कृष्णा बहुक्षीरे'त्यादाविव सामान्यविशेषभावोऽस्ति, किन्तु शब्दोपात्तयोर्धर्मयोर्विरोध एव।

❀ इति कारकप्रकरणम् ❀।

३ सङ्क्षेपः। ४ स च = समासश्च। विशेषेति। ५ तत्पुरुषाव्ययीभावादिविशेषसञ्ज्ञारहितः।

संज्ञाविनिर्मुक्तः केवलसमासः **प्रथमः**। प्रायेण[1] पूर्वपदार्थप्रधानोऽव्ययीभावो **द्वितीयः**। प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्**तृतीयः**। तत्पुरुषभेदः कर्मधारयः। कर्मधारयभेदो द्विगुः। प्रायेणान्यपदार्थप्रधानो[3] बहुव्रीहिश्चतुर्थः। प्रायेणोभयपदार्थप्रधानो[4] द्वन्द्वः **पञ्चमः**॥ **समर्थः पदविधिः** ।२।१।१। पदसम्बन्धी यो विधिः स समर्थाश्रितो[5] बोध्यः॥ **प्राक्कडारात्समासः** ।२।१।३। 'कडाराः कर्मधारये' इत्यतः प्राक् समास इत्यधिक्रियते॥ **सह सुपा** ।२।१।४। सुप् सुपा सह वा समस्यते। समासत्वात्प्रातिपदिकत्वे सुपो लुक्[6]। परार्थाभिधानं **वृत्तिः**। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः **पञ्च वृत्तयः**। वृत्त्यर्थावबोधकं वाक्यं **विग्रहः**। स[7] च लौकिकोऽलौकिकश्च द्विधा। तत्र 'पूर्वं भूतः' इति लौकिकः[8]। 'पूर्व अम् भूत सु' इत्यलौकिकः[9]। भूतपूर्वः।

---

१ उन्मत्तगङ्गमित्यादावव्ययीभावेऽपि पूर्वपदार्थप्राधान्याभावादुक्त—प्रायेणेति। २ अतिमालो निष्कौशाम्बिरित्यादावुत्तरपदार्थप्राधान्यविरहादुक्तं-प्रायेणेति। ३ 'द्वित्राः' इत्यादौ व्यभिचारात्प्रायेणेति। ४ दन्तोष्ठमित्यादौ व्यभिचारात्-प्रायेणेत्युपात्तम्। ५ सामर्थ्यञ्च द्विविधं—व्यपेक्षालक्षणम्, एकार्थीभावरूपञ्च। स्वार्थे पर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परं सम्बन्धः सा व्यपेक्षा। यथा राज्ञः पुरुष इत्यादौ वाक्ये। पृथगर्थानां पदानामेकार्थविषयकबोधजनकत्वञ्च एकार्थीभावसामर्थ्यम्। तच्च राजपुरुषादौ समासे एव। ६ 'सुपो धातुप्रातिपदिकयोः' इत्यनेन सुपो लुक्। ७ स च = विग्रहश्च।

८ लोके प्रयोगार्हो लौकिकः। ९ लोके प्रयोगानर्होऽलौकिकः—शास्त्रमात्रप्रक्रियोपयोगी। ॐ इति केवलसमासः।ॐ

भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः ॥ *इवेन समासो विभक्त्यलोपश्च । वागर्थौ इव वागर्थाविव । इति केवलसमासः ।

## अथ अव्ययीभावः ।

**अव्ययीभावः ।२।१।५।** अधिकारोऽयं प्राक्तत्पुरुषात् । **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ।२।१।६।** विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन नित्यं समस्यते । प्रायेणाऽविग्रहो[1] नित्यसमासः । प्रायेणाऽस्वपदविग्रहो[2] वा । **विभक्तौ**–'हरि ङि अधि' इति स्थिते ॥ **प्रथमानिर्दिष्टं समास उपसर्जनम् ।१।२।४३।** समासशास्त्रे[3] प्रथमानिर्दिष्टमुपसर्जनं स्यात् ॥ **उपसर्जनं पूर्वम् ।२।२।३०।** समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक्[4] । एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥ **अव्ययीभावश्च ।२।४।१८।** नपुंसकं स्यात् । गाः पातीति गोपाः, तस्मिन्निति–

---

१ लौकिकविग्रहरहितः। तेन अलौकिकविग्रहस्य नित्यसमासेऽपि सत्त्वेऽपि न दोषः । २ वृत्तिघटकयावत्पदाघटितलौकिकविग्रहवान् नित्यसमासः, यथा अधिहरीति । अत्र 'हरौ' इति अस्वपदविग्रहे अधीत्यस्य न प्रयोगः ।

३ कृष्णश्रितादौ समासे प्रथमानिर्दिष्टस्य ( प्रथमान्तस्य ) श्रितादेरुपसर्जनत्वापत्त्या पूर्वनिपातप्रसङ्गोऽत आह–**समासशास्त्र** इति । एवञ्च सूत्रे समासपदं समासविधायकशास्त्रे लाक्षणिकमित्याशयः । समासविधायके च द्वितीयाश्रितेत्यादौ द्वितीयाद्यन्तं प्रथमानिर्दिष्टमिति सर्वं सूपपन्नम् ।
४ सुपो धात्विति सूत्रेण ङिविभक्तेर्लुगित्यर्थः ।

अधिगोपम् ॥ **नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।२।४।८३।** अदन्तादव्ययीभावात्सुपो न लुक् किन्तु तस्य पञ्चमीं विना अमादेशः । कृष्णस्य समीपम् उपकृष्णम्[1] ॥ **तृतीयासप्तम्योर्बहुलम् ।२।४।८४।** अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलमम्भावः । उपकृष्णेन, उपकृष्णम् । बहुलग्रहणात्—सुमद्रमुन्मत्तगङ्गमित्यादौ नित्यमम्भावः । मद्राणां समृद्धिः[2] सुमद्रम् । यवनानां व्यृद्धिः[3]-दुर्यवनम् । मक्षिकाणामभावो[4] निर्मक्षिकम् । हिमस्यात्ययः[5]-अतिहिमम् । निद्रा संप्रति न युज्यते-अतिनिद्रम् । हरिशब्दस्य प्रकाशः-इतिहरि । विष्णोः पश्चात्-अनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले ।६।३।८१।** सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । काले तु सहपूर्वाह्णम्[6] । ज्येष्ठस्यानुपूर्व्येणेति-अनुज्येष्ठम् । चक्रेण युगपत्-सचक्रम् । सदृशः सख्या-ससखि । क्षत्राणां संपत्तिः[7]—सक्षत्रम् । तृणमप्यपरित्यज्य—सतृणम् । अग्निग्रन्थपर्यन्तमधीते—साग्नि[8] ॥ **यथाऽसादृश्ये ।२।१।७।** असादृश्ये

---

१ उपेत्यव्ययं सामीप्यार्थकमित्यवधेयम् । २ धनधान्यसम्पत्तिः । ३ विगता ऋद्धिः—व्यृद्धिः = अवनतिः । ४ अर्थाभावेऽयं समासः । ५ अत्ययो ध्वंसः । ६ पूर्वाह्णशब्दोऽत्र कालवाचक इति नात्र सहस्य सादेशः । ७ अनुरूप आत्मभावः—सम्पत्तिः । ऋद्धेराधिक्यं समृद्धिरिति विवेकः । ८ अन्तवचनस्येदमुदाहरणम् । अग्निपदेन अग्निहोत्रादिप्रतिपादकग्रन्थोऽत्र विवक्षितः ।

एव यथाशब्दः समस्यते । तेनेह न—यथा हरिस्तथा हरः ॥

**यावदवधारणे** ।२।१।८। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः—यावच्छ्लोकम्[1] ॥ **सुप्प्रतिना मात्रार्थे**[2] ।२।१।९। शाकस्य लेशः—शाकप्रति ॥ **विभाषा** ।२।१।११। अधिकारोऽयम् ॥ **अपपरिबहिरञ्चवः पञ्चम्या** ।२।१।१२। अपविष्णु संसारः । अप विष्णोः । परिविष्णु । परि विष्णोः । बहिर्वनम् । बहिर्वनात् । प्राग्वनम् । प्राग्वनात् ॥ **तिष्ठद्गुप्रभृतीनि च** ।२।१।१७। एतानि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः ॥ **पारे मध्ये षष्ठ्या वा** ।२।१।१८। पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । एदन्तत्वं चानयो[3]र्निपात्यते । पक्षे षष्ठीतत्पुरुषः । पारेगङ्गम् । गङ्गापारम् । मध्येगङ्गम् । गङ्गामध्यम् । महाविकल्पेन[4] वाक्यमपि । गङ्गाया मध्यं

---

१ 'यावच्छ्लोकम्' इत्यस्य 'अच्युतप्रणामाः' इति शेषः । २ सुबित्यनुवर्त्तमाने पुनः सुब्ग्रहणमव्ययमित्यस्य निवृत्त्यर्थम् । तेन सुबन्तस्य शाकेत्यस्य प्रथमानिर्दिष्टतयो पसर्जनत्वात् पूर्वनिपातः । ३ अनयोः = पारमध्यशब्दयोः । ४ ननु प्रकृते षष्ठीतत्पुरुषापवादेऽव्ययीभावे महाविभाषया विकल्पिते सति पक्षे षष्ठीतत्पुरुषप्रवृत्त्या ( तस्यापि वैकल्पिकतया ) तदभावे च वाक्यस्यापि सम्भवात् त्रैरूप्यस्य स्वतः सिद्धौ वाग्रहणमत्र सूत्रे व्यर्थमिति चेन्न; 'यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्तते' इति ज्ञापनार्थं वाग्रहणस्य चारितार्थ्यात् । तेन पूर्वं कायस्येत्यत्रैकदेशिसमासाभावपक्षे उत्सर्गोऽपि षष्ठीसमासो न भवति, एवं दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण् न भवतीत्यवधेयम् । प्रकृते च वाग्रहणादेव पक्षे षष्ठीसमासो [illegible]

गङ्गायाः पारम् ॥ **संख्या वंश्येन** ।२।१।१९। वंशो द्विधा, विद्यया जन्मना च । तत्र भवो वंश्यः। तद्वाचिना सह संख्या समस्यते । द्वौ[1] मुनी वंश्यौ द्विमुनि । व्याकरणस्य त्रिमुनि[2] । विद्यातद्वताम-भेदविवक्षायान्तु त्रिमुनि व्याकरणम् । एकविंशति भारद्वाजम् ॥ **नदीभिश्च** ।२।१।२०। नदीभिः संख्या वा समस्यते । **समाहारे चायमिष्यते** । पञ्चगङ्गम् । द्वियमुनम् ॥ **अन्यपदार्थे च संज्ञायाम्** ।२।१।२१। अन्यपदार्थे वर्तमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम् । विभाषाधिकारेपि वाक्येन संज्ञानव-गमादिह नित्यसमासः । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् ॥

**तद्धिताः** ।४।१।७६। आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्य-यीभावे शरत्प्रभृतिभ्यः** ।५।४।१०७। शरदादिभ्यष्टच् स्यात्समा-सान्तो अव्ययीभावे। शरदः समीपम्-उपशरदम् । प्रतिविपाशम् । शरद् । विपाश् । अनस् । मनस् । उपानह् । दिव् । हिमवत् । अनडुह् । दिश् । दृश् । विश् । चेतस् । चतुर् । त्यद् । तद् । यत् । कियत् । **जराया जरस् च** । उपजरसम् ॥ **अनश्च** ।५।४।१०८। अन्नन्तादव्ययीभावाट्टच् ॥ **नस्तद्धिते** ।६।४।१४४। नान्तस्य भस्य टेर्लोपस्तद्धिते । उपराजम् । अध्यात्मम् ॥

**नपुंसकादन्यतरस्याम्** ।५।४।१०९। अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टच् वा स्यात् । उपचर्मम् । उपचर्म ॥ **झयः** ।५।४।१११। झयन्तादव्ययीभावाट्टच् वा स्यात् । उपसमित्[3] । उपसमिधम् ॥ **नदीपौर्णमास्याग्रहायणीभ्यः**

---

१ द्वौ = पाणिनिकात्यायनौ । २ व्याकरणस्य पाणिन्यादयस्त्रयो मुनयो वंश्या इत्यर्थः । ३ समिधः समीपम् उपसमिधम् ।

।५।४।११०। वा टच् स्यात् । उपनदम्[1]। यस्येति चेति इलोपः । उपनदि-इत्यादि ॥ **गिरेश्च सेनकस्य** ।५।४।११२। टच् वा स्यात् । उपगिरम् । उपगिरि ॥ **प्रतिपरसमनुभ्योऽक्ष्णः** । टच् स्यात् । अक्ष्णोऽभिमुखं प्रत्यक्षम् । अक्ष्णः परं परोक्षम् । अत एव समासः । परोक्षे लिडिति निपातनात्परस्यौकार इत्यादि ॥ इत्यव्ययीभावः ॥

## अथ तत्पुरुषः ॥

**तत्पुरुषः** ।२।१।२२। अधिकारोऽयं प्राग्बहुव्रीहेः[2] ॥ **द्विगुश्च** ।२।१।२३। तत्पुरुषसंज्ञः[3] ॥ **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** ।२।१।२४। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते । कृष्णं श्रितः । कृष्णश्रितः[4] । दुःखमतीतो दुःखातीतः । कूपपतितः । ग्रामगतः । तुहिनात्यस्तः[5] । सुखप्राप्तः । दुःखापन्नः । **तृतीया तत्कृता**[6]-

१ नद्याः समीपम् उपनदम् । उपनदि ।

* इत्यव्ययीभावसमासप्रकरणम् *

२ 'शेषो बहुव्रीहि'रिति यावत् । ३ द्विगुश्च तत्पुरुषसञ्ज्ञ इत्यर्थः । द्विगोस्तत्पुरुषसञ्ज्ञायाः फलन्तु—पञ्चराजमिति द्विगौ 'राजाहःसखिभ्यः' इति टच् । ४ समासशास्त्रे द्वितीयान्तस्य कृष्णादेः प्रथमानिर्दिष्टत्वात्कृष्णशब्दस्य पूर्वनिपातः । ५ तुहिनमत्यस्तः = विनाशितवान्—तुहिनात्यस्तः = सूर्यः । कर्तरि क्तः । ६ तत्कृतेति लुप्ततृतीयाकम् । तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते, तत्कृतेत्येतच्च गुणद्वारा गुणवचनेऽन्वेति । ततश्च तृतीयान्तं—तृतीयान्तार्थकृतो यो गुणस्तद्वाचिना सह समस्यते इत्येकोऽर्थः । अर्थशब्देन च तृतीयान्तं समस्यते इत्यपरोऽर्थः । अत्र गुणेनेत्येव सिद्धे वचनग्रहणाद्गुणोपसर्जनद्रव्यवाचिनो ग्रहणमित्यवधेयम् ।

**ऽर्थेन गुणवचनेन** ।२।१।३०। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनाऽर्थेन च सह प्राग्वत् । शङ्कुलया खण्डः-शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम्? अक्ष्णा[1] काणः ॥ **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** ।२।१।३१। तृतीयान्तमेतैः प्राग्वत् । मासपूर्वः[2] । मातृसदृशः । पितृसमः । **ऊनार्थे**—माषोनं कार्षापणम् । माषविकलम् । वाक्कलहः । आचारनिपुणः । गुणमिश्रः । आचारश्लक्ष्णः ॥ **अवरस्योपसंख्यानम्** । मासावरः ॥ **अन्नेन व्यञ्जनम्** ।२।१।३४। संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह प्राग्वत् । दध्ना उपसिक्तमोदनं दध्योदनम् ॥ **भक्ष्येण मिश्रीकरणम्** ।२।१।३५। भक्ष्यवाचकेन मिश्रीकरणवाचकं समस्यते । गुडेन मिश्रा धाना गुडधानाः ॥ **कर्तृकरणे[3] कृता बहुलम्** ।२।१।३२। कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखभिन्नः ॥ **कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्** । नखनिर्भिन्नः ॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** ।२।१।३६। चतुर्थ्यन्तार्थाय यत्तद्वाचिनार्थादिभिश्च चतुर्थ्यन्तं प्राग्वत् । यूपाय दारु यूपदारु[4] । तदर्थेन प्रकृतिविकृतिभावे एवेष्टिः । बलिरक्षित-

---

१ नह्यक्ष्णा काणत्वं किन्तु रोगादिना । २ मासात्प्रागुत्पन्न इत्यर्थः । ३ कर्ता च करणञ्च अनयोः समाहारः—कर्तृकरणं, तस्मिन् 'कर्तृकरणे' इति विग्रहः । ४ चतुर्थ्यन्तं यूपायेति, तदर्थः यूपः, तदर्थं यत्—दारु, तद्वाचिना दारुशब्देन यूपायेति चतुर्थ्यन्तं समस्यते इति समन्वयः ।

ग्रहणाज्ज्ञापकात्। तेनेह न[1]—रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीतत्पुरुषाः॥ **अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्।** द्विजायाऽयं द्विजार्थः सूपः। द्विजार्था यवागूः। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्॥ **पञ्चमी भयेन[2] ।२।१।३७।** चोराद्भयं चोरभयम्॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।२।१।३९। पञ्चम्याः स्तोकादिभ्यः ।६।३।२।** अलुगुत्तरपदे। स्तोकान्मुक्तः। अन्तिकादागतः। अभ्याशादागतः। कृच्छ्रादागतः॥ **षष्ठी ।२।२।८।** सुबन्तेन प्राग्वत्। राज्ञः पुरुषः राजपुरुषः॥ **याजकादिभिश्च ।२।२।९।** षष्ठ्यन्तं समस्यते। वक्ष्यमाणस्यापवादः[3]। ब्राह्मणयाजकः। देवपूजकः। याजक, पूजक, परिचारक, परिवेषक, स्नातक, अध्यापक, उत्सादक, उद्वर्तक, होतृ, पोतृ, भर्तृ, रथगणक, पत्तिगणक,—इति **याजकादिः। गुणात्तरेण तरलोपश्च।** तरबन्तं यद् गुणवाचि तेन समासः। सर्वेषां श्वेततरः सर्वश्वेतः। सर्वेषां महत्तरः—सर्वमहान्॥ **न निर्धारणे ।२।२।१०।** षष्ठी न[5] समस्यते। नृणां[6] द्विजः श्रेष्ठः॥ **पूरणगुण-**

---

१ रन्धनस्थाल्योः प्रकृतिविकृतिभावाभावात्। २ पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुष इत्यर्थः। ३ 'तृजकाभ्यां कर्तरि'-त्यस्य प्रतिप्रसवोऽयमित्यर्थः। ४ तरबन्तं यद्गुणवाचि तेन सह षष्ठ्यन्तस्य समासः, तरप्प्रत्ययलोपश्चेति वक्तव्यमित्यर्थः। 'न निर्धारणे' इति 'पूरणगुण' इति निषेधस्य चाऽपवादः। ५ निर्धारणे या षष्ठी सा न समस्यते इत्यर्थः। ६ अत्र 'यतश्च निर्धारणम्' इति षष्ठी।

**सुहितार्थसदव्ययतव्यसमानाधिकरणेन ।२।२।११।** पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । **पूरणे**-सतां षष्ठः । **गुणे**-काकस्य कार्ष्ण्यम् । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहितः । **सत्** । द्विजस्य कुर्वन्कुर्वाणो वा । ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्य्यात् कृदव्ययमेव गृह्यते । तेन तदुपरीत्यादि सिद्धम् । ब्राह्मणस्य कर्तव्यम् । तक्षकस्य सर्पस्य ॥ **क्तेन च पूजायाम् ।२।२।१२।** 'मतिबुद्धि'सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । राज्ञां मतो बुद्धः पूजितो वा ॥ **अधिकरणवाचिना च ।२।२।१३।** क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा । **कर्मणि च ।२।२।१४।** 'उभयप्राप्तौ कर्मणि' इति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ॥ **तृजकाभ्यां कर्तरि ।२।३।१५।** कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता ।

---

१ 'सत्' पदेन शतृशानचौ ग्राह्यौ । 'तौ सत्' इत्युक्तेः । २ षण्णां पूरणः षष्ठः । 'तस्य पूरणे डट्' इति डट्ः 'षट्कतिकतिपयचतुरां थुक्' इति थुगागमे थस्य ठत्वे च रूपमिदम् । ३ अव्यये उदाहरति-ब्राह्मणस्येति । ४ सतस्तव्यतश्च कृत्प्रत्ययतयः तत्साहचर्यादित्यर्थः । ५ उपरीत्यस्य कृदव्ययत्वाभावेन तस्योपरि तदुपरीत्येवं षष्ठीसमासो भवत्येवेत्याशयः ।

६ अत्र सूत्रे गुणेन षष्ठीसमासस्य निषेधोऽनित्यस्तदशिष्यं सञ्ज्ञाप्रमाणत्वात्' इति निर्देशात् । तेनार्थगौरवं बुद्धिमान्द्यं शरीरकार्श्यं वाक्पाटवमित्यादि सिध्यति । ७ 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणेऽत्र क्तः । आस्यते अत्रेति आसितम् = आसनस्थानम् । गम्यतेऽत्रेति गतं = गमनस्थानम् । भुज्यतेऽत्रेति भुक्तं = भोजनाधिकरणम् ।

८ 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी सर्वत्र ।

ओदनस्य पाचकः ॥ **कर्तरि च २।२।१६।** कर्तरि षष्ठ्या अकेन न समासः । भवतः शायिका ॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१।** अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासाऽपवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकदेशिना किम् ? पूर्वं नाभेः कायस्य । एकाधिकरणे किम् ? पूर्वश्छात्राणाम् ॥ **अर्धं नपुंसकम् ।२।२।२।** समांशवाच्यर्धशब्दो नित्यं क्लीबे स प्राग्वत् । अर्धं पिप्पल्या अर्धपिप्पली ॥ **एकविभक्तावषष्ठ्यन्तवचनमित्युपसर्जनसंज्ञाबाधाद्ध्रस्वो** न । क्लीबे किम् ? ग्रामार्धः । द्रव्यैक्य एव । अर्धं पिप्पलीनाम् ॥

१ शयनं शायिका । 'पर्यायाऽर्हणोत्पत्तिषु ण्वुच्' इति भावे ण्वुच् । भवत इति च–'कर्त्तरि कर्मणोः कृति' इत्यनेन कर्त्तरि षष्ठी । २ 'एकदेशिना' इत्यस्यार्थमाह—**अवयविनेति** । ३ 'एकाधिकरणे' इत्यस्यार्थमाह—**एकत्वेत्यादि** । ४ नाभेर्यः पूर्वो भागः स कायस्य–अवयव इत्यर्थः । अत्र नाभेरितिदिग्योगे पञ्चमी । तेनात्र पूर्वस्य भागस्य नाभिरवधिरेव नावयवी । कायस्यावयवित्वेन तेन सह पूर्वमित्यस्य समासस्तु इष्ट एवेत्यवधेयम् ।

५ 'पुंस्यर्धोऽर्द्ध समेंऽशके' इत्यमरः । सः = समांशवाची नित्यंनपुंसकोऽर्द्धशब्दः । प्राग्वत्–इत्यस्य अवयविना सह समस्यते एकत्वसङ्ख्याविशिष्टश्चेदवयवीत्यर्थः । ६ पिप्पल्यादिशब्दानामत्र समासे विग्रहे नित्यं षष्ठ्यन्ततया 'एकविभक्ति चाऽपूर्वनिपाते' इति सूत्रेण प्राप्तस्योपसर्जनत्वस्य निषेधायाह—**एकेति** । 'एकविभक्ति चाऽपूर्वनिपाते' इति सूत्रेण षष्ठ्यन्तस्य नियतविभक्तित्वेऽप्युपसर्जनसञ्ज्ञा न भवतीतिवक्तव्यमितिवार्त्तिकार्थः । ह्रस्वो न = पिप्पलीशब्दान्तेकारस्य 'गोस्त्रियोः' इति ह्रस्वो न । ७ ग्रामार्धः = ग्रामस्यैकदेशः । ८ एकत्वसङ्ख्याविशिष्टेऽवयविन्येवायं समासो भवतीत्यर्थः । ९ अत्रावयविनां बहुत्वादर्धं नपुंसकमिति समासो न भवतीत्याशयः ।

**द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्** ।२।२।३। एतान्येकदेशिना सह प्राग्वद्वा । द्वितीयं भिक्षायाः द्वितीयभिक्षा । एकदेशिना किम् ? द्वितीयं भिक्षाया भिक्षुकस्य[1] । अन्यतरस्यांग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ॥

**प्राप्तापन्ने च द्वितीयया** ।२।२।४। पक्षे द्वितीया श्रितेतिसमासः । प्राप्तो जीवनं प्राप्तजीवनः । जीवनप्राप्तः । आपन्नजीवनः । जीवनापन्नः । इह सूत्रे 'द्वितीयया अ' इति छित्त्वा अकारोऽपि विधीयते । तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका । आपन्नजीविका ॥ **कालाः परिमाणिना**[2] ।२।२।५। परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य यस्य स मासजातः ॥

**सप्तमी शौण्डैः** ।२।१।४०। सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः-अक्षशौण्डः[3] । शौण्ड, धूर्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधिप, पटु, पण्डित, कुशल, चपल, निपुण इति **शौण्डादिः** । द्वितीया तृतीयेत्यादियोगविभागादन्यत्रापि द्वितीयादीनां प्रयोगवशात्समासो ज्ञेयः ॥

---

१ भिक्षुकस्येति । अत्र भिक्षुकशब्देन सह द्वितीयशब्दस्य न समासः । भिक्षुकेण द्वितीयस्याऽवयवावयविभावाभावात् द्वितीयाशब्देन भिक्षाशब्दस्य समासस्तु भवत्येवेत्याशयः । २ परिमाणं परिच्छेदकतयाऽस्यास्तीति परिमाणी =परिच्छेद्यः । मासजात इत्यत्र च जातो बालकः परिच्छेद्यः, मासः—परिमाणं = परिच्छेदकः । साक्षात्क्रियापरिच्छेदकोऽपि कालः परम्परया जातबालादिपरिच्छेदको भवत्येवेत्याशयः । ३ शौण्डः = प्रवीणः ।

**दिक्संख्ये संज्ञायाम्** ।२।१।५०। 'विशेषणं विशेष्येण बहुल'-मित्येव सिद्धे संज्ञायामेवेति नियमार्थं सूत्रम्[1] । पूर्वेषुकामशमी[2] । सप्तर्षयः । तेनेह न—उत्तरा वृक्षाः[3] । पञ्च ब्राह्मणाः । **तद्धितार्थोत्तरपदसमाहारे च** ।२।१।५१। तद्धितार्थे[4] विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् । पूर्वस्यां शालायां भवः । पूर्वाशाला इति समासे जाते—**सर्वनाम्नो वृत्तिमात्रे पुंवत्** । **दिक्पूर्वपदादसंज्ञायां ञः** ।४।२।१०७। अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥ **तद्धितेष्वचामादेः** ।७।२।११७। ञिति णिति च तद्धिते अचामादेरचो वृद्धिः स्यात् । **यस्येति च** । पौर्वशालः । पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः[5] । तेन शालाशब्दे आकार उदात्तः[6] । पूर्वशालाप्रियः । दिक्षु समाहारो नास्त्यनभिधानात्[7] । **संख्यायास्तद्धितार्थे**—षण्णां मातृणामपत्यं षाण्मातुरः । 'मातुरुत्संख्यासम्भद्रपूर्वायाः' इति वक्ष्यमाणोऽण्[9] । पञ्च[10] गावो धनं यस्येति

१ दिक्सङ्ख्ये सञ्ज्ञायामेव समस्येते तत्पुरुषे इति नियमार्थमिदं सूत्रमित्यर्थः । २ तत्र सञ्ज्ञायामुदाहरति—पूर्व इति । ३ असञ्ज्ञात्वान्नेह समासः । ४ एकाऽपीह सप्तमी विषयभेदाद्भिद्यते ।

५ पूर्वयोः = पूर्वाशालाशब्दयोः । ६ उदात्त इति । समासान्तोदात्तत्वेन लकारोत्तरवर्त्याकार उदात्त इत्यर्थः । असति तु अवान्तरतत्पुरुषे 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यान्न-शालाशब्दान्ताकारस्योदात्तत्वं स्यादित्याशयः । ७ दिक्षु तद्धितार्थोत्तरपदयो-रुदाहृत्य दिक्षु समाहारे विशेषमाह—नास्तीति । ८ 'उदाह्रियते' इति शेषः ।

९ वक्ष्यमाणः = अपत्याधिकारे वक्ष्यमाणोऽपत्यार्थकोऽण् । १० सङ्ख्याया उत्तरपदे उदाहरति—पञ्चेति ।

त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषस्य विकल्पे प्राप्ते—द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । **गोरतद्धितलुकि** ।५।४।९२। गोन्तात्तत्पुरुषाट्टच् स्यात्समासान्तो न तद्धितलुकि । पञ्चगवधनः ॥ **संख्यापूर्वो द्विगुः** ।२।१।५२। तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो[1] द्विगुः ॥ **द्विगुरेकवचनम्** ।२।४।१। द्विग्वर्थः समाहार एकवत्स्यात्[2] ॥ **स नपुंसकम्** ।२।४।१७। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ॥ **विशेषणं विशेष्येण बहुलम्** ।२।१।५७। भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत् । नीलमुत्पलम्[3] । नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्[4]—कृष्णसर्पः । क्वचिन्न[5]—रामो जामदग्न्यः ॥ **अपरस्यार्धे पश्चभावो वक्तव्यः**[6] । अपरश्चासावर्धश्च पश्चार्धः ॥ **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** ।२।१।६१। सद्[7] समस्यन्ते । सद्वैद्यः ॥ **आन्महतः समानाधिकरणजातीययोः** ।६।३।४६। महावैयाकरणः । महाप्रकारो महाजातीयः । **तत्पुरुषः समानाधिकरणः कर्मधारयः** ।१।२।४२।[8] पुंवत्कर्म-

१ संख्यापूर्वकस्तत्पुरुषसमासो द्विगुसञ्ज्ञको भवतीत्यर्थः । २ द्विग्वर्थः समाहार एकार्थप्रतिपादको भवतीत्यर्थः । ३ अत्र नीलं विशेषणम् । उत्पलं विशेष्यम् ।

४ नित्यं = नित्यसमासः । ५ क्वचिन्न = क्वचिन्नैवायं समासः । ६ अपरस्य-पश्चादेशः स्यादर्धशब्दे परे इत्यर्थः । ७ सदादिप्रकृतिकं सुबन्तं पूज्यमानैः सह वा समस्यते इत्यर्थः । ८ समानाधिकरणानां तत्पुरुषः कर्मधारयसञ्ज्ञो भवतीत्यर्थः ।

**धारयजातीयदेशीयेषु** ।६।३।४२। कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरण्यां प्रियादिष्वप्राप्तः[2] पुंवद्भावो विधीयते। महानवमी[3]। कृष्णचतुर्दशी[4]। महाप्रिया[5]। पूज्यमानैः किम्? उत्कृष्टो गौः। पङ्कादुद्धृत[6] इत्यर्थः॥ **उपमानानि सामान्यवचनैः**[7] ।२।१।५५। घनश्यामः॥ **उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे** ।२।१।५६। पुरुषो व्याघ्र इव पुरुषव्याघ्रः। सामान्याप्रयोगे किम्? पुरुषो व्याघ्र इव शूरः[9]॥ **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपश्च**। शाकप्रियः पार्थिवः[10]—शाकपार्थिवः। देवब्राह्मणः[11]॥ **कडाराः कर्मधारये** ।२।२।३८। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः॥ **मयूरव्यंसकादयश्च** ।२।१।७२। एते निपात्यन्ते। मयूरो व्यंसको

---

१ जातीयदेशीयौ प्रत्ययौ। २ स्त्रियाः पुंवद्भाषितपुंस्कात्—' इत्यत्र 'अपूरणीप्रियादिषु' इत्युक्तेरितिभावः। ३ महती चासौ नवमी च महानवमी। ४ कृष्णा चासौ चतुर्दशी च कृष्णचतुर्दशी। ५ महती चासौ प्रिया च महाप्रिया।

६ उत्कृष्टः = बहिर्निःसारितः। ७ उपमानवाचकं घनादिप्रकृतिकं समानाधिकरणं सुबन्तं साधारणधर्मवचनैः श्यामादिभिः सह वा समस्यते इत्यर्थः।

८ उपमेयवाचकं सुबन्तं व्याघ्रादिभिः सह वा समस्यते साधारणधर्मस्य ( तद्वाचकशूरादिशब्दस्य ) अप्रयोगे सतीत्यर्थः। ९ अत्र शूरत्वस्य सामान्यधर्मत्वात्तद्वाचकशब्दस्य प्रयोगे नानेन समास इत्याशयः। १० पृथिव्या ईश्वरः—पार्थिवः। शाकं प्रियं यस्यासौ शाकप्रियः। स चासौ पार्थिवश्च शाकपार्थिवः। ११ देवस्य पूजको देवपूजकः। स चासौ ब्राह्मणश्चेति विग्रहः।

मयूरव्यंसकः। व्यंसको धूर्तः। उदक् च अवाक् च उच्चावचम्[1]। निश्चितं च प्रचितं च निश्चप्रचम्। नास्ति किञ्चन यस्य सोऽकिञ्चनः। **आख्यातमाख्यातेन क्रियासातत्ये**। अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता। पचतभृज्जता। खादतमोदता[2]। नास्ति कुतो भयं यस्य सः—अकुतोभयः। अन्यो राजा[3] राजान्तरम्। चिदेव चिन्मात्रम्। **नञ्** ।२।२।६। सुपा प्राग्वत्॥ **नलोपो नञः** ।६।३।७३। नञो नस्य लोप उत्तरपदे। अब्राह्मणः[4]। **तस्मान्नुडचि** ।६।३।७४। लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुट्। अनश्वः। 'नैकधा[5]'इत्यादौ तु नशब्देन सह सुप्सुपेति समासः।

**कुगतिप्रादयः** ।२।२।१८। एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः[6]॥ **ऊर्यादिच्विडाचश्च** ।१।४।६१। ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः। ऊरीकृत्य[7]। शुक्लीकृत्य[8]। पटपटाकृत्य[9]॥ **कारिकाशब्दस्योप-**

---

१ 'उच्चावचं नैकविधम्' इत्यमरः। २ खादत मोदध्वम् इति सततं यत्राऽभिधीयते सा खादतमोदता। ३ नित्यसमासोऽयमिति सूचयितुमस्वपदविग्रहो दर्शितः। ४ न ब्राह्मणः अब्राह्मणः—इति विग्रहः।

५ नञा सह समासे तु अनेकधेति रूपं भवत्येवेति ध्येयम्। ६ नित्यसमासत्वादत्रास्वपदविग्रहो दर्शितः।

७ गतित्वात्कुगतीति समासे क्त्वो ल्यबादेशः। ८ अशुक्लं शुक्लं सम्पद्यते तथा विधाय शुक्लीकृत्य। अत्र 'अस्य च्वौ' इतीत्त्वम्।

९ अव्यक्तानुकरणादिति डाचि 'डाचि बहुलं द्वे भवतः' इति द्वित्वम्। नित्यमाम्रेडिते डाचीति। तकारपकारयोः पररूपम्।

संख्यानम् । कारिकाकृत्य[1] । **अनुकरणं चानितिपरम्**[2] ।१।४।६२। खाट्कृत्य । अनितिपरं किम् ? खाडितिकृत्वा[3] निरष्ठीवत् ॥ **आदरानादरयोः सदसती** ।१।४।६३। सत्कृत्य । असत्कृत्य ॥ **भूषणेऽलम्** ।१।४।६४। अलंकृत्य । भूषणे किम् ? अलंकृत्वौदनं[4] गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादि-त्रिसूत्री स्वभावात्कृञ्विषया ॥ **अन्तरपरिग्रहे** ।१।४।६५। अन्तर्हत्य । मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् ? अन्तर्हत्वा गतः । हतं परिगृह्य[5] गत इत्यर्थः ॥ **कणेमनसी श्रद्धाप्रतीघाते** ।१।४।६६। कणेहत्य पयः पिबति । मनोहत्य । 'कणे'शब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषाऽतिशये[6] वर्तते । 'मनस्'-शब्दोऽप्यत्रैव ॥ **पुरोऽव्ययम्** ।१।३।६७। पुरस्कृत्य ॥ **अस्तं च** ।१४।६८। अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात् ॥ अस्त-ङ्गत्य ॥ **अच्छ गत्यर्थवदेषु**[7] ।१।४।६९। अव्ययमित्येव । अच्छगत्य । अच्छोद्य । अभिमुखं गत्वा उक्त्वा चेत्यर्थः । अव्ययं किम् ? जलमच्छं[8] गच्छति ॥ **अदोऽनुपदेशे**[9] ।१।४।७०। अदःकृत्याऽदःकृतम् । परं प्रत्युपदेशे प्रत्युदाहरणम्—अदः कृत्वा

---

१ अकारिकां कारिकां सम्पद्यमानां विधाय—कारिकाकृत्य । २ अनिति परमनुकरणं गतिसञ्ज्ञं स्यात् कृञो योगे इत्यर्थः । ३ अत्र खाडित्यस्य गतित्वाभावेन समासाप्रसक्त्या न क्त्वोल्यवादेशः । ४ परिपूर्णमित्यर्थः । ५ आदायेत्यर्थः । ६ अभिलाषाऽतिशये । अतिशयिताभिलाषायाम् । अभिलाषापूर्त्तिपर्यन्तं यथेष्टं पयः पिबतीत्यर्थः । ७ अच्छेत्यव्ययं गत्यर्थवदेषु परतो गतिसञ्ज्ञकमित्यर्थः । ८ अच्छं=स्वच्छम् ( अच्छा ) । ९ अत्र-वस्तुतत्त्वकथनं नोपदेशः । ( वह काम करके वह किया ) ।

अदः कुरु ॥ **तिरोऽन्तर्द्धौ** ।१।४।७१। तिरोभूय ॥ **विभाषा कृञि** ।१।४।७२। **तिरसोऽन्यतरस्याम्** ।८।३।४२। सो वा स्यात्कुभ्वोः । तिरःकृत्य । तिरस्कृत्य । तिरःकृत्वा ॥ **उपाजेन्वाजे** ।१।४।७३। एतौ कृञि वा गतिसंज्ञौ । उपाजेकृत्य । अन्वाजेकृत्य । उपाजे कृत्वा । अन्वाजे कृत्वा । दुर्बलस्य बलमाधायेत्यर्थः । **साक्षात्प्रभृतीनि च** ।१।४।७४। कृञि वा गतिसंज्ञानि स्युः । च्व्यर्थ इति **वक्तव्यम्** । साक्षात्कृत्य । साक्षात्कृत्वा । लवणंकृत्य । लवणंकृत्वा । मान्तत्वं निपातनात् ॥ **अनत्याधान उरसिमनसी** ।१।४।७५। उरसिकृत्य । उरसिकृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसि कृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेष-स्तत्र न—उरसि कृत्वा पाणिं शेते ॥ **मध्ये पदे निवचने च** ।१।४।७६। एते कृञि गतिसंज्ञा वा स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः ॥ **नित्यं हस्ते पाणावुपयमने** ।१।४।७७। कृञि । उपयमनं विवाहः । स्वीकारमात्रमित्यन्ये । हस्तेकृत्य । पाणौकृत्य ॥ **प्राध्वं बन्धने** ।१।४।७८। प्राध्वमि-त्यव्ययम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना स्वानुकूल्यकरणे—प्राध्वं कृत्वा ॥ **जीविकोपनिषदावौपम्ये** ।१।४।७९। जीविकामिव कृत्वा । जीविकाकृत्य । औपम्ये

१ एतौ विभक्तिप्रतिरूपकौ । एवञ्चानयोरव्ययत्वम् । २ उपश्लेषः = सम्पर्कः । सम्बन्धस्थापनमिति यावत् । ३ प्राध्वंकृत्य = सरलं कृत्वा । ( ठोक पीटकर पादरा-सीधा-करके )।

किम् ? जीविकां कृत्वा। प्रादिग्रहणमगत्यर्थम्[1]—सुपुरुषः[2]। **प्रादयो गताद्यर्थे प्रथमया।** प्रगत आचार्यः प्राचार्यः ॥ **अत्यादयः क्रान्ताद्यर्थे द्वितीयया।** अतिक्रान्तो मालामिति विग्रहे ॥ **एक-विभक्ति चापूर्वनिपाते** ।१।२।४४। विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं न तु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य**[3] ।१।२।४८। उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः। अतिमालः ॥ **अवादयः क्रुष्टाद्यर्थे तृतीयया।** अवक्रुष्टः कोकिलया-अवकोकिलः ॥ **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।** परिग्लानोऽध्ययनाय पर्यध्ययनः ॥ **निरादयः क्रान्ताद्यर्थे पञ्चम्या।** निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः ॥ **कर्मप्रवचनीयानां प्रतिषेधः।** वृक्षम्प्रति। **तत्रोपपदं सप्तमीस्थम्** ।३।१।९२। सप्तम्यन्ते[4] पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं कुम्भादि, तद्वाचकमुपपदसञ्ज्ञं स्यात्। **उपपदमतिङ्** ।२।२।१९। उपपदं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। कुम्भ अस् कार[5] इत्य-लौकिकं प्रक्रियावाक्यम्। अतिङ् किम् ? अतिङ्ग्रहणं ज्ञापयति

---

१ प्रादीनां गतित्वादेव समासे सिद्धे पुनः प्रादीनां ग्रहणस्य फल-माह—अगत्यर्थमिति। अत्र क्रियायोगाभावाद्गतित्वेति गतित्वं नेत्या-शयः। २ सुष्ठु पुरुषः सुपुरुषः। 'कुगतिप्रादयः' इति नित्यसमासः।

३ उपसर्जनसञ्ज्ञाफलभूतं ह्रस्वमाह—गोस्त्रियोरिति। ४ सप्तम्यन्ते पदे 'कर्मणि' इत्यादौ वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं कुम्भादिपदमुप-पदसञ्ज्ञं स्यादित्यर्थः। ५ कुम्भ अस् कार इत्यलौकिकं विग्रहवाक्यम्। 'कर्तृकर्मणोः कृति' इति कुम्भशब्दात् षष्ठी। लौकिकविग्रहे तु न लोकेति निषेधान्न ततः षष्ठी।

-सुपेत्येतन्नेहानुवर्तते । पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्यातिङ्ग्रहणं-तत्रापकृष्यते । सुपेति च निवृत्तम् । मा भवान्[1]भूत् । माङि लुङिति सप्तमीनिर्देशान्माङुपपदम् । तथा च—**गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः** । इति सिद्धम् । व्याघ्री[2] । अश्वक्रीती[3] । कच्छपी[4]त्यादि । **अमैवाव्ययेन** ।२।२।२०। अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारम्[5] । 'स्वादुमि णमुल्' इति णमुल् । नेह ? **कालसमयवेलासु तुमुन्** । कालः[6] समयो वेला वा भोक्तुम् । अमैवेति किम् ? अग्रे भोजम् । अग्रे भुक्त्वा । विभाषाग्रे प्रथमपूर्वेष्विति क्त्वाणमुलौ । अमा चान्[7]येन च तुल्यविधानमेतत् ॥ **तृतीया-**

---

१ समासाऽभावबोधनाय भवानिति पदं मध्ये प्रयुक्तम् । २ व्याजिघ्रतीति व्याघ्री । गतिसञ्ज्ञकानां सुबुत्पत्तेः प्राक् समासादेव आङो घ्रशब्देन वेश्व 'आघ्र' शब्देन समासेऽदन्तत्वाज्जातिलक्षणो ङीष् भवति । सुबुत्पत्त्यनन्तरं समासाङ्गीकारे तु स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणोपस्थित्या सङ्ख्याद्युपस्थितिसाकाङ्क्षसुबुत्पत्तेः पूर्वमेव लिङ्गोपस्थित्या लिङ्गबोधकटाबुत्पत्तौ ततः सुबुत्पत्तावदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादित्याशयः । समासात्पूर्वं तु न जातिलक्षणङीषः प्राप्तिः, घ्रमात्रस्य जातिवाचकत्वाभावादित्यप्यवधेयम् । एवमग्रेऽप्यवधेयम् । ३ अश्वेन क्रीतेति विग्रहः । सुबुत्पत्त्यनन्तरं समासे तु पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात्करणपूर्वात्' इति ङीष् न स्यात् । ४ कच्छेन पिबतीति विग्रहः । उपपदस्य चेदमुदाहरणम् । ५ अत्र अमा ( णमुला ) सहैव 'स्वादुम्' इत्यस्योपपदसञ्ज्ञा 'तत्रोपपदम्' इत्यनेन विधीयते इति कारमित्यव्ययेन सह स्वादुमित्यस्य समासो भवत्येवेत्याशयः । ६ अत्र काल इत्यादेरुपपदसञ्ज्ञाया अमा सह विधानाभावात् (तुमुना सहैव तस्या विधानात् ) नोपपदसमासः । ७ अन्येन = क्त्वाप्रत्ययेन च । एतत् =

**प्रभृतीन्यन्यतरस्याम्** ।२।२।२१। 'उपदंशस्तृतीयाया'मित्यादीन्युपपदान्यमन्तेनाऽव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् । उपदंशस्तृतीयायामिति णमुल् ॥

**क्त्वा च** ।२।२।२२। तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य । उच्चैः कृत्वा । **'अव्ययेऽयथाभिप्रेताख्याने कृञः[1] क्त्वाणमुलौ'** इति क्त्वाणमुलौ । **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः** ।५।४।८६। संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम्[2] । निरङ्गुलम्[3] ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** ।५।४।८७। एभ्यो रात्रेरच् स्यात् । चात्संख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम्[4] ॥ **रात्राह्नाहाः पुंसि** ।२।४।२९। एते पुंस्येव । अहश्च रात्रिश्चाहोरात्रः[5] । सर्वरात्रः । पूर्वरात्रः[6] । संख्यातरात्रः ॥ **संख्यापूर्वं रात्रं क्लीबम्** । द्विरात्रम्[7] । अतिरात्रः[8] ॥ **राजाहःसखिभ्यष्टच्** ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच् । परमराजः[9] ।

---

उपपदत्वम् । १ अव्यये उपपदेऽयथाऽभिप्रेताख्याने कृञः क्त्वाणमुलौ स्त इत्यर्थः । २ तद्धितार्थोत्तरपदेति समासः । ३ 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'इति समासः ।

४ अह्नो रात्रिरिति षष्ठीतत्पुरुषस्य, अहश्चासौ रात्रिश्चेति कर्मधारयस्य चाऽर्थासङ्गत्याऽसम्भवादाह—द्वन्द्वार्थमिति । ५ 'जातिरप्राणिनाम्'इति एकवद्भावः । 'रात्राह्नाहाः'इति पुंस्त्वम् । ६ रात्रेः पूर्व—पूर्वरात्रः । ७ द्वयोः रात्र्योः समाहारो द्विरात्रम् । ८ रात्रिमतिक्रान्तः—अतिरात्रः । ९ परमश्चासौ राजा च परमराजः ।

कृष्णसखः[1] ॥ **अह्नष्टखोरेव** ।६।४।१४५। टिलोपः । परमाहः[3] ॥ **अह्नोऽह्न एतेभ्यः** ।५।४।८८। सर्वादिभ्योऽहन्शब्दस्याह्नादेशः समासान्ते परे ॥ **अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थान्निमित्तादह्नो नस्य णः । सर्वाह्णः ॥ **न संख्यादेः समाहारे** ।५।४।८९। अह्नोऽह्नादेशो न । द्व्यहः[4] ॥ **उत्तमैकाभ्यां च** ।५।४।९०। अह्नोऽह्नादेशो न । उत्तमशब्दोऽन्त्यार्थः पुण्यशब्दमाह ॥ **पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा** । पुण्याहम् । सुदिनाहम् । एकाहः ॥ **अग्राख्यायामुरसः** ।५।४।९३। टच् । अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः ॥ **ग्रामकौटाभ्यां च तक्ष्णः** ।५।४।९५। ग्रामतक्षः । कौटतक्षः[5] ॥ **अतेः शुनः** ।५।४।९६। अतिश्वो वराहः[6] ॥ **उपमानादप्राणिषु** ।५।४।९७। अप्राणिविषयोपमानाच्छ्वनः शुनष्टच् । आकर्षः श्वेव आकर्षश्वः[7] ॥ **उत्तरमृगपूर्वाच्च सक्थ्नः** ।५।४।९८। चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् ॥ **नावो द्विगोः** ।५।४।९९। द्विनावम्[8] । त्रिनावम्[9]-

---

१ कृष्णस्य सखा कृष्णसखः । २ 'नस्तद्धिते' इत्येव सिद्धे अह्नष्टखोरेव टिलोपो नान्यत्रेति नियमार्थमित्याशयः । ३ परमञ्च तदहश्च परमाहः । 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । ४ द्वयोरह्नोः समाहारो द्व्यहः । तस्य अहःसर्वैकदेशेति सूत्रेऽन्त्यत्वात् । ५ कुट्यां भवः कौटः, स चासौ तक्षा (वर्धकिः) च कौटतक्षः । ६ श्वानमतिक्रान्तः—अतिश्वः । वराहः = शूकरः । ७ कुक्कुरमुखो वैद्योपकरणभूतः शस्त्रविशेषः । फलकं = काष्ठपट्टम् । ८ द्वयोर्नावोः समाहारः द्विनावम् । ९ तिसृणां नावां समाहारः—त्रिनावम् ।

वम् ॥ **अर्धाच्च ।५।४।१००।** अर्धनावम्[1] ॥ **खार्याः प्राचाम् ।५।४।१०१।** द्विगोरर्धाच्च खार्याष्टज्वा । द्विखारम्[2] । द्विखारि[3] । अर्धखारम् । अर्धखारि ॥ **द्वित्रिभ्यामञ्जलेः ।५।४।१०२।** द्व्यञ्जलम् । द्व्यञ्जलि । **ब्रह्मणो जानपदाख्यायाम् ।५।४।१०४।** ब्रह्मान्तात्तत्पुरुषाट्टच् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः ॥ **कुमहद्भ्यामन्यतरस्याम् ।५।४।१०५।** कुब्रह्मः[4] । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा । **प्रकारवचने जातीयर्** । महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।६।३।४७।** आत्स्यात् । द्वादश[5] । अष्टादश । अबहुव्रीह्यशीत्योः किम् ? द्वित्राः । द्व्यशीतिः ॥ **प्राक्शताद्वक्तव्यम्** । नेह—द्विशतम् ॥ **त्रेस्त्रयः ।६।३।४८।** त्रिशब्दस्य त्रयसादेशः स्यात्पूर्वविषये । त्रयोदश । त्रयोविंशतिः ॥ **विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।६।३।४९।** द्व्यष्टनस्त्रेश्च प्रागुक्तं वा चत्वारिंशदादौ परे । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टचत्वारिंशत् । अष्टाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । एवं पञ्चाशत्षष्टिसप्ततिनवतिषु[6] ॥ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।२।४।२६।** कुक्कुटमयूर्याविमे ।

---

१ नावोऽर्धम्—अर्धनावम् । २ द्वयोः खार्योः समाहारो द्विखारम् । ३ 'द्विखारि' इत्यत्र क्लीबत्वात् 'ह्रस्वो नपुंसके' इति ह्रस्वत्वम् । उपसर्जनह्रस्वस्तु न, 'एकविभक्तावषष्ठ्यन्तवचनम्' इत्युपसर्जनसञ्ज्ञानिषेधस्य 'अर्धपिप्पली' इत्यत्रोक्तत्वात् । ४ कुत्सितो ब्रह्मा कुब्रह्मः । ५ द्वौ च दश च द्वादश । ६ द्विपञ्चाशत्, द्वापञ्चाशत्, अष्टपञ्चाशत्, अष्टापञ्चाशत् । त्रयःपञ्चाशत्, त्रिपञ्चाशत् । एवमग्रेऽपि ।

मयूरीकुक्कुटाविमौ । अर्धपिप्पली ॥ **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न** । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः[1] । प्राप्तो जीविकां प्राप्तजीविकः । अलंकुमारिः[2] । अत एव ज्ञापकात् समासः । निष्कौशाम्बिः[3] ॥ **पूर्ववदश्ववडवौ**[4] ।२।४।२७। द्वित्वमतन्त्रम् । अश्ववड्वौ[5] । अश्ववडवान् ॥ **अपथं**[6] **नपुंसकम्** ।२।४।३०। तत्पुरुष इत्येव—अन्यत्र तु अपथो देशः । कृतसमासान्तग्रहणान्नेह । अपन्थाः ॥ **अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः** । पञ्चमूली ॥ **आबन्तो वा** । पञ्चखट्वम् । पञ्चखट्वी ॥ **पात्राद्यन्तस्य**[7] **न** । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ॥ **छाया बाहुल्ये** ।२।४।२२। छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् ॥ **सभा राजाऽमनुष्यपूर्वा** ।२।४।२३। राजपर्यायपूर्वोऽमनुष्यपूर्वश्च समासान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् । ईश्वरसभम् । अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम् । पिशाचसभम् ॥ **विभाषा सेनासुराच्छायाशालानिशानाम्** ।२।४।२५। एतदन्तस्तत्पुरुषः क्लीबं वा । ब्राह्मणसेनम् । ब्राह्मणसेना । इत्यादि[8] ॥ **अशाला च** ।२।४।२४। संघातार्था या सभा तदन्त-

---

१ परवल्लिङ्गतायाः प्रतिषेधो वाच्य इत्यर्थः । २ अलंकुमार्यै इति अलङ्कुमारिः—वरः । अत एव ज्ञापकात्तत्पुरुषसमासः । ३ गतिसमासे उदाहरति—**निष्कौशाम्बिरिति** । ४ अत्र पूर्वपदस्यैव लिङ्गं स्यादित्यर्थः । ५ अश्वश्च वडवा च अश्ववडवौ । अत्र अश्वशब्दस्य पुंस्त्वात्पुंस्त्वम् । ६ न पन्थाः—अपथम् । ७ पात्राद्यन्तस्य द्विगोः स्त्रीत्वं नेत्यर्थः । ८ यवसुरम् । यवसुरा । कुड्याच्छायम् । कुड्यच्छाया । गोशालम् । गोशाला । श्वनिशम् । श्वनिशा ।

स्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभम्। स्त्रीसंघात इत्यर्थः। अशाला किम्? धर्मसभा। धर्मशालेत्यर्थः॥ **अर्धर्चाः पुंसि च** ।२।४।३१। अर्धर्चादयः पुंसि क्लीबे च स्युः। अर्धर्चः। अर्धर्चम्। एवं ध्वजतीर्थशरीरमण्डपयूषदेहाङ्कुशकलशसूत्रपात्रादयः। **सामान्ये नपुंसकम्**। विशेषाऽनिर्देशेन[1] वस्तुनिर्देशे नपुंसकम्। मृदु पचति। प्रातः कमनीयम्॥ **इति तत्पुरुषः**॥

**अथ बहुव्रीहिः। शेषो[2] बहुव्रीहिः** ।२।२।२३। अधिकारोऽयं प्राग्द्वन्द्वात्॥ **अनेकमन्यपदार्थे** ।२।२।२४। अनेकं प्रथमान्त[3]मन्यपदार्थे वर्तमानं वा समस्यते स बहुव्रीहिः॥

**सप्तमीविशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं विशेषणं बहुव्रीहौ पूर्वं स्यात्॥ **हलदन्तात्सप्तम्याः संज्ञायाम्** ।६।३।९। हलन्तादन्ताच्च सप्तम्या अलुक्। त्वचिसारः। कण्ठेकालः।

---

१ विशेषानिर्देशेन = लिङ्गविशेषाऽविवक्षया।

**इति श्रीगुरुप्रसादशास्त्रिविरचितायामभिनवराजलक्ष्म्यां तत्पुरुषप्रकरणम्।**

२ द्वितीया श्रितेत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः। प्रथमान्तमित्यर्थः। द्वितीयाश्रितेत्यादिना द्वितीयान्तादेरिव प्रथमान्तस्याऽपि विशिष्य समासस्य क्वचिदपि विधानाभावात्। यद्यपि विशेषणं विशेष्येणेति विशेषणसमासस्य वस्तुतः प्रथमान्त एव प्रवृत्तिस्तथापि प्रथमापदमुच्चार्य तद्विधानाभावात्प्रथमान्तं शेषपदेन गृह्यत एवेत्याशयः।

३ शेषग्रहणानुवृत्तिलभ्यमेतत्। ४ उपस्थितप्रथमान्ताऽतिरिक्तद्वितीयान्तादिपदार्थे वर्त्तमानमित्यर्थः। एवञ्च शेषग्रहणात्—अप्रथमाविभक्त्यर्थे हुव्रीहिरिति, समानाधिकरणानामिति च फलितम्। तेन वृष्टे देवे यो गतः स वृष्टदेव इत्येवं प्रथमार्थे बहुव्रीहिर्न भवति। नापि पञ्चभिर्भुक्तमस्यासौ पञ्चभुक्त इति व्यधिकरणानां बहुव्रीहिसमासो भवतीत्यवधेयम्।

अत[1] एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः । प्राप्तम्[2]उदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः । प्रथमार्थे न । वृष्टे देवे गतः[3] । **प्रादिभ्यो[4] धातुजस्य वाच्यो वा चोत्तरपदलोपः** । प्रपतितपर्णः[5] । प्रपर्णः । **नञोऽस्त्यर्थानां[6] वाच्यो वा चोत्तरपदलोपः** । अविद्यमानपुत्रः । अपुत्रः[7] । अस्तीति विभक्तिप्रतिरूपकमव्ययम् । अस्तिक्षीरा[8] गौः । **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्[9] समानाधिकरणे स्त्रियामपूरणीप्रियादिषु**

---

१ ननु त्वचिसारः कण्ठेकाल इत्यादौ 'सप्तमीविशेषणे' इत्यनेन कथं सप्तम्याः पूर्वनिपातो विधीयते, व्यधिकरणबहुव्रीहेरसम्भवादत आह—**अत एवेति** । अन्यथा सप्तम्या पूर्वनिपातविधानं व्यर्थं स्यात् । **त्वचिसारः**—वंशः ( बांस ) । **कण्ठेकालः** = शिवः । ( कालः = विषम् ) ।

२ प्रथमार्थे बहुव्रीहेरभावात् द्वितीयाद्यर्थे उदाहरति—**प्राप्तमिति** ।

३ अत्र वृष्टदेव इति समासो न भवतीत्यर्थः । ४ प्रादिभ्यः परं यद्धातुजं = पतितादि, तत्प्रकृतिकं यत्प्रथमान्तं, तदन्तस्य प्रपतितादिपदस्य पदान्तरेण बहुव्रीहिर्वाच्यः, प्रावुत्तरपदलोपश्च वा वक्तव्य इत्यर्थः ।

५ प्रकर्षेण पतितानि प्रपतितानि । प्रादिसमासः । प्रपतितानि पर्णानि यस्मात्—असौ—प्रपर्णः । प्रपतितपर्ण इति च लोपाभावपक्षे रूपम् ।

६ नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः, तत्र अस्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः । ७ न विद्यमानः अविद्यमानः, अविद्यमानः पुत्रो यस्यासौ अपुत्रः । लोपाभावे च अविद्यमानपुत्र इत्यपि रूपम् ।

८ अस्तिक्षीरा = विद्यमानदुग्धा । प्रशस्तदुग्धवतीति यावत् । ९ 'भाषितपुंस्कादनूङ्'इत्येकं पदं 'स्त्रियाः' इति षष्ठ्यन्तस्य विशेषणम् ।

।६।३।३४। उक्तपुंस्कात्पर ऊङभावो यत्र तथाभूतस्य स्त्रीवाचक-शब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रगुः । रूपवद्भार्यः ।

न ऊङ्—अनूङ् । नञ्तत्पुरुषः । भाषितः पुमान् यस्मिन् प्रवृत्ति-निमित्तरूपेऽर्थे तत् भाषितपुंस्कम्—प्रवृत्तिनिमित्तम् । तदस्यास्तीति भाषित-पुंस्कं शब्दस्वरूपम् । अर्शआद्यच् । भाषितपुंस्कात्—अनूङ् यस्यां (स्त्रियां) सा-भाषितपुंस्कादनूङ् । तस्याः—भाषितपुंस्कादनूङ् । अत्र यद्यपि 'भाषित-पुंस्कानूङः' इति रूपमुचितं तथापि सौत्रत्वात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक् ।

१ भाषितपुंस्कादिति दिग्योगलक्षणा पञ्चमी तदाह—तुल्ये इति । तुल्ये प्रवृत्तिनिमित्ते यद्भाषितपुंस्कं शब्दस्वरूपं तस्मात्पर ऊङभावो यत्र तथा-भूतस्येत्यादिरर्थः । २ अनेकमिति प्रथमानिर्दिष्टतया प्रथमानिर्दिष्टमिति, एकविभक्तीति वोपसर्जनतया गोशब्दस्य ह्रस्वत्वमित्यर्थः । चित्राशब्दस्य तु स्त्रियाः पुंवदिति पुंवद्भावः, चित्रत्वरूपप्रवृत्तिनिमित्तमादाय त्रिषु लिङ्गेषु चित्र-शब्दस्य प्रवृत्त्या प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कतया ततः परस्य ऊङभावस्यापि सत्त्वात् । ३ अत्रचित्रा गावो यस्येति लौकिकविग्रहः । चित्रा अस् गो अस् इत्यलौकिकविग्रहः । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया सवर्णदीर्घात् पूर्वमेव जसो लुक् । अन्यथा चित्राशब्देन सह दीर्घे एकादेशस्य परादिवद्भावेन आसो लुकि चित्रशब्दोत्तरमकारो न श्रूयेते-त्यवधेयम् ।

४ रूपवती भार्या यस्यासौ रूपवद्भार्यः । षष्ठ्यर्थे बहुव्रीहिः । रूपवत्त्वरूपप्रवृत्तिनिमित्तस्य त्रिष्वपि लिङ्गेषु ऐक्येन—प्रवृत्तिनिमित्तैक्ये भाषित-पुंस्कतया, ऊङभाववत्तया च समानविभक्तिकत्वेन समानाधिकरणस्योत्तर-पदस्य भार्यापदस्य परतया च स्त्रियाः पुंवदिति पुंवद्भावः । गोस्त्रियोरिति ह्रस्वः ।

अनूङ्: किम्? वामोरू[1]भार्यः।

पूरण्यां[2] तु—**अप्पूरणीप्रमाण्योः** ।५।४।११६। पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात्। कल्याणी पञ्चमी[3] यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। पुंवद्भावनिषेधोऽप्प्रत्ययश्च प्रधानपूर्ण[4]यामेव। रात्रिः पूरणी वाच्या चेत्युक्तोदाहरणे मुख्या[5]। अन्यत्र[6] तु—**नद्यृतश्च** ।५।४।१५३। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप्। पुंवद्भावः[7]। **केऽणः** ।७।४।१३। इति प्राप्ते।

१ वामौ-सुन्दरौ-ऊरू यस्याः सा वामोरूः। 'संहितशफलक्षणवामादेश्च' इत्यूङ्। वामत्वस्य प्रवृत्तिनिमित्तस्यैक्ये भाषितपुंस्कतया प्राप्तः पुंवद्भावो नात्र भवति, ततः परस्य ऊङः सत्त्वादित्याशयः। २ 'पुंवत्त्वनिषेधोदाहरणे विशेषो वक्ष्यते' इति शेषः। ३ अत्र पञ्चमीत्यस्य पूरणप्रत्ययान्ततया तस्मिन्परतः कल्याणीत्यस्य न पुंवद्भावः, अपूरणीप्रियादिष्विति पर्युदासात्। पञ्चानां पूरणी पञ्चमी। अत्र बहुव्रीहौ समासान्ते अपि तस्मिन् परतः पूर्वस्य भत्त्वाद्यस्येति चेत्यकारलोपः।

४ स्त्रियाः पुंवदिति सूत्रे अप्पूरणीतिसूत्रे च प्रधानपूरणीग्रहणं कर्तव्यमित्यर्थः। परेतु प्रधाने कार्यसम्प्रत्ययान्न्यायसिद्धमिदं नापूर्वं वचनमित्याहुः। ५ ननु बहुव्रीहेरन्यपदार्थप्रधानतया पञ्चम्याश्च समस्यमानपदार्थतया कथं पूरण्याः प्राधान्यमत आह—**रात्रिरिति**। 'कल्याणीपञ्चमा रात्रयः' इत्यत्र या पञ्चमी—(पञ्चानां पूरणी) साऽपि रात्रिः, समासार्थोऽन्यपदार्थश्च उद्भूतावयवभेदो रात्रिसमूह इति तद्धटकतया बहुव्रीहिवाच्याऽपि पञ्चमी रात्रिरिति रात्रेः प्राधान्यं स्पष्टमेवेत्याशयः। वाच्या = समासवाच्या।

६ अन्यत्र तु = यत्र अन्यपदार्थो रात्रिसमूहो नास्ति—तत्र—'कल्याणपञ्चमीकः पक्षः' इत्यादौ तु। ७ स्त्रियाः पुंवदिति पुंवद्भावः। पूरण्या रात्रेः समासवाच्यत्वाभावात्। ८ के परेऽणो ह्रस्वः स्यादिति वृत्तिर्लिखितेऽधिका।

**न कपि** ।७।४।१४। ह्रस्वः[1] । कल्याणपञ्चमीकः पक्षः । अत्र[2] तिरोहितावयवभेदस्य पक्षस्यान्यपदार्थतया रात्रिरप्रधानम् । बहुकर्तृकः[3] । अप्रियादिषु किम् ? कल्याणीप्रियः । प्रिया । मनोज्ञा । कल्याणी । सुभगा । दुर्भगा । भक्तिः । सचिवा । स्वसा । कान्ता । क्षान्ता । समा । चपला । दुहिता । वामा । अबला । तनया ।

**सामान्ये नपुंसकम्[4]** । दृढं भक्तिर्यस्य स दृढभक्तिः । स्त्रीत्वविवक्षायां तु—दृढाभक्तिः ॥ **तसिलादिष्वाकृत्वसुचः** ।६।३।३५। तसिलादिषु[6] कृत्वसुजन्तेषु स्त्रियाः पुंवत् । परिगणनं[7] कर्तव्यम् । अव्याप्त्यतिव्याप्तिपरिहाराय । तत्रतसौ । तरप्तमपौ । चरट्जातीयरौ । कल्पब्देशीयरौ । रूपप्पाशपौ । थाल् । तिल्थ्यनौ । एषु[8] परेषु स्त्रियाः पुंवत् । बह्वीषु इति

---

१ कपि परेऽणो ह्रस्वो न स्यात् । २ ननु पक्षस्य पञ्चदशाहोरात्रसमूहरूपत्वेन तत्प्रविष्टतयाऽत्रापि रात्रेः प्राधान्यं दुर्वारमत आह—अत्रेति । तिरोहितावयवभेदतया रात्रेरन्यपदार्थे पक्षे प्रवेशाभावादप्राधान्यमेवेत्यर्थः । अत्रोद्भूतावयवभेदाविवक्षायां तिरोहितावयवभेदविवक्षायाञ्च भाष्ये एतदुदाहरणमेव लिङ्गमित्यवधेयम् । ३ ऋदन्तोत्तरपदात्कपमुदाहरति—बह्विति । बहवः कर्त्तारो यस्यासौ बहुकर्तृकः पटः । ४ इत्याश्रित्येति शेषः ।

५ पुंवद्भावस्य प्रियादिषु परतोऽप्रवृत्तेर्नात्र पुंवद्भावः । ६ पञ्चम्यास्तसिलित्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्येतत्पर्यन्तसूत्रविहितेषु—इत्यर्थः । उत्तरपदपरकत्वाभावात्स्त्रियाः पुंवदित्यस्याप्राप्त्या वचनमिदम् । ७ तसिलाद्यनन्तर्भूतेषु तिल्-थ्यनादिष्वपि पुंवद्भावप्रवृत्तये, देश्यरूप्यप्रत्यययोस्तसिलाद्यन्तर्भूतयोः परतः पुंवद्भावस्याप्रवृत्तये च परिगणनमिदमावश्यकमित्याशयः ।

८ एषु = एष्वेव परेषु सत्सु तसिलादिष्विति सूत्रेण पुंवद्भाव इत्यर्थः ।

बहुत्र । बहुत इत्यादि ॥ त्वतलोर्गुणवचनस्य । शुक्लत्वम् । शुक्लता । गुणवचनस्य किं ? कर्त्र्या भावः कर्त्रीत्वम् ।

भस्याढे तद्धिते । हस्तिनीनां समूहो हास्तिकम् । अढे किम् ? रौहिणेयः ॥ कुक्कुट्यादीनामण्डादिषु । कुक्कुटाण्डम् । मृगपदम् । मृगक्षीरम् । काकशावः ॥ क्यङ्मानिनोश्च ।६।३।३६। पुंवत् । एनीवाचरति एतायते । श्येनीवाचरति श्येतायते । दर्शनीयां स्त्रियं मन्यते दर्शनीयमानिनी ॥ न कोपधायाः ।६।३।३७। स्त्रियाः पुंवत् । पाचिकाभार्यः ।

---

१ त्वतलोः परतो गुणोपसर्जनद्रव्यवाचिनः पुंवद्भाव इत्यर्थः । शुक्लाया भावः शुक्लत्वम् । शुक्लता । २ अचित्तहस्तिधेनोष्ठगिति ठक् । ३ रोहितशब्दाद्वर्णादनुदात्तादिति ङीप्, नकारादेशश्च । पुंवद्भावे तु नकारस्यापि निवृत्त्या रौहितेय इति रूपं स्यादिति भावः । ४ कुक्कुट्यादीनां पुंवत्त्वमण्डादिषु परेष्विति वक्तव्यमित्यर्थः । ५ कुक्कुट्या अण्डं कुक्कुटाण्डम् । मृग्याः पदं—मृगपदम् । काक्याः शावः = (बालकः—) काकशावः ।

६ एतयोः परतः पुंवदित्यर्थः । ७ 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमराच्चित्रपर्यायादेतशब्दाद्वर्णादनुदात्तादिति ङीब्नकारौ । कर्तुः क्यङिति क्यङ् । पुंवद्भावान्ङीब्नकारयोर्निवृत्तिः । अकृत्सार्वेति दीर्घः ।

८ 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमराच्छ्वेतपर्यायः श्येतशब्दः । ९ स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते दर्शनीयमानिनी । अत्र दर्शनीयामिति द्वितीयान्ते उपपदे मन्यतेः 'मनः' इति णिनिः । उपपदसमासः । ऋन्नेभ्य इति ङीप् । एवञ्च समानाधिकरणे उत्तरपदे प्रवर्त्तमानस्य स्त्रियाः पुंवदित्यस्य नात्र प्रसक्तिरिति मानिनो ग्रहणम् । या त्वात्मानमेव दर्शनीयां मन्यते तत्र 'स्त्रियाः पुंवत्' इत्येव सिद्धम् । एकस्या अपि ईप्सिततमत्व-व्यापाराश्रयत्व-विवक्षाभेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि तयोर्वास्तवाभेदेन सामानाधिकरण्याविघातादित्यवधेयम् ।

१० कोपधायाः स्त्रियाः पुंवदित्यर्थः । ११ पचतीति पाचिका ।

रसिक[1]भार्यः । मद्रिका[2]यते । मद्रिकामानिनी । **कोपध[3]प्रतिषेधे तद्धितवुग्रहणम्** । नेह—पाक[4]भार्यः ॥

**संज्ञापूरण्योश्च** ।६।३।३८। न पुंवत् । दत्ता[5]भार्यः । पञ्चमीभार्यः ।

**वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** ।६।३।३९। वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नी[6]भार्यः । रक्ते तु काषायकन्थ[7]ः ॥ विकारे तु हैममु[8]द्रिकः ॥ **स्वाङ्गाच्चेतः** ।६।३।४०। स्वाङ्गाद्य ईकारस्तदन्तास्त्री न पुंवत् । सुकेशीभा[9]र्यः । स्वाङ्गात्किम् ? पटुभा[10]र्यः ।

---

पाचिका भार्या यस्यासौ पाचिकाभार्यः । १ रसोऽस्या अस्तीति रसिका । 'अत इनिठनौ' इति ठन् । २ मद्रेषु भवा-मद्रिका । मद्रवृज्योः कन् । क्यङ्मानिनोश्चेति पुंवत्त्वप्राप्तिरत्र । पुंवद्भावे तु इकारो न श्रूयेतेत्याशयः । ३ तद्धितग्रहणं वुग्रहणञ्चेत्यर्थः ।

४ पाका = बाला—भार्या यस्यासौ-पाकभार्यः । अत्र 'अर्भकपृथुकपाका वयसी'त्युणादिषु निपातितोऽयं पाकशब्दः । एवञ्च तद्धितस्य वोर्वानायं ककारः । ५ दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति दत्ताशब्दस्य भाषितपुंस्कत्वात्स्त्रियाः पुंवदिति पुंवद्भावप्राप्तिरस्ति । ६ स्रुघ्नेभवा स्रौघ्नी । तत्र भव इत्यणि टिड्ढेति ङीप् । स्त्रियाः पुंवदिति पुंवद्भावप्राप्तिः । ७ कषायेण = गैरिकेण रक्ता काषायी । काषायी कन्था यस्यासौ काषायकन्थः । ८ हेम्नो विकारो हैमी । 'अनुदात्तादेरञ्' इति विकारार्थकोऽञ् । टिड्ढेति ङीप् । हैमी मुद्रिका यस्यासौ हैममुद्रिकः ।

९ शोभनाः केशा यस्याः सा सुकेशी । स्वाङ्गाच्चोपर्जनादिति ङीष् । सुकेशी भार्या यस्यासौ सुकेशीभार्यः । १० पट्वी भार्या यस्यासौ पटुभार्यः । पटुत्वं हि गुणो न स्वाङ्गम् । वोतो गुणवचनादिति ङीष् ।

ईतः किम् ? अकेशभार्यः ॥ **अमानिनीति वक्तव्यम्** । सुकेशमानिनी ॥ **जातेश्च ।६।३।४१।** न पुंवत् । ब्राह्मणीभार्यः । शूद्राभार्यः ॥ **संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ।२।२।२५।** संख्येयार्थया संख्ययाऽव्ययादयः समस्यन्ते स बहुव्रीहिः । **बहुव्रीहौ संख्येये डजबहुगणात् ।५।४।७३।** संख्येये यो बहुव्रीहिस्तस्माड्डच् समासान्तः । दशानां समीपे ये सन्ति ते उपदशाः । अबहुगणात् किम् ? उपबहवः । उपगणाः ॥

**ति विंशतेर्डिति ।६।४।१४२।** विंशतेर्भस्य तेर्लोपो डिति । आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः ॥ **दिङ्नामान्यन्तराले ।२।२।२६।** दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः पूर्वस्याश्च दिशो यदन्तरालं दक्षिणपूर्वा ॥ **तत्र तेनेदमिति सरूपे**

---

१ न विद्यमानाः केशा यस्याः सा अकेशा । सहनञ्विद्यमानपूर्वाच्चेति निषेधात्स्वाङ्गाच्चोपसर्जनादिति ङीप् न । अकेशा भार्या यस्यासौ अकेशभार्यः । अत्र स्त्रियाः पुंवदिति पुंवद्भावो भवत्येवेत्याशयः ।

२ अमानिनि परतोऽयं निषेधः, मानिनि शब्दे परतस्तु पुंवद्भावो भवत्येवेत्याशयः । आत्मानं सुकेशीं मन्यते या सा सुकेशमानिनी ।

३ सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात्पूर्वेणाऽप्राप्तौ वचनम् । ४ व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह—तस्मादिति । ५ बहूनां समीपे ये सन्ति ते उपबहवः । गणस्य समीपे ये सन्ति ते उपगणाः । ६ 'ति' इति लुप्तषष्ठीकं, तदाह—तेरिति । ७ तिशब्दस्य लोपे अतो गुणे इति पररूपम् । ८ अदूराः—त्रिंशतः—अदूरत्रिंशाः । ९ अधिकाश्चत्वारिंशतः अधिकचत्वारिंशाः । १० सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पुंवद्भावः ।

।२।२।२७। सप्तम्यन्ते ग्रहणविषये सरूपोपपदे तृतीयान्ते च प्रहरणविषये इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे ॥ इतिशब्दादयं विषयविशेषो लभ्यते ।

इच् कर्मव्यतिहारे ।५।४।१२७। अन्येषामपि दृश्यते ।६।३।१३७। दीर्घः[2] । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि । मुष्टीमुष्टि[3] ॥ तेन सहेति तुल्ययोगे ।२।२।२८। तुल्ययोगे[4] वर्तमानं सहेत्येतत् तृतीयान्तेन प्राग्वत् ॥ वोपसर्जनस्य ।६।३।८२। बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आतः ॥ प्रकृत्याशिषि ।६।३।८३। सहशब्दः[5] । स्वस्ति राज्ञे सहपुत्राय सहामात्याय । * अगोवत्सहलेष्विति वक्तव्यम् । सवत्साय । सहलाय ॥ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्[6] ।५।४।११३। स्वाङ्गवाचि सक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् । दीर्घसक्थः । जलजाक्षी[7] । स्वाङ्गात्किम् ? दीर्घसक्थि[8] शकटम् । स्थूलाक्षा[9]

---

१ गृह्यतेऽनेनेति ग्रहणं—केशादि, तद्विषयो वाच्यो ययोस्ते सरूपे पदे । एवं प्रह्रियतेऽनेनेति प्रहरणं दण्डादि, तद् विषयो वाच्यो ययोस्ते सरूपे पदे । अत्र 'सप्तम्यन्ते' इति 'ग्रहणविषये' इति च प्रथमाद्विवचनान्तम्, पदे इत्यस्य विशेषणम् । एवमग्रेऽपि । २ इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदस्य दीर्घः ।

३ मुष्टिभिर्मुष्टिभिः प्रहृत्येदं युद्धं प्रवृत्तं—मुष्टीमुष्टि । ४ तुल्यः समानो-योगः—क्रियायामन्वयः—तुल्ययोगः, तस्मिन् । एककालिकक्रियायोगे इत्यर्थः । ५ सहशब्दः प्रकृत्या स्यादाशिषि । ६ बहुव्रीहाविति सप्तमी, सक्थ्यक्ष्णोरिति षष्ठी च व्यत्ययेन पञ्चम्यर्थे । ७ जलजे इव अक्षिणी यस्याः सा जलजाक्षी । ८ दीर्घे सक्थिनी = तदाकारावीषादण्डौ यस्यासौ दीर्घ-सक्थः । ९ स्थूलानि = अक्षीणि पर्वग्रन्थयो यस्याः सा स्थूलाक्षा ।

वेणुयष्टिः । अक्ष्णोदर्शनादिति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः** ।५।४।११५। आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः** ।५।४।११७। अप् स्यात् । अन्तर्लोमः । वहिर्लोमः ॥ **पादस्य लोपोऽहस्त्यादिभ्यः** ।५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः । व्याघ्रस्येव पादौवस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? हस्तिन इव पादौ यस्य हस्तिपादः । कुसूलपादः ॥ **संख्यासुपूर्वस्य** ।५।४।१४०। पादशब्दस्य लोपः । द्विपात् । सुपात् ॥

**उद्विभ्यां काकुदस्य** ।५।४।१४८। लोपः । उत्काकुत् । विकाकुत् ॥ **पूर्णाद्विभाषा** ।५।४।१४९। पूर्णकाकुत् । पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः** ।५।४।१५०। सुहृन्मित्रम् । दुर्हृदमित्रः ॥ **नेतुर्नक्षत्रे अब्वक्तव्यः** । मृगो नेता यासां

---

१ अच् = समासान्तोऽच् । यस्येति चेतीकारलोपः । टाप् । २ ष इति लुप्तप्रथमान्तम् । द्वौ मूर्धानौ यस्यासौ द्विमूर्धः । त्रयो मूर्धानो यस्यासौ त्रिमूर्धः । समासान्ते सति नस्तद्धिते इति टिलोपः । ३ अन्तः— लोमानि यस्यासौ-अन्तर्लोमः । बहिः लोमानि यस्यासौ बहिर्लोमः । समासान्ते सति नस्तद्धिते इति टिलोपः ।

४ स्थानिद्वाराऽभावरूपस्यापि लोपस्य समासान्तता । लोपस्य समासान्ततानङ्गीकारे तु शेषाद्विभाषेति वैकल्पिकः कप्प्रसज्येत । ५ कुसूलस्येव पादौ यस्यासौ कुसूलपादः । कुसूलं धान्यावपनम् । ( ओबरी ) ६ द्वौ पादावस्य द्विपात् । ७ शोभनौ पादावस्य सुपात् । ८ उत् = ऊर्ध्वं काकुदं = तालु यस्यासौ—उत्काकुत् । विकृतं विशिष्टं वा काकुदं यस्यासौ विकाकुत् । ९ सुदुर्भ्यां परस्य हृदयस्य हृद्भावो निपात्यते इत्यपि पाठः । १० नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरप्स्यात्समासान्तः । ११ मृगः = मृगशीर्षं नक्षत्रम् ।

रात्रीणां ताः मृगनेत्रा रात्रयः ॥ **अञ् नासिकायाः संज्ञायां नसं चाऽस्थूलात्** ।५।४।११८। नासिकान्ताद्बहुव्रीहेरच् नासिका-शब्दश्च नसं प्राप्नोति न तु स्थूलपूर्वात् ॥ **पूर्वपदात्संज्ञायामगः** ।८।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णो न तु गकार-व्यवधाने । द्रुरिव नासिका यस्य द्रुणसः ॥ **खुरखराभ्यां वा नस्**[1] । खुरणाः[2] । खरणाः । **पक्षे अजपीष्यते** । खुरणसः । खरणसः ॥ **उपसर्गाच्च** ।५।४।११९। उन्नसः[3] ॥ **वेर्ग्रो वक्तव्यः** । विगता नासिकाऽस्य विग्रः ॥ **ख्यश्च** । विख्यः[4] ॥ **नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। अहलः[5] । अहलिः । असक्थः । असक्थिः । एवं दुःसुभ्याम् । शक्त्योरिति पाठान्तरम् । अशक्तः । अशक्तिः ॥ **नित्यमसिच् प्रजामेधयोः** ।५।४।१२२। नञ्दुःसुभ्य एव । अप्रजाः[6] । अमेधाः । दुर्मेधाः । सुमेधाः ॥ **धर्मादनिच् केवलात्** ।५।४।१२४। केवलपूर्वपदाद्यो धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् । कल्याणधर्मा[7] । केवलात् किम् ? परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । परमस्वधर्मः ॥ **इच्कर्मव्यतिहारे** । केशाकेशि[8] । मुसला-

---

नेता = नायकः, प्रधानम् । तादृश्यश्च मार्गशीर्षरात्रयः । १ खुरखराभ्यां परस्य नासिकाशब्दस्य नसादेश इत्यर्थः । २ खुरस्येव नासिका यस्यासौ खुरणाः । एवमग्रेऽपि । ३ उद्गता नासिका यस्यासौ उन्नसः । ४ विगता नासिका अस्य विख्यः । ५ नास्ति हलिर्यस्यासौ अहलः । महद्धलं हलिः । ६ नास्ति प्रजा यस्यासौ—अप्रजाः । अत्वसन्तस्येति दीर्घः । एवमग्रेऽपि । ७ कल्याणो धर्मो यस्यासौ कल्याणधर्मा । ८ तत्र तेनेदमिति समासः । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वेनाव्ययतया विभक्तिलुक् ।

सुसलि ॥ **प्रसंभ्यां जानुनोर्ज्ञुः** ।५।४।१२९। प्रज्ञुः । संज्ञुः ॥ **ऊर्ध्वाद्विभाषा** ।५।४।१३०। ऊर्ध्वज्ञुः । ऊर्ध्वजानुः[1] ॥ **ऊधसोनङ्** ।५।४।१३१। कुण्डोध्नी[2] ॥ **धनुषश्च** ।५।४।१३२। धनुरन्ताद्बहुव्रीहेरनङादेशः । शार्ङ्गधन्वा[3] ॥ **वा संज्ञायाम्** ।५।४।१३३। शतधन्वा[4] । शतधनुः ॥ **जायाया निङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः ॥ **लोपो व्योर्वलि** ।६।१।६६। युवतिर्जाया यस्य युवजानिः ॥ **गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४।१३५। उद्गन्धिः[5] । पूतिगन्धिः[6] । सुगन्धिः ॥

**उपमानाच्च** । ५।४।१३७। पद्मस्येव गन्धोऽस्य पद्मगन्धिः ॥ **वयसि दन्तस्य दतृ** ।५।४।१४१। संख्यासुपूर्वस्येत्येव । द्विदन्[7] । चतुर्दन् ॥ **अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च** ।५।४।१४५। एभ्यो दन्तस्य दतृ वा । कुड्मलाग्रदन्तः । कुड्मलाग्रदन्[8] । **षष उत्वं दतृदशधासूत्तरपदादेश्च ष्टुत्वं धासु वेति वाच्यम्** । षोडन् । **उरःप्रभृतिभ्यः कप्**[9] ।५।४।१५१। व्यूढोरस्कः[10] । प्रियसर्पिष्कः[11] ॥

---

१ ऊर्ध्वे जानुनी यस्यासौ ऊर्ध्वज्ञुः । ऊर्ध्वजानुः । २ कुण्डमिव ऊधो यस्याः सा कुण्डोध्नी । 'बहुव्रीहेरूधसो ङीष्' इति ङीष् । ३ शृङ्गस्येदं शार्ङ्गं । शार्ङ्गं धनुर्यस्यासौ शार्ङ्गधन्वा ।

४ शतं धनूंषि यस्यासौ शतधन्वा । ५ उद्गतो गन्धो यस्यासौ उद्गन्धिः । ६ पूतिः = असुरभिः—गन्धो यस्यासौ पूतिगन्धिः । शोभनो गन्धो यस्यासौ सुगन्धिः । ७ द्वौ दन्तौ अस्य द्विदन् = वार्षिकः शिशुः । उगित्त्वान्नुम् । ८ कुड्मलाग्र इव दन्ता यस्यासौ कुड्मलाग्रदन् ।

९ उरः प्रभृत्यन्ताद्बहुव्रीहेः कप् वा स्यादित्यर्थः । १० व्यूढं = विशालमुरो यस्यासौ व्यूढोरस्कः । सोऽपदादाविति सत्वम् । ११ प्रियं सर्पिर्यस्यासौ प्रियसर्पिष्कः । 'इणः षः' इति षत्वम् ।

**अर्थान्नञः** । अनर्थकम्[1] । नञः किम् ? अपार्थम् ॥ **इनः स्त्रियाम्** ।५।४।१५२। इन्नन्ताद्बहुव्रीहेः कप् । बहुदण्डिका[2] नगरी ॥ **अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति** । बहुवाग्मिका ॥ **शेषाद्विभाषा** ।५।४।१५४। अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशाः । महायशस्कः । अनुक्तेत्यादि किम् ? व्याघ्रपात्[3] ॥ **आपोऽन्यतरस्याम्** ।७।४।१५। कपि ह्रस्वः । बहुमालाकः । बहुमालकः । कबभावे-बहुमालः ॥ **न संज्ञायाम्** ।५।४।१५५। शेषादिति प्राप्तः कब् न । विश्वे देवा अस्य विश्वदेवः ॥ **ईयसश्च** ।५।४।१४६। ईयसन्तोत्तरपदान्न कप् । बहवः श्रेयांसोऽस्य बहुश्रेयान् । गोस्त्रियोरिति ह्रस्वे प्राप्ते ॥ **ईयसो बहुव्रीहेर्न** । बहुश्रेयसी । बहुव्रीहेः किम् ? अतिश्रेयसी ॥ **वन्दिते भ्रातुः** ।५।४।१५७। पूजार्थभ्रात्रन्तान्न कप् । प्रशस्तो भ्राताऽस्य प्रशस्तभ्राता । सुभ्राता । वन्दिते किम् ? मूर्खभ्रातृकः । नद्यृतश्चेति कप् ॥ **सर्वनामसंख्ययोर्बहुव्रीहौ पूर्वनिपातः** । सर्वश्वेतः । द्विशुक्लः ॥ **संख्याया अल्पीयस्याः** । द्वित्राः ॥ **द्वन्द्वेऽपि** । द्वादश[4] ॥ **वा प्रियस्य** । गुडप्रियः । प्रियगुडः ॥ **गड्वादेः परा सप्तमी** । गडुकण्ठः[5] । क्वचिन्न । वहेगडुः[6] ॥

---

१ नास्ति अर्थो यस्यासौ अनर्थकः । २ बहवो दण्डिनो यस्यां सा बहुदण्डिका काशीनगरी । ३ अत्र 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपः समासान्तः । ४ द्वौ च दश च द्वादश । ५ गडुः = मांसग्रन्थिः कण्ठे यस्यासौ गडुकण्ठः वर्करः । ६ वहः = स्कन्धः । वहे गडुर्यस्यासौ वहेगडुः । 'हलदन्तात्सप्तम्याः सञ्ज्ञायाम्' इत्यलुक् ॥

निष्ठा । २ । २ । ३६ । निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः ॥ जातिकालसुखादिभ्यः परा निष्ठा वाच्या । सारङ्गजग्धी[1] । मासजाता । सुखजाता ॥ वाऽऽहिताग्न्यादिषु ।२।२।३७। आहिताग्निः । अग्न्याहितः । आकृतिगणोऽयम् ।

इति बहुव्रीहिः ॥

---

## अथ द्वन्द्वसमासः

चार्थे द्वन्द्वः ।२।२।२९। अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः[2] । तत्रेश्वरं गुरुं च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः[3] समुच्चयः । भिक्षामट[4] गां चानयेति अन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्[5] समासो न । धवखदिरौ छिन्धीति

---

१ सारङ्गः = मृगः—जग्धो भुक्तो—यया सा—सारङ्गजग्धी । 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष् । मासो जाताया यस्याः सा मासजाता ।

**इति श्रीगुरुप्रसादशास्त्रिकृतायां बालमनोरमायां बहुव्रीहिप्रकरणम् ।**

—:०:—

२ चशब्दद्योत्याः । ३ एकस्मिन् = भजनादौ । अनेकस्य = ईश्वरादेः । ईश्वरं गुरुञ्चेत्यादौ क्रियायां द्रव्ययोः समुच्चयः । राज्ञो गजश्च पुरुषश्चेत्यादौ द्रव्ये द्रव्ययोः समुच्चयः । पटः शुक्लो रक्तश्चेत्यत्र च द्रव्ये गुणयोः समुच्चयः । 'रक्तः पटः कुण्डलञ्चे'त्यत्र गुणे द्रव्ययोः समुच्चय इति विवेकः ।

४ अत्र हि अलाभाद्गामनानयन्नपि भिक्षामटत्येव, अटन्नपि नाऽन्विष्य गामानयति, भिक्षामनटंस्तु गां नानयति, अतो भिक्षाटनं प्रधानम् । गवानयनन्त्वानुषङ्गिकम् । अनुद्देश्यत्वञ्चानुषङ्गिकत्वम् । ५ एकार्थीभावाभावात् ।

मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषमिति समूहः समाहारः ॥ **राजदन्तादिषु परम् ।२।२।३१।** एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा राजदन्तः । **धर्मादिष्वनियमः ।** अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । जायाशब्दस्य जमन्भावो दम्भावश्च वा निपात्यते । आकृतिगणोऽयम् ॥ **द्वन्द्वे घि ।२।२।३२।** द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिहरौ ॥ **अजाद्यदन्तम् ।२।२।३३।** ईशकृष्णौ ॥ **अल्पाच्तरम् ।२।२।३४।** शिवकेशवौ ॥ **ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण ।** हेमन्तशिशिरवसन्ताः । कृत्तिकारोहिण्यौ । समाक्षराणां किम् ? ग्रीष्मवसन्तौ । **लघ्वक्षरं पूर्वम् ।** कुशकाशम् । **अभ्यर्हितं च ।** तापसपर्वतौ ॥

**वर्णानामानुपूर्व्येण ।** ब्राह्मणक्षत्रियविट्शूद्राः ॥ **भ्रातुर्ज्यायसः ।** युधिष्ठिरार्जुनौ ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।२।४।२।** एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥

---

१ दन्तोपरिवर्त्ती दन्तो राजदन्त इत्युच्यते । राजदन्तादिषु द्वन्द्वतत्पुरुषयोरुभयोः पाठेऽपि 'अर्थधर्मौ' इत्याद्यभिप्रायेणेह पाठः । २ अनेकमिति सर्वेषामेवेह प्रथमानिर्दिष्टत्वेनोपसर्जनत्वाऽविशेषादनियमप्राप्तावयमारम्भः । ३ अत्र अर्थस्य अजाद्यदन्ततया पूर्वनिपातनियमः प्राप्तः । ४ अयं = राजदन्तादिः । ५ तत्र ऋतूनां प्रादुर्भावकृतमानुपूर्व्यं नक्षत्राणाञ्चोदयकृतमिति विवेकः । ६ अभ्यर्हितं = पूज्यवाचिशब्दस्वरूपं पूर्वं प्रयोज्यमित्यर्थः । ७ ज्येष्ठभ्रातुरित्यर्थः ।

८ पाणी च पादौ च एषां समाहारः पाणिपादम् । ९ मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । वेणुवादनं शिल्पमस्य—वैणविकः । तदस्य शिल्पमिति ठक् । मार्दङ्गिकाश्च वैणविकाश्च एषां समाहारः—मार्दङ्गिकवैणविकम् ।

१० रथेन चरन्ति रथिकाः । पर्पादिभ्यः ष्ठन् । रथिकाश्च अश्वारोहाश्च एषां

**अध्ययनतोऽविप्रकृष्टाख्यानाम्** ।२।४।५। अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत् । पदकक्रमकम्[1] ॥ **जातिरप्राणिनाम्** ।२।४।६। प्राणिवर्ज्यजातिवाचिनां द्वन्द्व एकवत् । धानाशष्कुलि । प्राणिनां तु—विट्शूद्राः ॥ **विशिष्टलिङ्गो[2] नदीदेशोऽग्रामाः** ।२।४।७। ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत् । उद्ध्यश्च[3] इरावती च उद्ध्येरावति । गङ्गाशोणम् । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् ॥ **क्षुद्रजन्तवः[4]** ।२।४।८। एषां द्वन्द्व एकवत् । यूकालिक्षम् । आनकुलात्क्षुद्रा[5] जन्तवः ॥ **येषां च विरोधः शाश्वतिकः[6]** ।२।४।९। प्राग्वत् । अहिनकुलम् । गोव्याघ्रम् । काकोलूकमित्यादौ परत्वाद्विभाषा[7] वृक्षेति प्राप्तं चकारेण वाध्यते[8] ॥ **शूद्राणाम-**

समाहारः—रथिकाश्वारोहम् । समाहारस्यैकत्वादेव सिद्धे नियमार्थं प्रकरणं 'प्राण्यङ्गादीनां समाहार एव यथा स्या'दिति । १ पदान्यधीते पदकः । 'क्रमादिभ्यो वुन्' इति वुन् । क्रममधीते क्रमकः । पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा तयोः प्रत्यासत्तिः । २ विशिष्टलिङ्ग इत्यादौ व्यत्ययेन वहुत्वे एकवचनम् । अत्र—ग्रामवाचकभिन्ना ये भिन्नलिङ्गा नदीवाचिनः, भिन्नलिङ्गा देशवाचिनश्च तेषां समाहारे द्वन्द्व एकवदित्यर्थः । ३ उद्ध्यः—ब्रह्मपुत्रनदः । इरावती = ब्रह्मदेशनदी । ( वर्माकी इरावदी नदी ) । ४ 'क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव वा । शतं वा प्रसृतौ येषां केचिदानकुलादपि ।' इति सङ्ग्रहः । ५ नकुलपर्यन्तम् । ६ शाश्वतिकः—त्रैकालिकः, सहजः, नित्यः । ७ पशुशकुनिद्वन्द्वस्यावकाशः—गोमहिषम् । गोमहिषाः । हंसचक्रवाकम् । हंसचक्रवाकाः । 'येषाञ्च विरोधः' इत्यस्यावकाशः—अहिनकुलम् । मार्जारमूषकम् । श्रमणब्राह्मणम् । इति । गोव्याघ्रं काकोलूकमित्यादौ तु परत्वाद्विभाषेति प्राप्तमित्याशयः ।

८ बाध्यते इति । चकारः पुनर्विधानार्थ इत्याशयः ।

**निरवसितानाम्**[1] ।२।४।१०। अवहिष्कृतानां शूद्राणां द्वन्द्वः प्राग्वत् । तक्षायस्कारम्[2] । पात्राद्बहिष्कृतानां तु चण्डालमृतपाः ॥

**गवाश्वप्रभृतीनि च** ।२।४।११। यथोच्चारितानि तथैव साधूनि । गवाश्वम्[3] । दासीदासमित्यादि[4] ॥ **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्** ।२।४।१२। वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । वृक्षादौ विशेषाणामेव ग्रहणम्[5] । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । गोमहिषम् । गोमहिषाः । शुकबकम् । शुकबकाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे ॥ * **फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्** । बदराणि चामलकानि च बदरामलकम् । जातिरप्राणिनामित्येकवद्भावः । नेह बदरामलके । रथिकाश्वारोहावित्यादि ॥ **न दधिपयआदीनि** ।२।४।१४। न एकवत्स्युः[6] । दधिपयसी[7] । इध्मा-

---

१ यैर्भुक्ते सति पात्रं भस्मादिनाऽपि न शुध्यति ते पात्राद्बहिष्कृताः । २ तक्षा = वर्धकिः ( बढ़ई ) । अयस्कारः = लोहकारः । ( लोहार ) ।

३ गावश्च अश्वाश्च एषां समाहारः—गवाश्वम् । अत्र पशुद्वन्द्वतया विभाषा वृक्षमृगेति वैकल्पिक एकवद्भावः प्राप्तः । ४ अत्र 'पुमान् स्त्रिया:' इत्येकशेषः प्राप्तोऽनेन बाध्यते ।

५ वृक्षादिशब्दैः प्रत्येकं द्वन्द्वस्य विशेषितत्वेन केवलवृक्षशब्दस्य च एकशेषप्रवृत्या द्वन्द्वासम्भवात्सामान्यविशेषाणां वृक्षधवादीनान्तु द्वन्द्वस्यानभिधानात्तद्विशेषस्यैव ग्रहणमत्रेत्याशयः । ६ एतानि नैकवत्स्युरित्यर्थः ।

७ अत्र व्यञ्जनत्वाद्विकल्पः प्राप्तः ।

बर्हिषी[1] । निपातनाद्दीर्घः । ऋक्सामे । वाङ्मनसे[2] ॥ **आनङ् ऋतो द्वन्द्वे ।६।३।२५।** विद्यायोनिसंबन्धवाचिनां ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे । होतापोतारौ[3] । मातापितरौ[4] । 'पुत्रे' इत्यनुवृत्तेः[5]—पितापुत्रौ[6] ॥ **देवताद्वन्द्वे च ।६।३।२६।** इहोत्तरपदे पूर्वपदस्याऽऽनङ् । मित्रावरुणौ ॥ **वायोः प्रयोगे प्रतिषेधः** । अग्निवायू । वाय्वग्नी ॥ **ईदग्नेः सोमवरुणयोः ।६।३।२७।** देवताद्वन्द्व इत्येव । **अग्नेः स्तुत्स्तोमसोमाः ।८।३।८२।** अग्नेः परेषामेषां सस्य षः[7] समासे । अग्निष्टुत्[8] । अग्निष्टोमः[9] । अग्नीषोमौ । अग्नीवरुणौ ॥ **इद् वृद्धौ ।६।३।२८।** वृद्धिमत्युत्तरपदे[10] अग्नेरिदादेशो देवताद्वन्द्वे । अग्नीमरुतौ देवते अस्य—आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । देवताद्वन्द्वे चेत्युभयपदवृद्धिः । **विष्णौ न ।** आग्नावैष्णवम् ॥ **दिवो द्यावा ।६।३।२९।** देवताद्वन्द्वे

---

१ इध्मं च बर्हिश्च इध्माबर्हिषी । इध्मशब्दस्य इहैव निपातनाद्दीर्घः । इध्मं=काष्ठम् । 'इध्ममेधः समित्स्त्रिया' मित्यमरः ।

२ वाक्च मनश्च वाङ्मनसे । अचतुरेत्यादिना समासान्तोऽच् । ३ अत्र एकयज्ञे आर्त्विज्यरूपो विद्याकृतः सम्बन्धः । ४ अनयोः पुत्रोत्पादने योनिकृतः सम्बन्धः । ५ पुत्रेऽन्यतरस्यामित्यतो मण्डूकप्लुत्या पुत्रपदानुवृत्तेरित्यर्थः ।

६ अनयोर्जन्यजनकभावलक्षणो योनिकृतः सम्बन्धः । ७ सात्पदाद्योरिति निषेधे प्राप्तेऽयमारम्भः । ८ अग्निः स्तूयतेऽत्र अग्निष्टुत्—क्रतुविशेषः । सम्पदादित्वादधिकरणे क्विप् । ९ अग्नीनां स्तोमः—अग्निष्टोमः—सोमयागस्य संस्थाविशेषः । १० वृद्धिपदं वृद्धिमत्परं, केवलाया वृद्धेरुत्तरपदत्वासम्भवात् ।

उत्तरपदे। द्यावाभूमी॥ **मातरपितरावुदीचाम्** ।६।३।३२। मातरपितरौ[1]। उदीचां किम्? मातापितरौ। **द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६। चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् समाहारे। वाक्त्वचम्[2]। त्वक्स्रजम्। शमीदृषदम्[3]। वाक्त्विषम्[4]। छत्रोपानहम्[5]। समाहारे किम्? प्रावृट्शरदौ।

## इति द्वन्द्वसमासः॥

## अथैकशेषप्रकरणम्।

**सरूपाणामेकशेष एकविभक्तौ**। रामौ। रामाः। **विरूपाणामपि समानार्थानाम्**। वक्रदण्डश्च[6] कुटिलदण्डश्च वक्रदण्डौ। कुटिलदण्डौ॥ **वृद्धो[7] यूना तल्लक्षणश्चेदेव विशेषः** ।१।२।६५। यूना सहोक्तौ गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ[8]। वृद्धः किम्? गर्गगार्ग्यायणौ। यूना किम्? गर्गगार्ग्यौ।

---

१ माता च पिता च मातरपितरौ। २ वाक्च त्वक् च वाक्त्वचम्। ३ शमी च दृषच्च शमीदृषदम्। विवाहोपकरणमेतत्। ( शमी = 'जांट' दृषत् = 'पत्थर )। ४ वाक्च त्विट् च वाक्त्विषम्। ५ छत्रश्चोपानहौ च छत्रोपानहम्।

❀ इति श्रीगुरुप्रसादशास्त्रिविरचितायामभिनवराजलक्ष्म्यां द्वन्द्वप्रकरणम् ❀

६ अनियमेनोभयोरेकशेष इत्याशयः। ७ 'अपत्यं पौत्रप्रभृति वृद्ध'-मिति पूर्वाचार्यैः परिभाषितं, पाणिनिनये च गोत्रपदेन यत्प्रसिद्धं तदिह वृद्ध-पदेन गृह्यते, कृत्रिमेण यूना साहचर्यात्तदाह वृत्तौ—गोत्रमिति। ८ गार्ग्यो हि गोत्रप्रत्ययान्तो न युवप्रत्ययान्तः।

तल्लक्षणः किं ? भागवित्ति[1]भागवित्तिकौ । कृत्स्नं किम् ? गार्ग्य-वात्स्यायनौ ॥

**स्त्रीपुंवच्च** ।१।२।६६। यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । गार्गी च गार्ग्यायणौ च गर्गाः ॥ **पुमान्स्त्रिया** ।१।२।६७। स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च हंसौ ॥ **भ्रातृपुत्रौ स्वसृदुहितृभ्याम्** ।१।२।६८। भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ ॥ **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** ।१।२।६९। अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्च वा एकवत्स्यात्तल्लक्षण एव विशेषश्चेत् । [2]शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् । [3]तदिदं शुक्लम् । तानीमानि शुक्लानि ॥ **पिता मात्रा** ।१।२।७०। मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मा[4]तापितरौ ॥ **श्वशुरः श्वश्र्वा** ।१।२।७१। [5]सहोक्तौ वा शिष्यते । श्वशुरौ । श्वश्रूश्वशुरौ ॥ **त्यदादीनि सर्वैर्नित्यम्** ।१।२।७२। [6]सर्वैः सहोक्तौ त्यदादीनि शिष्यन्ते । स च देवदत्तश्च—तौ ॥ **त्यदादीनां मिथः सहोक्तौ** [7]यत्परं तच्छि-

---

१ अत्र प्रकृत्यापि वैरूप्यं, न तु केवलप्रत्ययमात्रकृतमेव वैरूप्यम् । २ अत्र-शुक्लः शुक्ला शुक्लञ्चेति—शुक्लमिति विग्रहः । अत्र पटाद्युपादानन्तु शुक्लस्य गुणिलिङ्गत्वबोधनाय । ३ स च सा च तच्च—तत् । अयञ्च इयञ्च इदञ्च—इदम् । ४ 'आनङृतो द्वन्द्वे' इत्यानङ् । ५ श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते । ६ सर्वैः = सकलैः शब्दैः । त्यदाद्यत्यदादिशब्दमात्रेणेति यावत् । ७ त्यदादिगणे यत्परं पठितं तच्छिष्यते इत्यर्थः । शब्दपरविप्रतिषेधादिति भावः ।

ष्यते। स च यश्च[1]—यौ ॥ 'पूर्वशेषोऽपि दृश्यते' इति भाष्यम्। स च यश्च—तौ ॥ **त्यदादितः[2] शेषे पुंनपुंसकतो लिङ्गवचनानि।** सा च देवदत्तश्च[3]—तौ। तच्च देवदत्ता च यज्ञदत्तश्च—तानि ॥ **पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते।** तच्च देवदत्तश्च ते। **अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्।** कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। तच्च सा च अर्धपिप्पल्यौ ते। **ग्राम्यपशुसंघेष्वतरुणेषु स्त्री।१।२।७३।** एषु सह विवक्षायां स्त्री शिष्यते। गाव[4] इमाः। ग्राम्येति किम्? रुरव[5] इमे। पशुग्रहणं किम्? ब्राह्मणाः। सङ्घेषु किम्? एतौ गावौ। अतरुणेषु किम्? वत्सा इमे ॥ **अनेकशफेष्विति वाच्यम्।** अश्वा[6] इमे ॥ **इत्येकशेषप्रकरणम्।**

---

## अथ समासान्ताः।

**ऋक्पूरब्धूःपथामाऽनक्षे।५।४।७४।** ऋगाद्यन्तस्य समा-

---

१ गणपाठे यच्छब्दस्य तच्छब्दापेक्षया परत्वाद्यच्छब्दस्येह शेषः। अत्र द्विपर्यान्तानावेष्टिरिति न प्रवर्त्तते, अहञ्च भवांश्च आवामिति भाष्योक्तेः।

२ आद्यादित्वात्पष्ठ्यर्थे तसिः। त्यदादीनां शेषे स्त्रियः शेषेऽपि सह विवक्षितेपु यः पुंलिङ्गो यश्च नपुंसकलिङ्गस्तद्वदेव त्यदादीनां लिङ्गं वचनं च भवतीत्यर्थः। ३ अत्र तच्छब्दस्य शेषे तस्य स्त्रीलिङ्गत्वेऽपि देवदत्तगतपुंलिङ्गानुरोधेन पुंस्येव तच्छब्दः प्रयुज्यते।

४ गावश्च (धेनवश्च) गावश्च ( वृषभाश्च ) गाव इमाः।

५ रुरुः = मृगविशेषः। ६ अश्वस्त्वेकशफः।

❀ इत्येकशेषप्रकरणम् ❀

७ 'अ' इति लुप्तप्रथमान्तम्। 'समासान्ताः' इत्यधिक्रियते। तदाह—

सस्य अप्रत्ययोऽन्तावयवः, अक्षे या धूस्तदन्तस्य न। अर्धर्चः[2]। **अनृचबह्वृचावध्येतर्येव**। नेह[3]। अनृक् साम। बह्वृक् सूक्तम्। विष्णुपुरम्[4]। विमलापं सरः॥ **द्व्यन्तरुपसर्गेभ्योऽप ईत्**[5] ।६।३।९७। द्वीपम्[6]। अन्तरीपम्[7]। प्रतीपम्[8]। समीपम्[9]। **अवर्णान्ताद्वा**। प्रेपम्[10]। प्रापम्॥ **ऊदनोर्देशे** ।६।३।९८। अनूपो[11] देशः। राजधुरा[12]। अक्षे तु—अक्षधूः[13]। दृढधूः-अक्षः। सखिपथः[14]। रम्यपथो[15] देशः॥ **अच्प्रत्यन्ववपूर्वात्सामलोम्नः** ।५।४।७५। प्रतिसामम्[16]। अनुसामम्। अवसामम्[17]। प्रतिलोमम्। अवलोमम्। **कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते**। कृष्णभूमः[18]। उदग्भूमः। पाण्डुभूमः। द्विभूमः, त्रिभूमः—प्रासादः॥ **संख्याया**

---

**समासस्येति**। १ 'अनक्षे' इत्येतत्सामान्यतः श्रुतमपि धुरा एव सम्बध्यते, सामर्थ्यात्, न ऋगादिभिस्तदाह—**अक्षे येति**। २ ऋचामर्धम्—अर्धर्चः। 'अर्ध नपुंसकम्' इति समासः। अर्धर्चाः पुंसि चेति पुंस्त्वम्।

३ इह। अप्रत्ययो नेति शेषः। अविद्यमाना ऋचः अस्मिन्निति विग्रहः। ४ विष्णोः पूः—इति विष्णुपुरम्। ५ एभ्योऽपस्य ईत्स्यात्। अप इति कृत-समासान्तस्यानुकरणं, षष्ठ्यर्थे प्रथमा। ६ द्विर्गता आपो यस्मिन्निति द्वीपम्। ७ अन्तर्गता आपो यस्मिन्निति अन्तरीपम्। ८ प्रतिकूला आपो यस्मिन्—प्रतीपम्। ९ सङ्गता आपो यस्मिन् समीपम्।

१० प्रगताः प्रकृष्टा वा आपो यस्मिन्—प्रेपम्। ११ अनुगता आपोऽस्मिन् अनूपः। १२ राज्ञां धूः—राजधुरा। धूरत्र राज्ये लाक्षणिकी। १३ दृढा धूर्यस्य दृढधूः—अक्षः। १४ सखीनां पन्थाः—सखिपथः। १५ रम्यः पन्था यस्मिन्निति रम्यपथः। १६ साम्नः समीपमिति, साम प्रतिगतमिति वा विग्रहः। १७ अनुगतं, प्रतिगतं सामेति विग्रहः। १८ कृष्णा भूमिर्यस्यासौ कृष्ण-भूमः केदारादिः। भूमिः = भूतलप्रदेशः, कक्ष्या वा। एवमग्रेऽपि विग्रहो बोध्यः।

**नदीगोदावरीभ्यां च**। पञ्चनदम्[1]। सप्तगोदावरम्। अजिति योगविभागादन्यत्रापि—पद्मनाभः[2] ॥ **अक्ष्णोऽदर्शनात्[3] ।५।४।७६।** अचक्षुःपर्यायादक्ष्णोऽच् स्यात्। गवामक्षीव[4] गवाक्षः ॥ **अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः।५।४।७७।** एते पञ्चविंशतिरजन्ता[5] निपात्यन्ते। आद्यास्त्रयो बहुव्रीहयः। अविद्यमानानि चत्वार्यस्य अचतुरः। विगतानि चत्वार्यस्य विचतुरः। सुचतुरः[6] ॥ **त्र्युपाभ्यां चतुरोऽजिष्यते।** त्रिचतुराः[7]। चतुर्णां समीपे—उपचतुराः। तत एकादश द्वन्द्वाः। स्त्रीपुंसौ[8]। धेन्वनडुहौ[9]। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ[10] च ऊर्वष्ठीवम्। निपातनाट्टिलोपः। पदष्ठीवम्[11]। निपातनात्पादशब्दस्य पद्भावः। नक्तं च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वं निपात्यते। अहनि च

१ पञ्चानां नदीनां समाहारः—पञ्चनदम्।

२ पद्मं नाभौ यस्यासौ पद्मनाभः। गड्वादित्वान्नाभेः परनिपातः। ३ दृश्यतेऽनेन तत्—दर्शनं = चक्षुः। तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्येह ग्रहणमित्याशयेनाह—अचक्षुरिति। ४ गावः—किरणाः। अक्षिछिद्रम्। ५ अच्प्रत्ययान्ताः। ६ शोभनानि चत्वार्यस्य सुचतुरः। ७ त्रयश्चत्वारो वा त्रिचतुराः। ८ स्त्री च पुमांश्च स्त्रीपुंसौ। ९ धेनुश्च अनड्वांश्च—धेन्वनडुहौ। १० अष्ठीवान् = जानुपर्व। ११ पादौ च अष्ठीवन्तौ पदष्ठीवम्।

दिवा च अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः । सरजसमिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु-सरजः पङ्कजम् । निश्चितं श्रेयो निःश्रेयसम् । **तत्पुरुष एव ।** नेह । निःश्रेयान्पुरुषः । पुरुषस्यायुः—पुरुषायुषम् । ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् । ततो द्वन्द्वः । ऋग्यजुषम् । ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः । शुनः समीपम्—उपशुनम् । टिलोपाभावः संप्रसारणं च निपात्यते । गोष्ठे श्वा गोष्ठश्वः ॥ **ब्रह्महस्तिभ्यां वर्चसः** ।५।४।७८। अच् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ॥ **पल्यराजभ्यां च** । पल्यवर्चसम् । राजवर्चसम् ॥ **अवसमन्धेभ्यस्तमसः** ।५।४।७९। अवतमसम् । सन्तमसम् । अन्धतमसम् ॥ **अन्ववतप्ताद्रहसः** ।५।४।८१ अनुरहसम् । अवरहसम् । तप्तरहसम् ॥ **प्रतेरुरसः सप्तमीस्थात्** ।५।४।८२। उरसीति—प्रत्युरसम् ॥ **अनुगवमायामे** ।५।४।८३। एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । यस्य चायाम इति

---

१ रजोऽपि अपरित्यज्य-सरजसम् ।

२ रजोभिः सहेति सरजः । ३ निश्चितं श्रेयो येनासौ तथा । ४ द्वयोरायुषोः समाहारः द्व्यायुषम् । ५ ब्रह्मणो वर्चः—तेजः—ब्रह्मवर्चसम् ।

६ पलं मांसमर्हति पल्यो मांसभोजी, तस्य वर्चः—पल्यवर्चसम् । ७ अवहीनं तमः, सन्ततं तमः, अन्धं—गाढं—तम इति च यथायथं विग्रहः । अन्धयतीतिअन्धम् । पचाद्यच् । ८ यथायथम्—अनुगतं रहः, अवहीनं रहः, तप्तं रह इति च विग्रहो बोध्यः । तप्तं = परैरगम्यम् । ९ सप्तम्यर्थकात्प्रतेः परस्मादुरसोऽच्स्यादित्यर्थः । १० विभक्त्यर्थेऽव्ययीभावः ।

समासः । **उपसर्गादध्वनः** ।५।४।८५। प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात्** ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता नस्युः । सुराजा[1] । अतिराजा । **स्वतिभ्यामेव** । नेह—परमराजः ॥

**किमः क्षेपे**[2] ।५।४।७०। कुत्सितो राजा—किंराजा । किंसखा । किंगौः ॥ **नञस्तत्पुरुषात्**[3] ।५।४।७१। अराजा । तत्पुरुषात्किम् ? अधुरं शकटम् ॥ **पथो विभाषा** ।५।४।७२। अपथम्[4] । अपन्थाः । तत्पुरुषादित्येव । अपथो[5] देशः ॥ **इति समासान्ताः** ॥

## अथ अलुक्समासः ।

**अलुगुत्तरपदे** ।६।३।१। इत्यधिकृत्य ॥ **ओजःसहोम्भस्तमसस्तृतीयायाः**[6] ।६।३।३। ओजसाकृतमित्यादि[7] ॥ **अञ्जस उपसंख्यानम्** । अञ्जसाकृतम् ॥ **आत्मनश्च** ।६।३।६। तृतीयाया अलुक् ॥ **पूरणे इति वक्तव्यम्** । पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः[8] ॥ जनार्दनस्त्वात्मचतुर्थ एवेति बहुव्रीहिर्बोध्यः । **वैयाकरणाख्यायां चतुर्थ्याः** ।६।३।७। आत्मन इत्येव । आत्मनेपदम्[9][10] । आत्मनेभाषाः ॥ **परस्य च**

---

१ शोभनो राजा सुराजा । २ किमः क्षेपे समासान्ता न स्युः । ३ नञः सम्बन्धी यस्तत्पुरुषो नञवयवकस्तस्मात्समासान्तो नेत्यर्थः । ४ न पन्थाः—अपथम् । ५ न विद्यते पन्था यस्मिन्निति विग्रहः ।

❀ इति मध्यकौमुदीबालमनोरमायां समासान्ताः । ❀

६ एभ्यस्तृतीयाया अलुक्स्यादुत्तरपदे इत्यर्थः । ७ 'कर्त्तृकरणे कृता बहुलम्' इति समासः । ८ आत्मनस्तृतीयाया अलुक्स्यात्पूरणप्रत्ययान्ते उत्तरपदे । ९ तृतीयेति योगविभागात्समासः । १० आत्मार्थमित्यर्थः । तादर्थ्ये चतुर्थी ।

।६।३।८। परस्मैपदम् । परस्मैभाषा । हलदन्तादिति ङेरलुक् । त्वचिसारः ॥ **गवियुधिभ्यां स्थिरः** ।८।३।९५। सस्य षः । गविष्ठिरः । युधिष्ठिरः । अरण्येतिलकाः । अत्र संज्ञायामिति सप्तमीसमासः ॥ **हृद्द्युभ्यां च** । हृदिस्पृक्[1] । दिविस्पृक् ॥ **मध्याद्गुरौ** ।६।३।११। मध्येगुरुः[2] ॥ **अन्ताच्च** । अन्तेगुरुः । **अमूर्धमस्तकात्स्वाङ्गादकामे** ।६।३।१२। कण्ठेकालः[3] । उरसिलोमा । अमूर्धमस्तकात्किम् ? मूर्धशिखः । अकामे किम् ? मुखे कामोऽस्य मुखकामः ॥ **तत्पुरुषे कृति बहुलम्** ।६।३।१४। स्तम्बेरमः[4] । कर्णेजपः[5] ॥ **शयवासवासिष्वकालात्** ।६।३।१८। वा लुक् । खेशयः । खशयः । ग्रामेवासः । ग्रामवासः । ग्रामेवासी । ग्रामवासी ॥ **षष्ठ्या आक्रोशे** ।६।३।२१। चोरस्य कुलम् । आक्रोशे किम् ? ब्राह्मणकुलम् ॥ **वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु** । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः[6] ॥ **आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च** । **देवानांप्रिय इति**

---

१ हृदयं स्पृशतीति हृदिस्पृक् । अलुग्विधानसामर्थ्यात् कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा । २ मध्येगुरुः—जगणः । अन्तेगुरुः—तगणः । ३ शिवः । ४ स्तम्बेरमः—हस्ती । स्तम्बकर्णयो रमिजपोरित्यच् ।

५ कर्णेजपः—सूचकः । ६ पश्यतः—पश्यन्तमनादृत्य—हरतीति पश्यतोहरः—स्वर्णकारादिः । ( सुनार ) । 'षष्ठीचानादरे' इति षष्ठी । ७ अमुष्य पुत्रः—आमुष्यायणः । नडादित्वात्फक् । ८ अमुष्य पुत्रस्य भावः—आमुष्यपुत्रिका । अमुष्य कुलस्य भावः—आमुष्यकुलिका । द्वन्द्वमनोज्ञादिभ्यश्चेति मनोज्ञादित्वाद्वुञ् ।

च मूर्खे । अन्यत्र देवप्रियः ॥ **शेपपुच्छलाङ्गूलेषु शुनः** । शुनःशेपः[1] । शुनःपुच्छः । शुनोलाङ्गूलः ॥ **दिवश्च दासे** । दिवोदासः[2] ॥ **ऋतो विद्यायोनिसम्बन्धेभ्यः[3]** ।६।३।२३। होतुरन्तेवासी ॥ [ होतुः पुत्रः । पितुरन्तेवासी । पितुः पुत्रः ] । **विभाषा स्वसृपत्योः** ।६।३।२४। ऋदन्तात्षष्ठ्या वा लुक् ॥ ननान्दुः पतिः । ननान्दृपतिः ।

**मातुःपितुर्भ्यामन्यतरस्याम्** ।८।३।८५। स्वसुः सस्य षः समासे । मातुःष्वसा । मातुःस्वसा । पितुःष्वसा । पितुःस्वसा । लुक्पक्षे तु—**मातृपितृभ्यां स्वसा** ।८।३।८४। स्वसुः सस्य षः समासे । मातृष्वसा । पितृष्वसा । असमासे[4] तु—मातुः स्वसा । पितुः स्वसा । इत्यलुक्समासः ॥



## अथ समासाश्रयप्रकरणम् ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः[5]** ।३।४।४३। भाषितपुंस्काद्यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात्, घरूपकल्पप्प्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा[6] ।

---

१ शुन इव शेपमस्य शुनःशेपः । शेपं—लिङ्गम् । त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः । २ काशीराजविशेषस्य नाम । ३ विद्यासम्बन्धोनिसम्बन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् । ४ समासाभावे मातुःपितुर्भ्यामिति षत्वं नेत्याशयः । इत्यलुक्समासः ।

५ घपदेन 'तरप्तमपौ घः' इति सूत्रेण तरप्तमपौ गृह्येते । चेलट् तु पचाद्यजन्तम् । ६ 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावस्त्वत्र न, 'जातेश्चे'ति निषेधात् ।

ब्राह्मणितमा। ब्राह्मणिरूपा[1]। ब्राह्मणिकल्पा। ब्राह्मणिचेली[2]। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रेत्यादि। ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते। ङ्यः किम्? दत्तातरा। भाषितपुंस्कात्किम्? आमलकीतरा[3]। कुवलीतरा॥ **नद्याः शेषस्यान्यतरस्याम्** ।६।३।४४। अङ्यन्तनद्याः[4] ङ्यन्तैकाचश्च घादिषु ह्रस्वो वा। ब्रह्मबन्धुतरा। ब्रह्मबन्धूतरा। स्त्रितरा। स्त्रीतरा॥ **कृन्नद्या न**। लक्ष्मीतरा॥

**उगितश्च** ।६।३।४५। उगितः परा या नदी[5] तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा[6]। ह्रस्वाभावपक्षे पुंवत्[7]। विद्वत्तरा।

**पादस्य पदाज्यातिगोपहतेषु** ।६।३।५२। एषूत्तरपदेषु पादस्य 'पद' इत्यदन्तादेशः स्यात्। पादाभ्यामजतीति पदाजिः[8]। पदातिः[9]। 'अज्यतिभ्यां पादे च' इतीण्प्रत्ययः। पदगः[10]। पदोपहतः[11]॥ **पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति। पादौ विध्यन्ति—पद्याः शर्कराः। विध्यत्यधनुषेति यत्।

---

१ प्रशस्ता ब्राह्मणी ब्राह्मणिरूपा। २ टित्त्वान्ङीप्। चेलडादयः शब्दा निन्दार्थकाः। ३ आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिङ्गौ।

४ उक्तादन्यः शेषः, स च द्विधेत्याह—अङ्यन्तेति। उपलक्षणमेतत्। 'भाषितपुंस्कः' इत्यपि नेह सम्बध्यते, इत्याशयेनाह—स्त्रीतरेति। ५ ईदूतोः केवलयोरपि नदीसञ्ज्ञेति पक्षाभिप्रायेणेदमुक्तम्। ६ उगितश्चेति ङीपि 'वसोः सम्प्रसारणम्'। ७ 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावः। ८ अजेर्व्यभावो निपातनात्।

९ पादाभ्यामततीति पदातिः। १० पादाभ्यां गच्छतीति पदगः। 'अन्येभ्योऽपि दृश्यते' इति डः। ११ पादाभ्यामुपहतः—पदोपहतः।

अतदर्थे किम् ? पादार्थमुदकं पाद्यम् । पादार्घाभ्यामिति यत् ॥ **उदकस्योदः संज्ञायाम्** ।६।३।५७। उत्तरपदे । उदमेघः[1] ॥ उत्तरपदस्य चेति वक्तव्यम् । क्षीरोदः[2] ॥ **पेषंवासवाहनधिषु च** ।६।३।५८। उदपेषं[3] पिनष्टि । उदवासः[4] । उदवाहनः[5] । उदधिर्घटः[6] ॥ **एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९। उदकुम्भः । उदककुम्भः । एकेति किम् ? उदकस्थाली । पूरयितव्येति किम् ? उदकपर्वतः ॥ **मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। उदमन्थः । उदकमन्थः । उदौदनः । उदकौदनः ॥ **इको ह्रस्वोऽङ्यो गालवस्य** ।६।३।६१। इगन्तस्याऽङ्यन्तस्य ह्रस्वो वा उत्तरपदे । ग्रामणिपुत्रः[7] । ग्रामणीपुत्रः । इकः किम् ? रमापतिः । अङ्यः किम् ? गौरीपतिः ॥ **ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे** ।६।१।१३। ष्यङन्तस्य[8] पूर्वपदस्य संप्रसारणं स्यात् पुत्रपत्योः परतः ॥

**संप्रसारणस्य** ।६।३।१३९। दीर्घः स्यादुत्तरपदे । कौमुद-

१ उदकपूर्णो मेघ इव—उदमेघः । सादृश्यनिबन्धना कस्यचित्पुंसः सञ्ज्ञेयम् । २ उत्तरपदस्थस्योदकशब्दस्य उदादेशः सञ्ज्ञायाम् । क्षीरमिव क्षीरं वा उदक यस्यासौ क्षीरोदः । ३ 'स्नेहने पिषः' इति णमुल् । उदकेन पिनष्टीत्यर्थः । ४ उदकस्य वासः—उदवासः । ५ उदकं वाहनं यस्यासौ—उदवाहनः । ६ उदकं धीयतेऽस्मिन् इति उदधिः । कर्मण्यधिकरणे चेति किः ।

७ ग्रामण्यः पुत्रः—ग्रामणिपुत्रः । ८ तत्पुरुषपदेन पूर्वपदमुत्तरपदञ्चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तं विधिरित्याह—ष्यङन्तस्येति ।

-गन्ध्यायाः[1] पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । **इष्टकेषीकामालानां चिततूलभारिषु ।६।३।६५।** इष्टकादीनां तदन्तानां च चितादिषु ह्रस्वः स्यात् । इष्टकचितम्[2] । पक्वेष्टकचितम्[3] । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी[4] । उत्पलमालभारी ॥ **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ।६।३।८५।** समानस्य सः । सज्योतिः ॥ **चरणे ब्रह्मचारिणि ।६।३।८६।** ब्रह्मचारिण्युत्तरपदे समानस्य सश्चरणे समानत्वेन गम्यमाने । चरणः=शाखा । ब्रह्म=वेदः, तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । सब्रह्मचारी[5]—इत्यादि ॥ **तीर्थे ये ।६।३।८७।** यादौ प्रत्यये विवक्षिते समानस्य सः । सतीर्थ्यः[6]—एकगुरुकः । समानतीर्थेवासीति यत्प्रत्ययः ॥ **विभाषोदरे ।६।३।८८।** सोदर्यः । समानोदर्यः ॥ **दृग्दृशवतुषु ।६।३।८९।** सदृक्[7] । सदृशः ॥ **दृक्षे च ।** सदृक्षः ॥ **इदंकिमोरीश्की ।६।३।९०।** दृग्दृशवतुषु । ईदृक्[8] । ईदृशः । कीदृक् । कीदृशः ॥

---

१ कुमुदगन्धेरपत्यं स्त्री कौमुदगन्ध्या । तस्यापत्यमित्यणः स्थाने—'अणिञोः' इति ष्यङादेशः । 'यङश्चाप्' ।

२ इष्टकाभिश्चितम्—इष्टकचितम् । 'कर्तृकरणे'इति समासः । ३ पदाधिकारात् 'पदाङ्गाधिकारे तस्य—'इति तदन्तविधिः । ४ मालां बिभर्ति तच्छीलः मालभारी । 'व्रते' इतिणिनिः । ५ समानो ब्रह्मचारी सब्रह्मचारी । ब्रह्मचारिणः समानत्वं ब्राह्मणः समानत्वात् । एवञ्च समाने ब्रह्मणि=वेदे—व्रतचारीति फलति । ६ समाने तीर्थे वसति सतीर्थ्यः । तीर्थ—गुरुः । ७ समानो दृश्यते इति सदृक् । 'समानान्ययोश्चेति वक्तव्यम्' इति क्विन् । सदृश इत्यत्र च कन् । ८ इदमिव दृश्यते इति ईदृक् ।

दृक्षे च । ईदृक्षः । कीदृक्षः[1] ॥ **अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु** ।६।३।९९। अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु । अन्यदाशीः[2] । अन्यदाशा । अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यदूतिः । अन्यद्रागः । अषष्ठीत्यादि किम् ? अन्यस्यान्येन वा आशीः—अन्याशीः ॥ **कारके छे च नायं[3] निषेधः** । अन्यस्य कारकः-अन्यत्कारकः । अन्यस्यायम्—अन्यदीयः ॥ **अर्थे विभाषा** ।६।३।१००। अन्यदर्थः । अन्यार्थः ॥ **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। अजादावुत्तरपदे । कुत्सितोऽश्वः कदश्वः । कदन्नम् । तत्पुरुषे किम् ? कूष्ट्रो[4] राजा ॥ **त्रौ च** । कत्रयः ॥ **रथवदयोश्च** ।६।३।१०२। कद्रथः । कद्वदः ॥ **तृणे च जातौ** ।६।३।१०३। कत्तृणम् ॥ **का पथ्यक्षयोः** ।६।३।१०४। कापथम्[5] । काक्षः[6] ॥ **ईषदर्थे** ।६।३।१०५। ईषज्जलं—काजलम् ॥ **विभाषा पुरुषे** ।६।३।१०६। कुपुरुषः । कापुरुषः ॥ **कवं चोष्णे** ।६।३।१०७। उष्णशब्दे उत्तरपदे कवं का च वा स्यात् । कोष्णम्[7] । कवोष्णम् । कदुष्णम् ॥ **पृषोदरादीनि**

---

१ किमिव दृश्यते इति कीदृक्, कीदृक्षः । २ अन्या आशीः—अन्यदाशीः । ३ अयम् = अषष्ठ्यतृतीयास्थस्येति निषेधः । ४ कुत्सिता उष्ट्रा अस्य कूष्ट्रः । ५ कुत्सितः पन्थाः—कापथम् । कुगतीति समासः । ऋक्पूरब्धूरिति समासान्तः । पथः संख्याव्ययादेरिति नपुंसकत्वम् । ६ कुत्सितोऽक्षः—काक्षः । कुगतीति समासः । कुत्सिते अक्षिणी यस्येति वा विग्रहः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । ७ ईषदुष्णं कोष्णम् ।

यथोपदिष्टम् ।६।३।१०९। पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि । पृषत उदरं पृषोदरम् । तलोपः । वारिवाहको वलाहकः । पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् ॥

'भवेद्वर्णागमाद्धंसः[1] सिंहो वर्णविपर्ययात् ।
गूढोत्मा[2] वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥'

मतौ बह्वचोऽनजिरादीनाम् ।६।३।११९। दीर्घः स्यात् । अमरावती । अनजिरादीनां किम् ? अजिरवती । बह्वचः किम् ? व्रीहिमती । संज्ञायामित्येव । नेह—वलयवती ॥ शरादीनां च ६।३।१२०। शरावती[3] ॥ उपसर्गस्य घञ्यमनुष्ये बहुलम्[4] । ६।३।१२२। परीपाकः । अमनुष्ये किम् ? निषादः[5] ॥ नरे संज्ञायाम्[6] ।६।३।१२९। विश्वानरः ॥ मित्रे चर्षौ[7] ।६।३।१३०। विश्वामित्रः ॥ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु[8] । श्वादन्तः ॥ अनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसं-

---

१ 'हसे हसने' इत्यतः पचाद्यचि—वर्णागमात् = अनुस्वारागमात्—'हंसः' इति सिद्ध्यति । हिसि हिंसायामित्यतश्च पचाद्यचि नुमि अनुस्वारे सकारहकारयोर्विपर्यये च 'सिंहः' इति रूपम् । २ गूढ आत्मा यस्येति विग्रहे वर्णविकृतेः = आत्माऽऽकारस्य उकारादेशात्—गुणे च 'गूढोत्मा' इति रूपम् । वर्णनाशात् = तकारलोपात् । पृषोदरमिति सिध्यतीति शेषः । ३ नदीविशेषस्य (दक्षिणे 'ताप्ती'इति प्रसिद्धस्य) सञ्ज्ञा ।

४ उपसर्गस्य बहुलं दीर्घो घञन्ते परे ।

५ निषीदत्यस्मिन् पापम् इति—निषादः । हलश्चेति अधिकरणे घञ् । ६ विश्वस्य दीर्घो नरे परतः सञ्ज्ञायाम् । ७ विश्वस्य दीर्घो मित्रे परतः ऋषेः सञ्ज्ञायाम् । ८ 'दीर्घः' इति शेषः ।

ऽसंज्ञायामपि ।८।४।५। एभ्यः परस्य वनस्य नस्य णत्वम् । प्रवणम् ॥ **विभाषौषधिवनस्पतिभ्यः** ।८।४।६। दूर्वावणम् । दूर्वावनन् । शिरीषवणम् । शिरीषवनम् ॥ **द्व्यच्त्र्यज्भ्यामेव** । नेह—देववदारुवनम् ॥ **इरिकादिभ्यो न**[1] । इरिकावनम् । मिरिकावनम् । **वाहनमाहितात्** ।८।४।८। आरोप्य यदुह्यते तद्वाचिस्थान्निमित्ताद्वाहनस्य नस्य णत्वम् । इक्षुवाहणम्[2] । आहितात्किम् ? इन्द्रवाहनम्[3] । वहतेर्ल्युटि वृद्धिरिहैव निपातनात् । **पानं देशे** ।८।४।९। पूर्वपदस्थान्निमित्तात्परस्य पानस्य नस्यणः । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः[4] । सुरापाणाः प्राच्याः[5] । पीयते इति पानम् । कर्मणि ल्युट् । **वा भावकरणयोः** ।८।४।१०। क्षीरपानम्[6] । क्षीरपाणम् ॥ **प्रातिपदिकान्तनुम्विभक्तिषु च** ।८।४।११। पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा । माषवापिणौ[7] । व्रीहिवापाणि । व्रीहिवापेण[8] । पक्षे माषवापिनावित्यादि । **कुमति च** ।८।४।१३। कवर्गवत्युत्तर-

---

१ इरिकादय ओषधिविशेषाः । ओषधित्वात्प्राप्ते निषेधोऽयम् । २ इक्षवो हि वाहनाय परैः शकटादावारोप्यन्ते न तु ते स्वयमारोहन्ति । ३ इन्द्रः स्वयमेव स्ववाहनमारोहति नान्यैरारोप्यते, अतोऽत्र न णत्वम् । ४ उशीनराः—पञ्चनदसमीपस्थदेशवासिनो जनाः । ( सिवी जिला ) ५ अङ्गवङ्गादयः । ६ क्षीरस्य पानमिति विग्रहः । क्षीरस्य पानं पानपात्रं वेत्यर्थः ।

७ माषान्वपतः—इति माषवापिणौ । 'बहुलमाभीक्ष्ण्ये' इति णिनिः । ८ व्रीहीन् वपतीति व्रीहिवापः, तेनेति विग्रहः ।

पदे प्राग्वत् । हरिकामिणौ[1] । हरिकामाणि । हरिकामेण ।

**पदव्यवायेऽपि[2] ।८।४।३८।** णत्वं न । माषकुम्भवापेन[3] । **अतद्धिते इति वक्तव्यम्[4]** । आर्द्रगोमयेण । शुष्कगोमयेण ।

**पारस्करप्रभृतीनि च संज्ञायाम् ।६।१।१५७।** एतानि ससुट्कानि निपात्यन्ते । पारस्करः[5] । किष्किन्धा[6] । **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च ।** तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः । तद्बृहतोर्दकारतकारौ लुप्येते, करपत्योस्तु सुट् । चौरदेवतयोरिति समुदायोपाधिः । तस्करः[7] । बृहस्पतिः[8] । **प्रायस्य चित्तिचित्तयोः[9]** । प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् । **इति समासाश्रयविधयः ।**

—:०:—

---

१ हरिं कामयतस्तच्छीलौ हरिकामिणौ । हरिं कामयन्ति कुलानि—हरिकामाणि । अजन्तलक्षणो नुम् ।

२ निमित्तनिमित्तिनोर्मध्ये पदे सति न णत्वमित्यर्थः । ३ माषस्य कुम्भस्तं वपतीति माषकुम्भवापः, तेनेति विग्रहः । ४ व्यवधायकपदात् तद्धितश्चेत्परो न भवति तदा निषेध इत्यर्थः । ५ पारं करोति पारस्करो मुनिविशेषः । 'कृञो हेतुताच्छील्ये'ति टः । ६ किमपि धत्ते इति, किं किं न न धत्ते इति वा—किष्किन्धा ।

७ तत्करोतीति तस्करः = चोरः । ८ बृहत्या वाचः पतिः—बृहस्पतिः ।

९ 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मृतिः । प्रायस्य चित्तमिति विग्रहः । **इति श्रीगुरुप्रसादशास्त्रिविरचितायां मध्यसिद्धान्तकौमुद्यभिनवराजलक्ष्म्यां समासाश्रयप्रकरणम् ।**

## अथ तद्धितप्रकरणम् ।

**समर्थानां प्रथमाद्वा** ।४।१।८२। इदं पदत्रयमधिक्रियते 'प्राग्दिशः' इति यावत्[2] । **प्राग्दीव्यतोऽण्** ।४।१।८३। तेन दीव्यतीत्यतः प्रागणधिक्रियते[3] । **अश्वपत्यादिभ्यश्च** ४।१।८४। एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि[4] आश्वपतम् । गाणपतम् । **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** ।४।१।८५। प्राग्दीव्यतीयेष्वर्थेषु[5] । दितेरपत्यादि दैत्यः । अदितेरादित्यस्य वा आदित्यः । **यणो मयो द्वे वाच्ये** । 'मयः' इति पञ्चमी 'यणः' इति षष्ठीति पक्षे यस्य[6] द्वित्वम् । **हलो यमां यमि लोपः** ।८।४।३४। वा स्यात् ।—इत्यसति लोपे द्वित्वे च सति त्रियं[7]

---

१ अनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता । तत्प्रयोजनं तु एषु त्रिषु कस्य चिदंशस्य निवृत्तावपि अपरस्याऽनिवृत्तिरेव, तथा च 'प्राग्दिशः—' इति सूत्रे 'समर्थानां प्रथमात्' इति निवृत्तं, 'वा' इति त्वनुवर्तत एव' इति वक्ष्यमाणमूलग्रन्थः साधु संगच्छते ।

२ सामर्थ्यञ्चात्र परिनिष्ठितत्वं, कृतसन्धिकार्यत्वमिति यावत् । तेन सूत्थितस्यापत्यं सौत्थितिरितिरूपं भवति । समर्थाधिकाराभावे तु अकृतव्यूहपरिभाषया सवर्णदीर्घाप्रवृत्या 'सु-उत्थित' इत्यत इञि वृद्धौ स्वाुत्थितिरिति स्यात् । सौत्थितिरिति चेष्यते । अतः समर्थाधिकारः । ३ तेन 'तस्यापत्यम्' 'तेन रक्तं रागात्' इत्यादिविधेयाघटितसामान्यशास्त्रेष्वण एवोपस्थित्या तैरणेव विधीयते इत्यवधेयम् । ४ आदिपदेन—निर्वृत्तसमूहजाताद्यर्थसंग्रहः । ५ दित्यादिभ्यः पत्युत्तरपदाच्च ण्यः स्यात्प्राग्दीव्यतीयेष्वर्थेषु । ६ 'आदित्य' इत्यत्र यकारस्य मयः परत्वात्—द्वित्वम् ।
७ तथा च आदित्य्यम् । आदित्यम् । आदित्यम् । इत्येवं त्रीणि रूपाणि ।

रूपम् । असति लोपे द्वित्वलोपयोर्वा द्वियम् । द्वित्वाभावे लोपे च सति एकयम् । प्राजापत्यः । **पृथिव्या ञाऽञौ** । पार्थिवा । पार्थिवी । **देवाद्यञञौ** । दैव्यम् । दैवम् । **बहिषष्टिलोपो यञ्च** । वाह्यः । **ईकक् च** । **किति च । ७।२।११८।** किति तद्धितेऽचामादेरचो वृद्धिः । बाहीकः । **गोरजादिप्रसङ्गे यत्** । गोरपत्यादि[1] गव्यम् । **उत्सादिभ्योऽञ् ।४।१।८६।** औत्सः[2] ।

**इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ।**

**अथ तद्धितेऽपत्याधिकारः ।**

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।४।१।८७।** 'धान्यानां भवने' इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः । स्त्रैणः[3] । पौंस्नः ।

**तस्यापत्यम्[4] ।४।१।९२।** षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः । **ओर्गुणः ।६।४।१४६।** उवर्णान्तस्य भस्य गुणस्तद्धिते । ओरोदिति वक्तव्ये गुणोक्तिः 'संज्ञापूर्वको विधिरनित्यः' इति ज्ञापयितुम् । तेन[5] स्वायंभुवमित्यादि सिद्धम् । उपगोरपत्यम्—औपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः । **अपत्यं पौत्रप्रभृति गोत्रम् ।४।१।१६२।** अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ।

---

१ आदिपदेन जातसमूहाद्यर्थसंग्रहः । २ उत्से निर्झरे जातादि—औत्सः ।

**इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ।**

३ स्त्रिया अपत्यादि—स्त्रैणः । पुंसोऽपत्यादि—पौंस्नः ।

४ तस्येति न स्वरूपपरं किन्तु षष्ठ्यन्तमात्रस्योपलक्षणम्, तदाह—षष्ठ्यन्तादिति । पञ्चम्यर्थोऽध्याहारलभ्यः, अनुकरणात्पञ्चम्याः सौत्रत्वाल्लुग्वा । उक्ताः—अण्यञञ्स्नञादयः । वक्ष्यमाणाः—इञादयः । ५ तेन = अनित्यत्वाद्गुणस्य क्वचिदप्रवृत्त्या (उवङि सति) ।

**एको गोत्रे** ।४।१।९३। गोत्रे एक एव प्रत्ययः स्यात् ।[1] उपगो-र्गोत्रापत्यम्—औपगवः ।[2] **गर्गादिभ्यो यञ्** ।४।१।१०५। गोत्रापत्ये ।[3] गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः । **यञञोश्च** ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक्[4] तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः । **गोत्रेऽलुगचि** ।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात् । गर्गाणां छात्राः—। वक्ष्यमाणो वृद्धाच्छः । **आपत्यस्य च तद्धितेऽनाति** ।६।१।१५१। हलः परस्यापत्ययस्य लोपस्तद्धिते नत्वाकारे । गार्गीयाः ।[5] अनाति किम् ? गार्ग्यायणः । प्राग्दीव्य-तीये किम् ? गर्गेभ्यो हितं गर्गीयम् । अचि किम् ? गर्गेभ्य आगतं गर्गरूप्यम् । **जीवति तु वंश्ये युवा** ।४।१।१६३।[6]

---

१ पुत्र एवापत्यमितिपक्षेऽपि पौत्रेऽभिधेये । २ उपगुशब्द एव अणाद्य-पत्यप्रत्ययं लभते नतु औपगवशब्दः । अतो गोत्रापत्ये पौत्रादावप्यनन्तरा-पत्य इव तस्यापत्यमिति अणेव भवतिनत्वत इञितीञ्, उपगोरदन्त-त्वाभावादिति भावः । तेन उपगोः पौत्रे ( गोत्रे ) अभिधेये ( पुत्र एवापत्यमितिपक्षे ) अनन्तरापत्ये योऽण् तेनैव तृतीयादिः ( पौत्रादिः ) अभिधीयते, नतु 'उपगोरनन्तरापत्यम्—औपगवः, औपगवस्यापत्यम्—( उपगोः पौत्रः )—औपगवि'रित्येवमिञादिर्भवतीत्याकूतम् ।

३ षष्ठ्यन्तेभ्यो गर्गादिभ्यो गोत्रापत्येऽर्थे यञ्स्यात् । ४ एतयोः = यञञोः । तत्कृते = यञञ्प्रत्ययार्थकृते । यञञ्प्रत्ययार्थगते बहुत्वे इति यावत् । ५ गार्गीया इत्यत्र छप्रत्ययोऽजादिः प्राग्दीव्यतीयश्च ।

६ अत्र यञञोश्चेति यञो लुग्भवत्येव । पितृपितामहाद्युत्पादकपरम्परा वंशः, तत्र भवो वंश्यः ।

वंश्ये पित्रादौ[1] जीवति पौत्रादेर्यदपत्यं चतुर्थादि[2] तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञम् । **गोत्राद्यून्यस्त्रियाम्** ।४।१।९४। यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् स्त्रियां तु न युवसंज्ञा । **यञिञोश्च** ४।१।१०१। गोत्रे यौ यञिञौ तदन्तात्[3]फक् । **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** ।७।१।२। प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय्—स्युः । गर्गस्य युवापत्यं गार्ग्यायणः[4][5]। दाक्षायणः।

**अत इञ्**[6] ।४।१।९५। अपत्येऽर्थे । दाक्षिः । **बाह्वादिभ्यश्च** ।४।१।९६। बाहविः । औडुलोमिः । औडुलोमी । **लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः** । बाह्वादेरिञोऽपवादः[7]। उडुलोमाः[8]। आकृतिगणोऽयम् । **अनृष्यानन्तर्ये विदादिभ्योऽञ्** ।४।१।१०४। ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । विदस्य गोत्रं बैदः । बैदौ । विदाः[9]। पुत्रस्याऽपत्यं पौत्रः[10]। पौत्रौ । यञञोश्चेति सूत्रे प्रवराऽध्यायप्रसिद्धं[11] गोत्रम् । तेनेह न—पौत्राः ।

---

१ पित्रादौ = उपगुपौत्रापत्यादेः पित्रादौ ( उपगुपौत्रादौ )।

२ चतुर्थादि = प्रपौत्रप्रतिप्रपौत्रादिपरम्परा ।

३ सामर्थ्याद्यून्यपत्ये एवायं न तु गोत्रे । नहि गोत्रप्रत्ययान्ताद्गोत्रे प्रत्ययो भवितुमर्हति । 'एको गोत्रे' इत्युक्तेः ।

४ गर्गादिभ्यो यञिति गोत्रे यञि यस्येति चेत्यकारलोपे यञिञोश्चेति यूनि फकि फस्यायनादेशे यस्येति चेत्यकारलोपे णत्वे गार्ग्यायण इति सिद्धम् । ५ गार्ग्यायणः = गर्गस्य जीवत्पितृकः प्रपौत्रादिः । ६ अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे । ७ बाह्वादिभ्यश्चेतीञोऽपवादोऽकार इत्यर्थः । ८ 'नस्तद्धिते' इति टिलोपः । ९ यञञोश्चेति अञो लुक् । १० अनन्तरापत्येऽत्राऽञ् । ११ प्रवरेति । लोके गोत्रपदेन प्रसिद्धं काश्यपहारीतकौशिकादिकमेव गोत्रपदेनेह गृह्यते, न तु अलौकिकं(शब्दशास्त्रीयं)

एवं[1] दौहित्रादयः । **शिवादिभ्योऽण्** ।४।१।११२। अपत्ये । शैवः[2] । गाङ्गः[3] । **ऋष्यन्धकवृष्णिकुरुभ्यश्च** ।४।१।११४। **ऋषिभ्यः**—वासिष्ठः । वैश्वामित्रः । **अन्धकेभ्यः**—श्वाफल्कः । **वृष्णिभ्यः**—वासुदेवः । **कुरुभ्यः**—नाकुलः । साहदेवः । **मातुरुत्संख्यासंभद्रपूर्वायाः** ।४।१।११५। संख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यादण् प्रत्ययश्च । द्वैमातुरः[4] । षाण्मातुरः[5] । सांमातुरः । भाद्रमातुरः । **स्त्रीभ्यो ढक्** ।४।१।१२०। स्त्रीप्रत्यय[6]यान्तेभ्यो ढक् । वैनतेयः[7] । **कन्यायाः कनीन च** ।४।१।११६। चादण् । कानीनो व्यासः, कर्णश्च । **राजश्वशुराद्यत्** ।४।१।१३७। राज्ञो जातावेव । **ये चाऽभावकर्मणोः** ।६।४।१६८। यादौ तद्धिते अन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः[8] । श्वशुर्यः[9] । जातावेवेति किम् ? । अन्

---

पौत्रादिकं गोत्रपदेन गृह्यते । तेन पौत्रस्य लौकिकप्रवराध्यायप्रसिद्धगोत्रत्वाभावन्नात्र अञो लुक् । शास्त्रीयगोत्रस्य ग्रहणे तु पौत्रस्य—'अपत्यं पौत्रप्रभृति गोत्र'मिति गोत्रत्वादञोऽत्र लुगापत्तिः स्यादेव । प्रवराध्यायप्रसिद्धस्येह ग्रहणे च भाष्यमेव मानमित्याशयः ।

१ अत्रापि पौत्रादिवन्न अञो लुगित्याशयः । २ शिवस्यापत्यं शैवः—गणेशः । ३ गङ्गाया अपत्यं गाङ्गो भीष्मः ।

४ द्वयोर्मात्रोरपत्यं—द्वैमातुरः = गणेशः । ५ षण्णां मातृणामपत्यं षाण्मातुरः = स्वामिकार्त्तिकेयः । ६ बहुवचननिर्देशात्स्त्रीप्रत्ययान्तस्य ग्रहणं, तदाह—स्त्रीप्रत्ययान्तेभ्य इति । ७ विनताया अपत्यं बैनतेयः = गरुडः ।

८ राज्ञोऽपत्यं राजन्यः = क्षत्रियात्क्षत्रियायामुत्पन्नः क्षत्रियः ।

९ श्वशुरस्यापत्यं श्वशुर्यः = श्यालकः ।

ढक्। पैतृष्वसेयः। **मातृष्वसुश्च ।४।१।१३४।** पितृष्वसुर्यदुक्तं तदस्यापि स्यात्। मातृष्वस्रीयः। मातृष्वसेयः। **कुलात्खः ।४।१।१३९।** कुलीनः। तदन्तादपि, उत्तरसूत्रे अपूर्वपदादिति लिङ्गात्। आढ्यकुलीनः। **अपूर्वपदादन्यतरस्यां यड्ढकञौ ।४।१।१४०।** कुलादित्येव। पक्षे खः। कुल्यः। कौलेयकः। कुलीनः। पदग्रहणं किं? बहुकुल्यः। बाहुकुलेयकः। बहुकुलीनः। **महाकुलादञ्खञौ ।४।१।१४१।** अन्यतरस्यामित्यनुवर्त्तते। पक्षे खः। माहाकुलः। माहाकुलीनः। महाकुलीनः।

**दुष्कुलाड्ढक् ।४।१।१४२।** वा। पक्षे खः। दौष्कुलेयः। दुष्कुलीनः। **स्वसुश्छः ।४।१।१४३।** स्वस्रीयः। **भ्रातुर्व्यच्च ।४।१।१४४।** चाच्छः। अणोऽपवादः। भ्रातृव्यः। भ्रात्रीयः। **व्यन्सपत्ने ।४।१।१४५।** भ्रातुर्व्यन् स्यादपत्ये प्रकृतिप्रत्ययसमुदायेन[2] शत्रौ वाच्ये। भ्रातृव्यः शत्रुः। **मनोर्जातावञ्यतौ षुक् च ।४।१।१६१।** समुदायार्थो जातिः। मानुषः[3]। मनुष्यः। **तक्ष्णोऽणुपसंख्यानम्।** **षपूर्वहन्धृतराज्ञामणि ।६।४।१३५।** एषामणि तद्धितेऽनोऽकारलोपः। ताक्ष्णः[4]। **तिकादिभ्यः फिञ् ।४।१।१५४।** तैकायनिः। **वृद्धिर्यस्याचामादिस्तद्वृद्धम् ।१।१।७३।** यस्य समुदायस्याचां मध्ये आदिवृद्धिस्तद्वृद्धसंज्ञं स्यात्।

---

१ तदन्तादपि कुलशब्दादनेन खो भवति। उत्तरसूत्रेऽपूर्वपदादिति पर्युदाससामर्थ्यात्। अन्यथा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति तन्निषेधात्पर्युदासो व्यर्थ एव स्यादित्याशयः। २ समुदायेन जातिश्चेदभिधेयेत्यर्थः। ३ मनोरपत्यं मानुषः। ४ तक्ष्णोऽपत्यं ताक्ष्णः।

**उदीचां वृद्धादगोत्रात्** ।४।१।१५७। आम्रगुप्तायनिः । प्राचान्तु—आम्रगुप्तिः । **प्राचामवृद्धात्फिन्बहुलम्** ।४।१।१६०। ग्लुचुकायनिः । **जनपदशब्दात्क्षत्रियादञ्** ।४।१।१६८। जनपद-क्षत्रिययोर्वाचकादञ् अपत्ये । पाञ्चालः[1] । **क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्**[2] । पञ्चालानां राजा—पाञ्चालः[3] । **पूरोरण्** । पौरवः । **द्व्यञ्मगधकलिङ्गसूरमसादण्** ।४।१।१७०। द्व्यच् । आङ्गः । वाङ्गः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम् । **पाण्डोर्ड्यण्** । पाण्ड्यः । **वृद्धेत्कोशलाजादाञ्ञ्यङ्** ।४।१।१७१। **वृद्धात्**—आम्बष्ठ्यः । सौवीर्यः । **इत्**—आवन्त्यः । कौशल्यः । अजादस्यापत्यम्—आजाद्यः ।

**कुरुनादिभ्यो**[4] **ण्यः** ।४।१।१७२। कौरव्यः । नैषध्यः । **ते तद्राजाः** ४।१।१७४। अञादयस्तद्राजसंज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्** । २।४।६२। बहुष्वर्थेषु तद्राजस्य लुक्, तत्कृते बहुत्वे न तु स्त्रियाम् । पञ्चाला इत्यादि । **कम्बोजाल्लुक्** ।४।१।१७५। तद्राजस्य । कम्बोजः । कम्बोजौ । **कम्बोजादिभ्य इति वक्तव्यम्** । चोलः । शकः । केरलः । यवनः । **अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे** ।४।१७८। ञ्यादीना-

---

१ पञ्चालशब्दो देशस्य तद्देशस्थक्षत्रियस्य च वाचक इति जनपद-शब्दादित्यञ् । २ राजन्यभिधेयेऽपत्यवत्प्रत्ययः स्यात् ।

३ जनपदशब्दात्क्षत्रियादित्यञ् ।

४ नकारादिभ्य इत्यर्थः । कुरुशब्दात् द्व्यज्लक्षणेऽणि प्राप्ते नकारा-दिभ्यश्च अञि प्राप्ते वचनम् ।

-मन्त्यमुत्तमं, तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितौ अनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः । यङश्चाप् । कुमुदगन्धेर्गोत्रापत्यं स्त्री—कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् ? वासिष्ठी । गुरूपोत्तमयोः किम् ? औपगवी । गोत्रे किम् ? अहिच्छत्रे[1] जाता आहिच्छत्री ।

## इति तद्धितेऽपत्याधिकारः ।

———:०———

## अथ तद्धिते रक्ताद्यर्थकाः ।

**तेन[2] रक्तं रागात्** ।४।२।१। कषायेण रक्तं वस्त्रं काषायम् । माञ्जिष्ठम् । रागात्किम् ? देवदत्तेन रक्तं वस्त्रम् । **लाक्षारोचनाट्ठक्** ।४।२।२। लाक्षिकः । रौचनिकः । **शकलकर्दमाभ्यामुपसंख्यानम्** । शाकलिकः । कार्दमिकः । **नील्या अन्** । नील्या रक्तं वस्त्रं नीलम् । **पीतात्कन्** । पीतकम् । **हरिद्रामहारजनाभ्यामञ्**[3] । हारिद्रम् । माहारजनम् । **नक्षत्रेण[4]युक्तः कालः** ।४।२।३। **तिष्यपुष्ययोर्नक्षत्राऽणि[5] यलोप इति वाच्यम्** । पुष्येण युक्तं पौषम्-अहः । **लुबविशेषे** ।४।२।४। पूर्वेण विहितस्य लुप्, षष्टिदण्डात्मकस्य कालस्याऽवान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः । **दृष्टं साम** ।४।२।७।

---

१ अहिच्छत्रम्—पाञ्चालदेशस्तन्नगरञ्च । ( मुरादाबाद ) ।

२ तृतीयान्ताद्रागवाचकात्समर्थाद्यथाविहितं प्रत्ययाः स्युः रक्तमित्यर्थे । ३ महारजनं—'कसुम्भा' इति प्रसिद्धम् । ४ नक्षत्रपदमिह नक्षत्रयुक्तचन्द्रपरम् । पुष्ययुक्तेन चन्द्रमसेत्यर्थः । ५ नक्षत्रसम्बन्धी योऽण् तस्मिन्परतोऽनयोर्यकारस्य लोप इत्यर्थः ।

तेनेत्येवं। वसिष्ठेन दृष्टं वासिष्ठं साम। **वामदेवाड्ड्यड्ड्यौ** ।४।२।९। वामदेवेन दृष्टं साम वामदेव्यम्। **परिवृतो रथः** ।४।२।१०। वस्त्रेण परिवृतो वास्त्रो रथः। **तत्रोद्धृतममत्रेभ्यः** ।४।२।१४। शरावे[2] उद्धृतः शाराव ओदनः। **संस्कृतं भक्षाः** ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा भक्षाः।

**शूलोखाद्यत्** ।४।२।१७। अणोऽपवादः। शूले संस्कृतं शूल्यं मांसम्। उख्यम्। **दध्नष्ठक्** ।४।२।१८। दध्नि संस्कृतं दाधिकम्। **साऽस्मिन्पौर्णमासीति** ।४।२।२१। इतिशब्दात्संज्ञायामिति लभ्यते। पौषी पौर्णमासी अस्मिन्पौषो मासः। **साऽस्य[3] देवता** ।४।२।२४। इन्द्रो देवताऽस्य ऐन्द्रं हविः। पाशुपतम्। बार्हस्पतम्। त्यज्यमानद्रव्ये[4] उद्देश्यविशेषो देवता, मन्त्रस्तुत्या[5] च। ऐन्द्रो मन्त्रः। **कस्येत्** ।४।२।२५। कशब्दस्य इकारादेशः स्यात्प्रत्ययसंनियोगेन। यस्येति लोपात्परत्वादादिवृद्धिः। को ब्रह्मा देवताऽस्य कायं हविः। श्रीर्देवतास्य श्रायम्।

---

१ तृतीयान्तात् दृष्टमित्यर्थेऽणादयः स्युर्यद् दृष्टं तत्साम चेत्। २ शरावे पृथक्—आदावेव स्थापितः। अवशिष्ट इति यावत्।

३ साऽस्य पौर्णमासीत्यतः 'सा' इति प्रकृतमपि संज्ञासम्बद्धमिति पुनरत्र 'सा'ग्रहणम्। प्रथमान्तादस्य देवतेत्यर्थे यथाविहितं प्रत्ययाःस्युः।

४ देवताशब्दस्य लोकप्रसिद्धदेवतावाचकत्वे पितरो देवता अस्य पित्र्यमित्याद्यनुपपत्तिरत आह—**त्यज्यमानेति**। ५ मन्त्रेण या स्तूयते साऽपि देवतेत्यर्थः। यथा 'अग्निमीळे' इत्यादावग्न्यादिः।

**शुक्राद्घन्** ।४।२।२६। शुक्रियम् । **सोमाट्ट्यण्** ।४।२।३०। सौम्यम् । **वाय्वृतुपित्रुषसो यत्** ।४।२।३१। वायव्यम् । ऋतव्यम् । **रीङ् ऋतः** ।७।४।२७। अकृद्यकारेऽसार्वधातुकयकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । **यस्येति च** । पित्र्यम्[1] । उषस्यम्[2] । **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च** ।४।२।३२। चाद्यत् । द्यावापृथिवीयम् । द्यावापृथिव्यम् । शुनासीरीयम् । शुनासीर्यम् । **अग्नेर्ढक्** ।४।२।३३। आग्नेयम् । **महाराजप्रोष्ठपदाट्ठञ्** ।४।२।३५। माहाराजिकम् । प्रौष्ठपदिकम् । **देवताद्वन्द्वे च** ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिर्ञिति णिति च । आग्निमारुतम् । **नेन्द्रस्य परस्य** ।७।३।२२ सौमेन्द्रः । परस्य किम् ? ऐन्द्राग्नः । **दीर्घाच्च वरुणस्य** ।७।३।२३। न वृद्धिः । ऐन्द्रावरुणम् । दीर्घात्किम् ? 'आग्निवारुणीमनड्वाहीमालभेत' । **पितृव्यमातुलमातामहपितामहाः** ।४।२।३६। एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्डुलच् । मातुर्भ्राता मातुलः । मातृपितृभ्यां पितरि डामहच् । मातुः पिता मातामहः । पितुः पिता पितामहः । **मातरि षिच्च** । मातामही । पितामही । **तस्य समूहः** ।४।२।३७। काकानां समूहः काकम् । बकानां समूहो बाकम् । **भिक्षादिभ्योऽण्** ।४।२।३८। भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह[3] 'भस्याढे' इति पुंवद्भावे कृते—**इनण्यनपत्ये** ।६।४।१६४।

---

१ पितरो देवता अस्य पित्र्यम् । २ उषा देवता अस्य उषस्यम् । ३ इह = गार्भिणमित्यत्र ।

अनपत्यार्थेऽणि इन्प्रकृत्या। तेन 'नस्तद्धिते' इति टिलोपो न। युवतीनां समूहो यौवनम्[1]। शत्रन्तादनुदात्तादेरञि—यौवतम्। **गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२। ३९।** ग्लुचुकायनीनां समूहो ग्लौचुकायनकम्। औक्षकमित्यादि। आपत्यस्य चेति यलोपे प्राप्ते—। **प्रकृत्या अके राजन्यमनुष्ययुवानः।** राजन्यकम्। मानुष्यकम्। **वृद्धाच्चेति वक्तव्यम्।** वार्धकम्। **केदाराद्यञ्च ।४।२।४०।** चाद्वुञ्। कैदार्यम्। कैदारकम्। **गणिकाया यञ् वक्तव्यः।** गाणिक्यम्। **ठञ् कवचिनश्च ।४।२।४१।** चात्केदारादपि। कवचिनां समूहः—कावचिकम्। कैदारिकम्। **ग्रामजनबन्धुभ्यस्तल् ।४।२।४३।** ग्रामता। जनता। बन्धुता। **तलन्तं स्त्रियाम्।** ***गजसहायाभ्यां चेति वक्तव्यम्।** गजता। सहायता। ***अह्नः खः क्रतौ[2]।** अहीनः[3] क्रतुः। **अचित्तहस्तिधेनोष्ठक् ।४।२।४७। इसुसुक्तान्तात्कः ।७।२।५१।** इस् उस् उक् त एतदन्तात्परस्य ठस्य कः। साक्तुकम्। हास्तिकम्। धैनुकम्। **केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।४।२।४८।** पक्षे ठगणौ। कैश्यम्। कैशिकम्। अश्वीयम्। आश्वम्। **पाशादिभ्यो यः ।४।२।४९।** पाश्या। तृण्या।

१ पुंवद्भावात्तिप्रत्ययनिवृत्तिः। अनिति प्रकृतिभावः। २ क्रतौ वर्त्तमानादहञ्छब्दात्समूहेऽर्थे खः स्यात्। ३ 'अहीनः' इत्यत्र अहःशब्देन सौत्यानि अहानि विवक्षितानि। अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः। अह्नष्टखोरेवेति नियमाट्टिलोपो न।

धूम्या । वन्या । वात्या । **खलगोरथात् ।४।२।५०।** खल्या । गव्या । रथ्या । **इनित्रकट्यचश्च ।४।२।५१।** खलादिभ्यः क्रमात्स्युः । खलिनी । गोत्रा । रथकट्या । **खलादिभ्य इनिर्वक्तव्यः** । डाकिनी । कुटुम्बिनी । आकृतिगणोऽयम् ।

**तदस्यां[1] प्रहरणमिति क्रीडायां णः ।४।२।५७।** दण्डःप्रहरणमस्यां क्रीडायां दाण्डा । मौष्टा । **घञः साऽस्यां क्रियेति ञः ।४।२।५८।** घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे प्रत्ययः स्यात् । घञ इति कृद्ग्रहणाद्गतिकारकपूर्वस्यापि ग्रहणम् ।

**श्येनतिलस्य पाते ञे ।६।३।७१।** अनयोर्मुम् स्यात् ञप्रत्यये परे पातशब्दे उत्तरपदे । श्यैनम्पाता मृगया । तैलंपाता स्वधा । श्येनतिलस्य किम् ? दण्डपातोऽस्यां दाण्डपाता तिथिः । **तदधीते[2] तद्वेद ।४।२।५९। न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।७।३।३।** पदान्ताभ्यां यकारवकाराभ्यां परस्याऽचो न वृद्धिः किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः । व्याकरणमधीते वेत्ति वा वैयाकरणः । **क्रमादिभ्यो वुन् ।४।२।६१।** क्रमकः[3] । पदकः । शिक्षकः[4] । मीमांसकः । **क्रतूक्थादिसूत्रान्ताट्ठक् ।४।२।६०।**

---

१ प्रथमान्तात्प्रहरणवाचकात्सप्तम्यन्तार्थेऽण् स्यात्स चेत्प्रथमान्तःक्रीडा भवति । २ द्वितीयान्तादध्येतरि वेदितरि च प्रत्ययः स्यात् । द्विस्तत्पदोपादानमधीयाने विदुषि च प्रत्येकं विधानार्थम् । ३ क्रममधीते वेद वा क्रमकः । पदान्यधीते वेद वा पदकः । ४ शिक्षामधीते वेद वा शिक्षकः ।

क्रतुविशेषवाचिनामेव ग्रहणम् । तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि । आग्निष्टोमिकः[1] । वाजपेयिकः । उक्थं सामविशेषः, तल्लक्षणपरो ग्रन्थविशेषो लक्षणया-उक्थम् । तदधीते वेद वा—औक्थिकः । **मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते** । नैयायिकः[2] । वार्तिकः । लौकायतिकः[3] । **सूत्रान्ताच्चकल्पादेरेवेष्यते** । सांग्रहसूत्रिकः । अकल्पादेः किम् ? काल्पसूत्रः । **विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्** । वायसविद्यिकः । गौलक्षणिकः । पाराशरकल्पिकः । **अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्** । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रिविधा विद्या त्रिविद्या[4], तामधीते वेत्ति वा त्रैविद्यः । **इति रक्ताद्यर्थकाः** ।

## अथ चातुरर्थिकाः ।

**तदस्मिन्नस्तीति देशे तन्नाम्नि[5]** ।४।२।६७। उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः । **तेन[6] निर्वृत्तम्** ।४।२।६८। कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी । **तस्य[7] निवासः** ।४।२।६९।

---

१ अग्निष्टोमं वेत्ति अग्निष्टोमप्रतिपादकग्रन्थमधीते वा आग्निष्टोमिकः ।

२ न्यायमधीते वेद वा नैयायिकः । वृत्तिमधीते वेद वा वार्त्तिकः ।

३ लोकायतं—चार्वाकनास्तिकदर्शनम् अधीते वेद वा लौकायतिकः ।

४ त्रिविधा विद्या त्रिविद्या । ५ अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात्प्रत्ययान्तनामा देशश्चेत् । सूत्रे–तत् = प्रत्ययान्तं–नाम यस्य तस्मिन्–'तन्नाम्नि' इति विग्रहः ।

६ तृतीयान्तान्निर्वृत्त इत्यर्थेऽणादयस्तन्नाम्नि देशे ।

७ षष्ठ्यन्तान्निवास इत्यर्थे अणादयः स्युस्तन्नाम्नि देशे ।

शिवीनां निवासो देशः शैवः। **अदूरभवश्च** ।४।२।७०। विदिशाया अदूरभवं वैदिशम्। **वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाऽश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः** ।४।२।८०। सप्तदशभ्यः सप्तदश क्रमात्स्युश्चतुरर्थ्याम्। **अरीहणादिभ्यो वुञ्**। अरीहणेन निर्वृत्तम्-आरीहणकम्। **कृशाश्वादिभ्यश्छण्**। कार्शाश्वीयम्। **ऋश्यादिभ्यः कः**। ऋश्यकम्। **कुमुदादिभ्यष्ठच्**। कुमुदिकम्। **काशादिभ्य इलः**। काशिलः। **तृणादिभ्यः सः**। तृणसम्। **प्रेक्षादिभ्य इनिः**। प्रेक्षी। **अश्मादिभ्यो रः**। अश्मरः। **सख्यादिभ्यो ढञ्**। साखेयम्। **संकाशादिभ्यो ण्यः**। सांकाश्यम्। **बलादिभ्यो यः**। बल्यम्। **पक्षादिभ्यः फक्**। पाक्षायणः। **पथः पन्थ च**। पान्थायनः। **कर्णादिभ्यः फिञ्**। कार्णायनिः। **सुतंगमादिभ्य इञ्**। सौतंगमिः। **प्रगदिनादिभ्यो ञ्यः**। प्रागद्यः। **वराहादिभ्यः कक्**। वाराहकः। **कुमुदादिभ्यष्ठक्**। कौमुदिकः। **जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुर[2]र्थिकस्य लुप्। **लुपि युक्तवद्[3]व्यक्तिवचने** ।१।२।५१। लुपि

१ 'तदस्मिन्नस्तीति देशे तन्नाम्नि' 'तेननिर्वृत्तम्' 'तस्य निवासः' 'अदूरभवश्च' इति चतुर्ष्वर्थेषु इत्यर्थः। चतुर्णामर्थानां समाहारः चतुरर्थी। २ चतुर्ष्वर्थेषु भवः—चातुरर्थिकः। अध्यात्मादित्वाठ्ठञ्। ३ युक्तवदित्यस्यार्थमाह—प्रकृतिवदिति। व्यक्तिः—लिङ्गम्।

सति प्रकृतिवल्लिङ्गवचने स्तः। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः। **वरणादिभ्यश्च ।४।२।८२।** अजनपदार्थ आरम्भः। [1]वरणानामदूरभवं नगरं वरणाः। **शर्कराया वा ।४।२।८३।** अस्याश्चातुरर्थिकस्य लुप्स्यात्। **ठक्छौ च ।४।२।८४।** शर्कराया एतौ स्तः। कुमुदादौ वराहादौ च पाठसामर्थ्यात्पक्षे ठच्ककौ। वाग्रहण-सामर्थ्यात्पक्षे औत्सर्गिकोऽण्। तस्य लुब्विकल्पः। षड् रूपाणि शर्करा। शार्करिकम्। शार्करम्। शर्करीयम्। शर्करिकम्। शार्करकम्। **नद्यां मतुप् ।४।२।८५।** चातुरर्थिकः। [2]इक्षुमती। **कुमुदनडवेतसेभ्यो ड्मतुप् ।४।२।८७। झयः ।८।२।१०।** मतोर्मस्य वः। [3]कुमुद्वान्। नड्वान्। **मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।८।२।९।** मवर्णावर्णान्तान्मवर्णावर्णोपधायाश्च यवादिवर्जितात्परस्य मतोर्मस्य वः। वेतस्वान्। किंवान्। ज्ञानवान्। विद्यावान्। यशस्वान्। लक्ष्मीवान्। यवादेस्तु—यवमान्। भूमिमान्।

**नडशादाड्ड्वलच् ।४।२।८८।** [4]नड्वलः। [5]शाद्वलः। **शिखाया वलच् ।४।२।८९।** शिखावलं नगरम्। **उत्करादि-**

---

१ वरणा नाम नदी काश्या उत्तरदिशि प्रसिद्धा। अवयवबहुत्वात्पूजार्थं वा बहुवचनम्। परेतु वरणा वृक्षविशेषाः—तेषामदूरभवं नगरमित्यर्थमाहुः।

२ इक्षवः सन्त्यस्यां सा इक्षुमती नदी। उगित्त्वान्ङीप्। ३ कुमुदानि सन्त्यस्मिन् देशे कुमुद्वान् देशः। ४ नडाः सन्त्यस्मिन्देशे नड्वलः।

५ 'शादो जम्बालघासयोः' इति, 'शाद्वलः शादहरिते' इति चामरः।

भ्यश्छः ।४।२।९०। उत्करीयः । **नडादीनां कुक् च** ।४।२।९१। नडकीयम् । **क्रुञ्चा ह्रस्वत्वं च** । क्रुञ्चकीयः । **तक्षन्नलोपश्च** । तक्षकीयः । **इति तद्धिते चातुरर्थिकाः ॥**



## अथ शैषिकाः ।

**शेषे** ।४।२।९२। अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राऽणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । उलूखले क्षुण्ण औलूखलो यावकः । अश्वैरुह्यते आश्वो रथः ।

१ 'शेषे' इति विधिसूत्रमपि अधिकारसूत्रमपि च । ननु चाक्षुषादीनां तस्येदमित्यनेन, दार्षदादीनां 'संस्कृतं भक्षाः' इत्यनेनैव च सिद्धावस्य विधित्वं व्यर्थम् । एवमधिकारस्यापि न प्रयोजनम् । नचास्याधिकारत्वाभावे चतुरर्थ्यामपत्यादिष्वर्थेषु च घादीनां प्रवृत्त्यापत्तिरिति वाच्यम्, 'उत्करादिभ्यश्छः' इत्युत्करादिगणे आर्द्रकशालादीनां पाठेन 'शेषे' इत्यतः प्राचीनेष्वर्थेषु घादयो न प्रवर्त्तन्ते इति ज्ञापनात् । अन्यथा 'वृद्धाच्छः' इत्येव सिद्धेस्तत्र तेषां पाठो व्यर्थ एव स्यात् । न च शेषाधिकाराभावे घादयो जातार्थे एव स्युः सन्निहितत्वात्, भवादिष्वर्थेषु तु नस्युः । शेषाधिकारे तु वक्ष्यमाणेषु सर्वेष्वप्यर्थेषु घादयः सिद्ध्यन्तीति वाच्यम्, 'तत्र जातः' इत्यनन्तरमेव 'प्रावृषष्ठप्' इत्यादिपाठवत् 'राष्ट्रावारपाराद्घखौ' इत्यदीनां पाठे करणीये तदधिकारात्पूर्वं घादीनां पाठादेव वक्ष्यमाणेषु भवादिष्वर्थेषु घादीनां प्रवृत्तेर्लाभादधिकारस्य वैयर्थ्यादिति चेदुच्यते; आर्द्रकादिभ्यो यदि छः स्यात्तर्हि चतुरर्थ्यामेवेति विपरीतनियमस्यापि सम्भवेन आर्द्रकादिपाठेन घादीनामपत्यादिष्वर्थेषु निवृत्तिर्न सम्भवतीति अधिकारस्य आवश्यकत्वम् । चाक्षुषादौ गृह्यमाणत्वप्रकारकबोधाय च विधित्वमावश्यकमिति ।

चतुर्भिरुह्यते चातुरं शकटम्। चतुर्दश्यां दृश्यते चातुर्दशं रक्षः। 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः। **राष्ट्रावारपाराद्घखौ** ।४।२।९३। आभ्यां घखौ स्तः। राष्ट्रे जातादि राष्ट्रियः। अवारपारीणः। **अवारपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम्**। अवारीणः। पारीणः। पारावारीणः। इह[1] प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते। तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते। **ग्रामाद्यखञौ** ।४।२।९४। ग्राम्यः[2]। ग्रामीणः। **नद्यादिभ्यो ढक्** ।४।२।९७। नादेयम्[3]। माहेयम्। वाराणसेयम्। **दक्षिणापश्चात्पुरसस्त्यक्** ।४।२।९८। दाक्षिणात्यः[4]। पाश्चात्यः। पौरस्त्यः। **द्युप्रागपागुदक्प्रतीचो यत्** ।४।२।१०१। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्। **अव्ययात्त्यप्** ।४।२।१०४। **अमेहक्वतसित्रेभ्य एव**। अमात्यः[5]। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः। **कन्थायाष्ठक्** कान्थिकः। **त्यब्नेर्ध्रुव इति वाच्यम्**। नित्यः। **निसो गते**। **ह्रस्वात्तादौ तद्धिते** ।८।३।१०१। ह्रस्वादिणः सस्य षस्तादौ तद्धिते। निर्गतो वर्णाश्रमेभ्यो निष्ट्यः—चाण्डालादिः। **अरण्याण्णः**। आरण्याः सुमनसः। **दूरादेत्यः**। दूरेत्यः। **उत्तरादाहञ्**। औत्तराहः।

---

१ इह = शेषाधिकारे। प्रकृतिविशेषात् = राष्ट्रग्रामनद्यादिरूपात्प्रकृतिविशेषात्। २ ग्रामे जातादि—ग्राम्यः। ३ नद्यां जातादि–नादेयम्। ४ दक्षिणा भवः—दाक्षिणात्यः। ५ अमा = राजसमीपे भवः—अमात्यः–मन्त्री।

**ऐषमोह्यःश्वसोऽन्यतरस्याम्** ।४।२।१०५। एभ्यस्त्यब्वा । पक्षे वक्ष्यमाणौ ट्युट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे शौवस्तिकं वक्ष्यते[1] । **वृद्धाच्छः** ।४।२।११४। शालीयः । **त्यदादीनि च** ।१।१।७४। वृद्धसंज्ञानि स्युः । तदीयः । **वा नामधेयस्य वृद्धसंज्ञा** । देवदत्तीयः । दैवदत्तः । **भवतष्ठक्छसौ** ।४।२।११५। भावत्कः । **सिति च** । तद्धिते पूर्वं पदं स्यात् । जश्त्वम् । भवदीयः । वृद्धादित्यनुवृत्तेः शत्रन्तादणेव —भावतः । **काश्यादिभ्यष्ठञ्ञिठौ** ।४।२।११६। इकार उच्चारणार्थः । काशिकी[2] । काशिका । वैदिकी । वैदिका । **आपदादिपूर्वपदात्कालान्तात्** । आपदादिराकृतिगणः । आपत्कालिकी । आपत्कालिका[3] । **धन्वयोपधाद्वुञ्** ।४।२।१२१। धन्वविशेषवाचिनो यकारोपधाच्च देशवाचिनो वृद्धाद्वुञ् स्यात् । ऐरावतं धन्व—ऐरावतकः । सांकाश्यकाम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ । सांकाश्यकः । काम्पिल्यकः । **नगरात्कुत्सनप्रावीण्ययोः** ।४।२।१२८। कुत्सिते प्रावीण्ये च नगरशब्दाद्वुञ् स्यात् । नागरकः चौरः शिल्पी वा । एतयोः किम् ? नागरा ब्राह्मणाः । **अरण्यान्मनुष्ये** ।४।२।१२९। वुञ् स्यात् । औपसंख्यानिकस्य[4] णस्यापवादः । **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वाच्यम्** ।

---

१ श्वसस्तुट् चेति सूत्रे । २ काश्यां भवा काशिकी । ३ आपत्काले भवा—आपत्कालिकी । ४ अरण्याण्ण इत्यस्य ।

आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा।

**गर्तोत्तरपदाच्छः** ।४।२।१३७। देश इत्येव। वृकगर्तीयम् ॥ **गहादिभ्यश्च** ।४।२।१३८। गहीयः। **युष्मदस्मदोरन्यतरस्यां खञ् च** ।४।३।१। चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वाऽयं युष्मदीयः। अस्मदीयः ॥ **तस्मिन्नणि च युष्माकास्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः खञि अणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः। **तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च। तावकीनः। तावकः। मामकीनः। मामकः। **छे तु—प्रत्ययोत्तरपदयोश्च**।७।२।९८। मपर्यन्तयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च। त्वदीयः। त्वत्पुत्रः। **मध्यान्मः** ४।३।८। मध्यमः ॥ **अ साम्प्रतिके** ।४।३।९। मध्यशब्दादप्रत्ययः साम्प्रतिकेऽर्थे। उत्कर्षापकर्षहीनो मध्यो वैयाकरणः। मध्यं दारु। नातिह्रस्वं नातिदीर्घमित्यर्थः ॥ **द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रसमीपे यो द्वीपस्तद्विषयाद्द्वीपशब्दाद्यञ् स्यात्। द्वैप्यम्। द्वैप्या ॥ **कालाट्ठञ्** ४।३।११। मासिकम्। सांवत्सरिकम्। **अव्ययानां भमात्रे टिलोपः**। सायंप्रातिकः। पौनःपुनिकः। कथं तर्हि 'शार्वरस्य तमसो निषिद्धये' इति **कालिदासः**। 'अनुदितौषसरागः' इति **भारविः**। समानकालीनं प्राक्कालीनमित्यादि च। अपभ्रंशा एव इति **प्रामाणिकाः**[१]। तत्र जात इति यावत्काला-

१ अशुद्धा एवेत्यर्थः। कालाट्ठञिति ठञि हि 'शार्वरिकः' इत्युचितम्। एवम्—'औषसिकः' 'समानकालिकम्' 'प्राक्कालिकम्' इत्युचितमित्याशयः।

धिकारः । **श्राद्धे शरदः ।४।३।१२।** ठञ् स्यात् । ऋत्वणोऽपवादः । शरदि भवं शारदिकं श्राद्धम्[1] । **विभाषा रोगातपयोः ।४।३।१३।** शारदिकः शारदो वा रोगे[2] आतपो वा । **निशाप्रदोषाभ्यां च ।४।३।१४।** ठञ् वा । नैशिकम्[3] । नैशम् । प्रादोषिकम्[4] । प्रादोषम् । **श्वसस्तुट् च ।४।३।१५।** श्वसष्ठञ् वा तुट् च । **द्वारादीनां च ।७।३।४।** एषां न वृद्धिरैजागमश्च । शौवस्तिकम् । **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।४।३।१६।** सन्धिवेलायां भवं सान्धिवेलम् । ग्रैष्मम् ॥ सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । पौर्णमासी । प्रतिपत् । **प्रावृष एण्यः[5] ।४।३।१७।** प्रावृषेण्यः । **वर्षाभ्यष्ठक् ।४।३।१८।** वर्षासु साधुः वार्षिको वासः ॥ **सर्वत्राऽण् च तलोपश्च ।४।३।२२।** हेमन्तादण् तलोपश्च वेदलोकयोः । चकारात्पक्षे ऋत्वण् । हेमन्ते भवं हैमनं हैमन्तं वसनम् ॥ **सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।४।३।२३।** सायमित्यादिभ्यश्चतुर्भ्यः, अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायं भवं सायन्तनम् । चिरन्तनम् । प्राह्णप्रगयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषा-

---

१ कन्यागते सूर्ये पितृपक्षे भवं पित्रुद्देश्येन क्रियमाणं कर्म । २ शीतज्वरादि । ३ निशायां भवं—नैशं, नैशिकञ्च = तमः ।

४ प्रदोषे भवं—प्रादोषिकं—शिवपूजनादिकम् ।

५ ऋत्वणोऽपवादोऽयम् । प्रवर्षतीति प्रावृट् । 'नहिवृति'—इति दीर्घः । प्रावृषि भवः—प्रावृषेण्यः—मेघः । जातेऽर्थे तु प्रावृषिक इति भवति ।

तनम् । दिवातनम् । **चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ।** चिरत्नम् । परुत्नम् । परारित्नम् । **अग्रादिपश्चाड्डिमच् ।** अग्रिमम् । पश्चिमम् । **अन्ताच्च ।** अन्तिमम् । **विभाषा पूर्वाह्णापराह्णाभ्याम् ।४।३।२४।** आभ्यां ट्युट्युलौ वा स्त-स्तयोस्तुट् च । पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । पौर्वाह्णिकम् । आपराह्णिकम् । **तत्र जातः ।४।३।२५।** सप्तमी-समर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीणः । इत्यादि । **प्रावृषष्ठप् ।४।३।२६।** एण्यस्यापवादः । प्रावृषिकः । **प्रायभवः ।४।३।३९।** तत्रेत्येव । स्रुघ्ने प्रायेण बाहुल्येन भवति-स्रौघ्नः । **सम्भूते ।४।३।४१।** स्रुघ्ने संभवति स्रौघ्नः ॥ **कोशाड्ढञ् ।४।३।४२।** कौशेयं वस्त्रम् ॥ **तत्र भवः ।४।३।५३।** स्रुघ्ने भवः स्रौघ्नः । औत्सः । राष्ट्रियः ॥ **दिगादिभ्यो यत् ।४।३।५४।** दिश्यम् । वर्ग्यम् । **शरीरावयवाच्च ।४।३।५५।** दन्त्यम् । कण्ठ्यम् ॥ **दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ४ । ३ । ५६ ।** दार्तेयम् । कलशिर्घटः, तत्र भवं—कालशेयम् ॥ **ग्रीवाभ्योऽञ् च**

---

१ 'पूर्वस्मिन्वत्सरे' इत्यर्थे परुत् ('परके' 'गतवर्षमें')। 'पूर्वतरे वत्सरे' इत्यर्थे परारि ।( 'परारके' 'गतवर्षसे भी पूर्ववर्षमें' )। २ अणादयः = अण-आदयः । 'शेषे' इति अण् , 'उत्सादिभ्योऽञ्' इत्यञ् । घादयः = राष्ट्रा-वारपाराद्घखाविति घादयः । ३ प्रावृषि जातः—प्रावृषिकः । ( वर्साती पौधे आदि )। ४ स्रुघ्न = ( आगरा प्रदेश )।

५ दन्ते भवं दन्त्यं = सकारादि । ६ कण्ठ्यं—ककारादि । ७ दृतिश्चर्म-विकारः (मशक–थैली) । तत्र भवं दार्तेयम् । ८ कालशेयं—दधि, तक्रं वा ।

।४।३।५७। चाड्ढञ् । ग्रैवेयम्[1] । ग्रैवम् ॥ **गम्भीराञ्ञ्यः** ।४।३।५८। गम्भीरे भवं गाम्भीर्यम् । **अव्ययीभावाच्च** ।४।३।५९। परिमुखं भवं—पारिमुख्यम् ॥ **परिमुखादिभ्य एवेष्यते** । नेह—औपकूलः ॥ **अन्तःपूर्वपदाट्ठञ्** ।४।३।६०। अव्ययीभावादित्येव । वेश्मनि इति अन्तर्वेश्मम्[2] । तत्र भवम्—आन्तर्वेश्मिकम् । आन्तर्गणिकम् । **अध्यात्मादेष्ठञिष्यते** । अध्यात्मं[3] भवम्—आध्यात्मिकम् । **अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम् ॥ **जिह्वामूलाङ्गुलेश्छः** ४।३।६२। जिह्वामूलीयम् । अङ्गुलीयम् ॥ **वर्गान्ताच्च** ।४।३।६३। कवर्गीयम् ॥ **तत आगतः** ।४।३।७४। स्रुघ्नादागतः स्रौघ्नः ॥ **ठगायस्थानेभ्यः** ।४।३।७५। शुल्कशालिकः[4] ॥ **विद्यायोनिसम्बन्धेभ्यो वुञ्** ।४।३।७७। औपाध्यायकः । पैतामहकः ॥ **ऋतष्ठञ्** ।४।२।७८। वुञोऽपवादः । हौतृकम् । मातृकम् । भ्रातृकम् । **पितुर्यच्च** ।४।३।७९। चाट्ठञ् । रीङृतः । यस्येति लोपः । पित्र्यम् । पैतृकम् ॥ **गोत्रादङ्कवत्**[5] ।४।३।८०। बिदेभ्य

---

१ कण्ठभूषणम् । ( कण्ठला—कण्ठी ) । २ नपुंसकादणन्यतरस्यामिति समासान्तष्टच् । ३ अनश्चेति टच् । ४ शुल्कं—राजग्राह्यो भागः । ( 'चुङ्गी' 'जकात' 'कर' । शुल्कशाला = चुङ्गीकी चौकी ) । ५ अपत्यप्रत्ययान्तात्तत आगत इत्यर्थेऽङ्कवत्प्रत्ययाः स्युः । अपत्याधिकारादन्यत्र हि लौकिकं गोत्रम् ।

आगतं वैदम्[1] । गार्गम् । दाक्षम् । औपगवकम् । **हेतुमनुष्येभ्यो ऽन्यतरस्यां रूप्यः ।४।३।८१।** समादागतं समरूप्यम् । विषमरूप्यम् । पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तीयम् । दैवदत्तम् । देवदत्तरूप्यम् । **मयट् च ।४।३।८२।** सममयम् । विषममयम् । देवदत्तमयम् । **प्रभवति ।४।३।८३।** हिमवतः प्रभवति[2] हैमवती गङ्गा । **विदूराञ्ञ्यः ।४।३।८४।** विदूरात्प्रभवति वैदूर्यो मणिः । दन्तमध्योऽयं शाद्वलवन्न तु नड्वलवन्मूर्धन्यमध्यः । नन्वर्थाऽसङ्गतिः,—वालवायादसौ प्रभवति, विदूरे तु संस्क्रियते इति चेत्सत्यम्, अत एव समाहितं भाष्ये—'वालवायो[3] विदूरञ्चे'ति । वालवायशब्दः प्रत्ययं लभते विदूरादेशश्च । सूत्रे पठितेनादेशेनानुरूपः स्थानी आक्षिप्यते । **तद्गच्छति पथिदूतयोः[4] ।४।३।८५।** स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा । **अभिनिष्क्रा-**

---

१ सङ्घाङ्केत्यादीना अङ्कार्थे अण् विहित इति इहापि अञन्तायञन्तादिञन्ताच्चाऽण् । २ प्रकाशते । प्रथमं तत्र दृश्यते इति यावत् ।

३ **'वालवायो विदूरञ्च प्रकृत्यन्तरमेव वा ।**

**नवै तत्रेति चेद्ब्रूयाजित्वरीवदुपाचरेत् ॥'** इति हि **भाष्यम्** ।

वालवायशब्दाञ्ञ्यः प्रकृतेर्विदूरादेश इत्येकः पक्षः । यद्वा विदूरशब्दो नगरस्येव पर्वतस्यापि वाचक इति प्रकृत्यन्तरमेव विदूरशब्द इति विदूरादेव ञ्यः । तत्र = पर्वते न वै विदूरशब्दः प्रसिद्ध इति चेद्वैयाकरणानां निकाये पर्वतेऽपि प्रसिद्ध एव । यथा वैश्यसमाजे वाराणस्याः—जित्वरीति नाम्ना व्यवहारस्तथाऽस्माकमपि—पर्वतेऽपि विदूरव्यवहार इति **भाष्यार्थः** ।

४ द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता पन्था दूतो वा भवतीत्यर्थः ।

**मति द्वारम्**[1] ।४।३।८६। स्रुघ्नमभिनिष्क्रामति = गच्छति स्रौघ्नं कान्यकुब्जद्वारम् । **अधिकृत्य कृते ग्रन्थे** ।४।३।८७। शारीरकीयः[2] । शारीरकं भाष्यमिति त्वभेदोपचारात् । **सोऽस्य निवासः** ।४।३।८९। स्रुघ्नो निवासोऽस्य स्रौघ्नः । **तेन प्रोक्तम्** ।४।३।१०१। पाणिनिना प्रोक्तं पाणिनीयम् । **पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः** ।४।३।११०। णिनिः स्यात् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः । **कर्मन्दकृशाश्वादिनिः** ।४।३।१११। कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते कर्मन्दिनो भिक्षवः । कृशाश्विनो नटाः । **उपज्ञाते**[3] ।४।३।११५। पाणिनिना उपज्ञातं पाणिनीयम् । **तस्येदम्** ।४।३।१२०। उपगोरिदम्—औपगवम् । **समिधामाधाने षेण्यण्** । सामिधेन्यो मन्त्रः । **रथाद्यत्** ।४।३।१२१। रथ्यं चक्रम् । **पत्रपूर्वादञ्** ।४।३।१२२। अश्वरथस्येदम्—आश्वरथम् । **हलसीराट्ठक्** ।४।३।१२४। हालिकम् । सैरिकम् । **गोत्रचरणाद्वुञ्** ।४।३।१२६। औपगवकम् । **चरणाद्धर्माम्नाययोरिति वक्तव्यम्** । कालापकः । काठकम् । **संघाङ्कलक्षणेष्वञ्यञिञामण्** ।४।३।१२७। **घोषग्रहणमपि कर्तव्यम्** । अञ् । बैदः संघोऽङ्को घोषो वा । बैदं लक्षणम् । यञ् । गार्गः ।

---

१ द्वितीयान्तात्प्रत्ययः स्यान्निष्क्रामति तद् द्वारञ्चेत् । २ शरीरमेव शरीरकम् । तत्सम्बन्धात् शरीरको जीवात्मा । तमधिकृत्य कृतो ग्रन्थः—शारीरकीयः । ३ विनोपदेशं ज्ञातम्—उपज्ञातम् ।

गार्गम् । इञ् । दाक्षः । दाक्षम् । परम्परासंबन्धोऽङ्कः, साक्षात्तु लक्षणम् । **इति तद्धिते शैषिकाः ।**

**तस्य विकारः ।४।३।१३४। अश्मनो विकारे टिलोपो वक्तव्यः ।** अश्मनो विकार आश्मः[1] । भास्मनः । मार्त्तिकः[2] । **अवयवे च प्राण्यौषधिवृक्षेभ्यः । ४।३।१३५ ।** चाद्विकारे । मयूरस्य विकारोऽवयवो वा मायूरः । मौर्वम्[3] । काण्डं भस्म वा—पैप्पलम्[4] । **त्रपुजतुनोः षुक् ।४।३।१३७।** आभ्यामण् एतयोः षुक् च । त्रापुषम् । जातुषम् । **ओरञ् ।४।३।१३९।** दैवदारवम् । **अनुदात्तादेश्च ।४।३।१४०।** अञ् । कापित्थम्[5] । **पलाशादिभ्यो वा ।४।३।१४१।** अञ् । पालाशम् । खादिरम् । **शम्याः ष्लञ् ।४।३।१४२।** शामीलम्[6] । **मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।४।३।१४३।** प्रकृतिमात्रान्मयड्वा स्याद्विकारावयवयोः । आश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् ? मौद्गः सूपः । कार्पासमाच्छादनम्[7] ।

---

१ अश्मा = पाषाणः । २ मृत्तिकाया विकारः मार्त्तिकः । ३ मूर्वा—ओषधिभेदः । मूर्वाया विकारः—मौर्वम् ।

४ पिप्पलस्य अवयवः काण्डं—दण्डः—पैप्पलम् । पिप्पलस्य विकारो भस्म पैप्पलमिति विवेकः । केचित्तु मौर्वं काण्डं भस्म वेत्यन्वयमिच्छन्ति । तन्नातीवोचितं, मूर्वायाः काण्डस्यासम्भवात् । ५ कपौ तिष्ठतीति कपित्थः । 'सुपि स्थः' इति कः । कृदुत्तरपदप्रकृतिस्वरेणास्यान्तोदात्ततयाऽनुदात्तं पदमितिशेषनिघातेनानुदात्तादिरयम् । ६ शम्या अवयवो विकारो वा शामीलम् । ७ कार्पासस्य विकारः—कार्पासम् ।

**नित्यं वृद्धशरादिभ्यः** ।४।३।१४४। आम्रमयम् । शरमयम् । एकाचो नित्यम् । वाङ्मयम् । **गोश्च पुरीषे** ।४।३।१४५। गोमयम् । **एण्या ढञ्** ।४।३।१५९। ऐणेयम् । एणस्य तु ऐणम् । **गोपयसोर्यत्** ।४।३।१६०। गव्यम् । पयस्यम् । **फले लुक्** ।४।३।१६३। विकारावयवप्रत्ययस्य । **लुक्तद्धितलुकि** ६।५।७। उपसर्जनस्त्रीप्रत्ययस्य । आमलक्याः फलम् आमलकम् । **प्लक्षादिभ्योऽण्** ।४।३।१६४। विधानसामर्थ्यान्न लुक् । प्लाक्षम् । **न्यग्रोधस्य च केवलस्य** ।७।३।५। अस्य न वृद्धिरैजागमश्च । नैयग्रोधम् । **जम्ब्वा वा** ।४।३।१६५। अण् फले । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । **लुप् च** ।४।३।१६६। जम्ब्वाः फलप्रत्ययस्य लुब्वा स्यात् । **लुपि युक्तवद्व्यक्तिवचने** । जम्बूः । **फलपाकशुषामुपसंख्यानम्**[1] । व्रीहयः[2] । मुद्गाः । **पुष्पमूलेषु बहुलम्**[3] । मल्लिकायाः पुष्पं मल्लिका[4] । जात्याः पुष्पं जातिः । विदार्याः मूलं विदारी । बहुलग्रहणान्नेह—पाटलानि[5] पुष्पाणि । साल्वानि[6] मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् । **हरीतक्यादिभ्यश्च**

१ फलानां पाकेन शुष्यन्ति फलपाकशुषः=ओषधयो व्रीहिधान्यादयः। तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुबित्यर्थः । २ व्रीहीणां फलानि—व्रीहयः । मुद्गानां फलानि मुद्गाः । बिल्वाद्यणो लुप् ।

३ विकारावयवप्रत्ययस्य लुबित्यर्थः । ४ अनुदात्तलक्षणस्याञो लुप् ।

५ बिल्वादित्वादण् । ६ अनुदात्तादित्वादञ् । फिट्स्वरेणान्तोदात्ततया शेषनिघातेनास्याऽनुदात्तादित्वात् ।

।४।३।१६७। एभ्यः फलप्रत्ययस्य लुप्। **हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्** । हरीतक्याः फलानि हरीतक्यः। **इति विकारार्थकाः। इति प्राग्दीव्यतीयाः।**

## अथ ठगधिकारः।

**प्राग्वहतेष्ठक्** ।४।४।१। तद्वहतीत्यतः प्राक् ठगधिक्रियते। **तदाहेति माशब्दादिभ्य उपसंख्यानम्**। मा शब्दः कारि इति य आह स माशब्दिकः[1]। **आहौ प्रभूतादिभ्यः**। प्रभूतमाह प्राभूतिकः। पार्यासिकः। **पृच्छतौ सुस्नातादिभ्यः**। सुस्नातं पृच्छति सौस्नातिकः। सौखशायनिकः[2]। अनुशतिकादिः। **गच्छतौ परदारादिभ्यः**। पारदारिकः। गौरुतल्पिकः। **तेन दीव्यति खनति जयति जितम्** ।४।४।२। अक्षैर्दीव्यति खनति जयति वा आक्षिकः। अक्षैर्जितम्—आक्षिकम्। **संस्कृतम्** ।४।४।३। दध्ना संस्कृतं दाधिकम्। मारीचिकम्। **तरति** ।४।४।५। उडुपेन तरति—औडुपिकः।

**गोपुच्छाट्ठञ्** ।४।४।६। गौपुच्छिकः। **नौद्व्यचष्ठन्** ।४।४।७। नाविकः। घटिकः। **चरति** ।४।४।८। हस्तिना चरति हास्तिकः। दध्ना चरति दाधिकः। शकटेन चरति शाकटिकः। **पर्पादिभ्यः ष्ठन्** ।४।४।१०। पर्पेण चरति पर्पिकः। येन पीठेन पङ्गवश्चरन्ति स पर्पः। आश्विकः। रथिकः। **श्वगणाट्ठञ् च** ।४।४।११। चात्ष्ठन्। **श्वादेरिञि**

---

१ 'राजसंनिधौ कोलाहलो न करणीयः' इत्येवं राजसभादिसु वक्ता राजपुरुषो माशब्दिकः। २ सुखशयनं पृच्छति।

।७।३।८। ऐज् न । श्वाभस्त्रिः । **इकारादावितिवाच्यम्**[1] । श्वगणेन चरति श्वागणिकः । श्वगणिकः । **वेतनादिभ्यो जीवति** ।४।४।१२। वेतनेन जीवति वैतनिकः । धानुष्कः । **हरत्युत्सङ्गादिभ्यः** ।४।४।१५। उत्सङ्गेन हरति औत्सङ्गिकः । **भस्त्रादिभ्यः ष्ठन्** ।४।४।१६। भस्त्रया हरति भस्त्रिकः । षित्वान् ङीष्—भस्त्रिकी । **विभाषा विवधात्** ।४।४।१७। ष्ठन् । पक्षे ठक् । विवधेन हरति विवधिकः । एकदेशविकृतत्वाद्वीवधादपि । वैवधिकः । विवध—वीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये[2] काष्ठे वर्तेते । **निर्वृत्तेऽक्षद्यूतादिभ्यः** ।४।४।१९। अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरम् । **संसृष्टे** ।४।४।२२। दध्ना संसृष्टं दाधिकम् ।

**लवणाल्लुक्** ।४।४।२४। लवणेन संसृष्टो लवणः सूपः । **मुद्गादण्** ।४।४।२५। मौद्ग ओदनः । **उञ्छति** ।४।४।३२। बदराण्युञ्छति बादरिकः । **रक्षति** ।४।४।३३। समाजं रक्षति सामाजिकः । **शब्ददर्दुरं करोति** ।४।४।३४। शब्दं करोति शाब्दिकः[3] । दार्दुरिकः । **पक्षिमत्स्यमृगान् हन्ति** ।४।४।३५। स्वरूपस्य पर्यायाणां विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति—पाक्षिकः । शाकुनिकः । मायूरिकः ।

---

१ 'इञि' इत्यपहाय इकारादाविति वक्तव्यमित्यर्थः । तेन ठञि परतोऽपि ऐज्निषेधः सिध्यति ।

२ 'वहंगी' 'कावड' इति ख्याते । ३ प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः । ४ दर्दुरो मृत्तिकाकृतो वाद्यभाण्डविशेषः । तं करोति—दार्दुरिकः = कुलालः ।

मात्स्यिकः । मैनिकः[1] । शाकुनिकः । मार्गिकः[2] । हारिणिकः । सारङ्गिकः । **धर्मं चरति** ।४।४।४१। धार्मिकः । **अधर्माच्चेति वक्तव्यम्**[3] । आधर्मिकः । **तदस्य पण्यम्**[4] ।४।४।५१। अपूपाः पण्यमस्य आपूपिकः । **लवणाट्ठञ्** ।४।४।५३। लावणिकः । **शिल्पम्** ।४।४।५५। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । **प्रहरणम्** ।४।४।५७। असिः प्रहरणमस्य आसिकः । धानुष्कः । **शक्तियष्ट्योरीकक्** ।४।४।५९। शाक्तीकः । याष्टीकः । **अस्तिनास्तिदिष्टं मतिः**[5] ।४।४।६०। अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्तीति मतिर्यस्य स नास्तिकः । दिष्टमिति मतिर्यस्य स दैष्टिकः[6] । **शीलम्** ।४।४।६१। अपूपभक्षणं शीलं यस्य स आपूपिकः । **छत्रादिभ्यो णः** ।४।४।६२। गुरोर्दोषाणामावरणं छत्रं तच्छीलमस्येति छात्रः । **तत्र नियुक्तः** ।४।४।६९। आकरे नियुक्तः—आकरिकः[7] । **निकटे वसति** ।४।४।७३। नैकटिको भिक्षुः[8] । **इति ठगधिकारः** ।

## अथ प्राग्घितीयाः ।

**प्राग्घिताद्यत्** ।४।४।७५। तस्मै हितमित्यतः प्राग् यदधिक्रियते । **तद्वहति रथयुगप्रासङ्गम्** ।४।४।७६। रथं वहति

१ मीनं हन्ति मैनिकः । २ मृगं हन्ति मार्गिकः । ३ ग्रहणवतेति तदन्तविधिनिषेधात्तदन्तविधेरभावादप्राप्ते वचनम् । ४ विक्रेयद्रव्यम् ।

५ अस्तिनास्ती एतौ निपातौ । ६ दैवं = भाग्यं, तत्परायणः । दैववादी वा । ७ आकराध्यक्षः । ( खानका अध्यक्ष ) । ८ भिक्षुका ग्रामस्य निकटे निवसन्ति । भिक्षार्थमेव च ग्रामे प्रविशन्ति ।

रथ्यः । युग्यः[1] । वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते स प्रासङ्गः । तं वहति—प्रासङ्ग्यः । **धुरो यड्ढकौ** ।४।४।७७। धुर्यः । धौरेयः । **हलसीराट्ठक्** ।४।४।८१। हलं वहति हालिकः । सैरिकः । **विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत्, न चेत्तत्र धनुष्करणम् । पादौ विध्यन्ति पद्याः[2] शर्कराः । **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्याऽऽनाम्यसमसमितसंमितेषु** ।४।४।९१। नावा तार्यं नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं[3] मूल्यम् । मूलेन समो मूल्यः । सीतया संमितं सीत्यं क्षेत्रम् । तुलया संमितं[4] तुल्यम् । **तत्र साधुः**[5] ।४।४।९८। सामसु साधुः सामन्यः । अग्र्यः । कर्मण्यः । शरण्यः । **सभाया यः** ।४।४।१०५। सभ्यः । **इति यतोऽवधिः ।**

## अथ छयतोरधिकारः ।

**प्राक् क्रीताच्छः** ।५।१।१। तेन क्रीतमित्यतः प्राक् छोऽधिक्रियते । **उगवादिभ्यो यत्** ।५।१।२। प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्याच्छस्यापवादः । **नाभि नभं च** ।

---

१ युगं = रथाङ्गं वहतीत्यर्थः । २ 'पद्यत्यतदर्थे' इति पद्भावः । ३ मूलेन = वणिग्भिर्व्यापारार्थं विनियुक्तेन धनेन स्वातिरिक्तं यल्लाभाख्यं द्रव्यमात्मानं प्रति शेषीक्रियते तत्—आनाम्यम् = लाभः । सीता=हलाग्रं तेन संमितं = निम्नोन्नतादिरहितं कृतम् । ४ संमितं = परिच्छिन्नम् । तुल्यशब्दः समार्थे रूढः । ५ साधुरत्र कुशल एव न तु हितः, तस्मै हितमित्यस्य वक्ष्यमाणत्वात् ।

नभ्योऽक्षः[1]। नभ्यम्—अञ्जनम्[2]। रथनाभावेवेदम्[3]। **शुनः सम्प्रसारणं वा च दीर्घत्वम्**। शुन्यम्। शून्यम्। **ऊधसो नङ् च**। ऊधन्यः[4]। **कम्बलाच्च संज्ञायाम्** ।५।१।३। यत्। कम्बल्यम्—ऊर्णापलशतम्[5]। संज्ञायां किम्? कम्बलीया ऊर्णा। **विभाषा हविरपूपादिभ्यः** ।५।१।४। आमिक्ष्यं[6] दधि। आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। अपूप्यम्। अपूपीयम्। **तस्मै हितम्** ।५।१।५। वत्सेभ्यो हितो वत्सीयो गोधुक्। शङ्कव्यं दारु। गव्यम्। हविष्यम्। **शरीरावयवाद्यत्** ।५।१।६। दन्त्यम्। कण्ठ्यम्। नस्यम्। **अजाविभ्यां थ्यन्** ।५।१।८। अजथ्या यूथिः। अविथ्या। **आत्मन्विश्वजनभोगोत्तरपदात्खः** ।५।१।९। **आत्माध्वानौ खे** ।६।४।१६९। प्रकृत्या स्तः। आत्मने हितं आत्मनीनम्। विश्वजनीनम्। **कर्मधारयादेवेष्यते**। अन्यत्र—विश्वजनीयम्। **पञ्चजनादुपसंख्यानम्**। पञ्चजनीनम्। **कुमति चेति णः**। मातृभोगीणः। **आचार्यादणत्वं च**। आचार्यभोगीनः।

**इति छयतोः पूर्णोऽवधिः।**

---

१ यत्र अक्षदण्डः प्रवेश्यते तच्चक्रमध्यच्छिद्रं नाभिरित्युच्यते, तस्मै हितः—अक्षदण्डः—नभ्य इत्यर्थः। २ रथचक्रादेः प्रगुणीकरणाय तत्र तैलवसाघृतादिकमञ्जनं ( तैलघृताद्यभ्यङ्गः ) प्रदीयते। ३ शरीरावयवेतु परेण 'शरीरावयवाद्यत्' इत्यनेन वाधाद्यदेव। नाभ्यम्।

४ 'ये चाऽभावकर्मणोः' इति प्रकृतिभावान्न 'नस्तद्धिते' इति टिलोपः।

५ पलं—चत्वारः पञ्च वा कर्षाः। ( ५ तोला = १ छटांक )।

६ तप्ते पयसि दध्यावपने सति—आमिक्षा भवति।

## अथ तद्धिते आर्हीयाः ।

**प्राग्वतेष्ठञ्** ।५।१।१८। तेन तुल्यमित्यतः प्राक् ठञ्-धिक्रियते । **आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्** ।५।१।१९। तदर्हतीत्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते गोपुच्छादीन्वर्जयित्वा । **असमासे निष्कादिभ्यः** ।५।१।२०। आर्हादित्येतत्तेन क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्तते । निष्कादिभ्योऽसमासे ठक् आर्हीयेष्वर्थेषु । निष्केण[1] क्रीतमिति नैष्किकम् । समासे तु ठञ् । **परिमाणान्तस्याऽसंज्ञाशाणयोः** ।७।३।१७। उत्तरपदवृद्धिर्ञिदादौ । परमनैष्किकम् । **शताच्च ठन्यतावशते** ।५।१।२१।[2] शत्यम् । शतिकम् । अशते किम् ? **संख्याया अतिशदन्तायाः कन्** ।५।१।२२। आर्हीयेऽर्थे । शतं परिमाणमस्य—शतकः[3] सङ्घः । बहुकः । त्यन्तायास्तु—साप्ततिकः । शदन्तायाः—चात्वारिंशत्कः । **वतोरिड्वा** ।५।१।२३। वत्वन्तात्कन इड् वा । तावत्कः । तावतिकः । **कंसाट्टिठन्** ।५।१।२५। कंसकः । कंसिकी । **अर्धाच्च** । अर्धिकः । **अध्यर्द्धपूर्वाद्द्विगोर्लुगसंज्ञायाम्** ।५।१।२८। अध्यर्धपूर्वाद् द्विगोश्च परस्यार्हीयस्य लुक् । अध्यर्धकंसम् । द्विकंसम् । संज्ञायां तु—पाञ्चकलायिकम्[4] ।

---

१ निष्कः = सुवर्णमुद्रा । ( मोहर या १ तोला सोना ) । २ शताट्ठन् यतौ स्तोऽशतेऽभिधेये आर्हीयेष्वर्थेषु । ३ इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थाच्छतान्न भिद्यते, तेन ठन्यतौ न, किन्तु कनेव । ४ कलायः—मानभेदः । ( मटरके दाना के बराबर ) ।

**तेन क्रीतम्**[1] ।५।१।३७। ठञ् । गोपुच्छेन क्रीतं गौपुच्छिकम् । साप्ततिकम् । ठक्—नैष्किकम् । **तस्येश्वरः** ।५।१।४२। **सर्वपृथिवीभ्यामणञौ** ।५।१।४५। सर्वभूमिपृथिवीभ्यामणञौ स्तः । अनुशतिकादीनां चेति वृद्धिः । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः । **तदस्य परिमाणम्**[2] ।५।१।५७। प्रस्थः परिमाणमस्य प्रास्थिको राशिः । **स्तोमे डविधिः** । पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः । सप्तदशः । सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः—स्तोमः । **पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्** ।५।१।५९। एते रूढिशब्दा निपात्यन्ते । **तदर्हति**[3] ।५।१।६३। श्वेतच्छत्रमर्हति श्वेतच्छत्रिकः । **दण्डादिभ्यो यत्** ।५।१।६६। एभ्यो यत् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः । **तेन निर्वृत्तम्** ।५।१।७९। अह्ना निर्वृत्तम्—आह्निकम् । **इति ठक्ठञोरवधिः** ।

## अथ भावकर्मार्थकाः ।

**तेन तुल्यं क्रिया चेद्वतिः**[4] ।५।१।१५। ब्राह्मणेन तुल्यं

---

१ तृतीयान्तात्क्रीतेऽर्थे यथाविहितं प्रत्ययाः स्युः । २ इह परिमाणपदेन परिच्छेदकमात्रं गृह्यते न तु 'परिमाणं तु सर्वतः' इति परिभाषितं सर्वतोमानमात्रम्, उत्तरसूत्रे ( सङ्ख्यायाः सञ्ज्ञासंघेति सूत्रे ) परिमाणपदेन सङ्ख्याया ग्रहणात् ।

३ द्वितीयान्ताल्लब्धुं योग्यो भवतीत्यर्थे ठञादयः स्युः । ४ तृतीयान्तात्तुल्यमित्यर्थे वतिः, यत्तुल्यं क्रिया चेत्सा भवति । तुल्यमिति च सामान्ये नपुंसकम् ।

ब्राह्मणवदधीते । क्रिया चेत् किम् ? गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः । **तत्र तस्येव** ।५।१।११६। मथुरायामिव मथुरावत्स्रुघ्ने[1] प्राकारः । चैत्रस्येव चैत्रवत् मैत्रस्य गावः ।

**तस्य भावस्त्वतलौ** ।५।१।११९। प्रकृतिजन्यबोधे प्रकारो[2] भावः । गोर्भावः—गोत्वम् । गोता । **त्वान्तं क्लीबम्** । **तलन्तं स्त्रियाम्** । **आ च त्वात्** ।५।१।१२०। 'ब्रह्मणस्त्वः' इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः[3] सह समावेशार्थमिदम् । चकारो[4] नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम्[5] । पुंस्ता[6] । **पृथ्वादिभ्य इमनिज्वा** ।५।१।१२२। वावचनमणादिसमावेशार्थम्[7] । **र ऋतो हलादेर्लघोः** ।६।४।१६१। इष्ठेमेयस्सु । **टेः** ।६।४।१४३। लोप इष्ठेमेयस्सु । पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । पृथोर्भावः । प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् । **वर्णदृढादिभ्यः ष्यञ्च** ।५।१।१२३। चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा । **गुणवचनब्राह्मणादिभ्यः कर्मणि**

---

१ सप्तम्यन्तात्षष्ठ्यन्ताच्च इवार्थे वतिः । २ प्रकारीभूय भासमानो धर्मो गोत्वघटत्वादिरूपः । ३ 'पृथ्वादिभ्य इमनिज्वा' इत्यादिभिः ।

४ अन्यथाऽन्यत्र सावकाशौ त्वतलौ स्त्रीपुंसाभ्यां न स्याताम् । ५ संयोगान्तलोपः । ६ संयोगान्तलोपे 'पुमः खयी'ति रुत्वम् । अनुस्वारानुनासिकौ । रेफस्य विसर्गः । सत्वम् । ७ इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिषु अणः समावेशः । गुणवचनेषु चण्डखण्डादिषु तु ष्यञः समावेशः । बालवत्सादिषु च वयोलक्षणस्य अञः समावेश इति विवेकः । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ ।

**च** ।५।१।१२४। चाद्भावे। जडस्य भावः कर्म वा जाड्यम्। ब्राह्मण्यम्[1]। **अर्हतो नुम् च**। अर्हतो भावः कर्म वा आर्हन्त्यम्। आर्हन्ती। आकृतिगणोऽयम्। **चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्**। चत्वारो वर्णाः—चातुर्वर्ण्यम्[2]। चातुराश्रम्यम्। त्रैवर्ग्यम्। षाड्गुण्यम्। सैन्यम्[3]। सान्निध्यम्। औपम्यम्। त्रैलोक्यम्। इत्यादि। **स्तेनाद्यन्नलोपश्च** ।५।१।१२५। 'न' इति संघातग्रहणत्। स्तेनस्य भावः कर्म वा स्तेयम्। **सख्युर्यः** ।५।१।१२६। सख्यम्। **कपिज्ञात्योर्ढक्** ।५।१।१२७। कापेयम्। ज्ञातेयम्। **पत्यन्तपुरोहितादिभ्यो यक्** ।५।१।१२८। सैनापत्यम्। पौरोहित्यम्। **राजाऽसे**। राजन्शब्दोऽसमासे यकं लभते इत्यर्थः। राज्ञो भावः कर्म वा राज्यम्। समासे तु ब्राह्मणादित्वात् ष्यञ्। आधिराज्यम्। **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** ।५।१।१२९। **प्राणभृज्जातिः**—आश्वम्। **वयोवचनम्**—कौमारम्। औद्गात्रम्। औन्नेत्रम्। सौष्ठवम्। **हायनान्तयुवादिभ्योऽण्** ।५।१।१३०। द्वैहायनम्। त्रैहायनम्। यौवनम्[4]। स्थाविरम्। **श्रोत्रियस्य यलोपश्च**। श्रौत्रम्[5]। कुशलनिपुणचपलपिशुनकुतूहलक्षेत्रज्ञाः—युवादिषु ब्राह्मणादिषु च पठ्यन्ते। कौशल्यम्। कौशलमित्यादि। **इगन्ताच्च लघुपूर्वात्**

---

१ ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम्। कर्म—क्रिया, कार्यञ्च।
२ चत्वारो वर्णाः—चातुर्वर्ण्यम्। ३ सेनैव सैन्यम्।
४ अणि परतः 'अन्' इसि प्रकृतिभावः।
५ श्रोत्रियस्य भावः कर्म वा श्रौत्रम्।

।५।१।१३१। शुचेर्भावः कर्म वा शौचम् । मौनम्¹ । **योपधाद्गुरूपोत्तमाद्वुञ्** ।५।१।१३२। रामणीयकम्² । आभिधानीयकम् । **सहायाद्वा** । साहाय्यम् । साहायकम् । **द्वन्द्वमनोज्ञादिभ्यश्च** ।५।१।१३३। शैष्योपाध्यापिका । मानोज्ञकम् ।

इति भावकर्मार्थकाः ।

( इति नञ्स्नञोरवधिः । )

—:o:—

अथ पाञ्चमिकाः ।

**धान्यानां भवने क्षेत्रे खञ्** ।५।२।१। मुद्गानां भवनं क्षेत्रं मौद्गीनम्³ । **व्रीहिशाल्योर्ढक्** ।५।२।२। व्रैहेयम् । शालेयम् । **यवयवकषष्टिकाद्यत्** ।५।२।३। यव्यम् । यवक्यम् । षष्टिक्यम्⁴ । **विभाषा तिलमाषोमाभङ्गाणुभ्यः** ।५।२।४। यत् । पक्षे खञ् । तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् । **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति** ।५।१।७। सर्वादेः पथ्याद्यन्तात् द्वितीयान्तात्खः । सर्वपथान् व्याप्नोति सर्वपथीनः । सर्वाङ्गीणः । सर्वकर्मीणः । सर्वपत्रीणः । सर्वपात्रीणः । **हैयङ्गवीनं संज्ञायाम्** ।५।२।२३। नवनीते निपातोऽयम्⁵ । तस्य

---

१ मुनेर्भावः कर्म वा मौनम् । २ रमणीयस्य भावः कर्म वा रामणीयकम् । ३ भवत्यस्मिन्–भवनम् । ४ षष्टिको–धान्यविशेषो यो द्वाभ्यां मासाभ्यां पच्यते ।

५ ह्योगोदोहस्य हियङ्गुरादेशो विकारार्थे खञ् च निपात्यते । ह्योगोदोहस्य विकारो हैयङ्गवीनम् । ('नौनी घी' 'चूंटिया घी') ।

**पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ** ।५।२।२४। पीलूनां[1] पाकः—पीलुकुणः। कर्णस्य मूलं—कर्णजाहम्। **पक्षात्तिः** ।५।२।२५। 'मूले' इत्यनुवर्तते। पक्षस्य मूलं पक्षतिः[2]। **तेन वित्तश्चुञ्चुप्चणपौ** ।५।२।२६। यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चस्य नेत्वम्। विद्यया वित्तो विद्याचुञ्चुः। विद्याचणः। **वेः शालच्छङ्कटचौ** । ५ । २ । २८ । क्रियाविशिष्टसाधनवाचकात्स्वार्थे[3]। विस्तृतम्—विशालम्। विशङ्कटम्। **सम्प्रोदश्च कटच्** ।५।२।२९। संकटम्[4]। प्रकटम्[5]। उत्कटम्। चाद्विकटम्। **अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्**। अलाबूनां रजः—अलाबूकटम्। तिलकटम्। **गोष्ठजादयः[6] स्थानादिषु पशुनामभ्यः**। गवां स्थानं—गोगोष्ठम्। **संघाते कटच्**। अवीनां संघातः—अविकटः। **विस्तारे[7] पटच्**। अविपटः। **द्वित्वे गोयुगच्**। द्वावुष्ट्रौ उष्ट्रगोयुगम्। **षट्त्वे षड्गवच्**। अश्वषड्गवम्। **स्नेहे तैलच्**। तिलतैलम्। सर्षपतैलम्। **अवात्कुटारच्च** ।५।२।३०। चात्कटच्। अवाचीनः—अवकुटारः।

---

१ पीलूनि–('पील' इति) मरुदेशे प्रसिद्धानि लघूनि वन्यफलानि।

२ प्रतिपत्तिथिः। पक्षिपक्षमूलञ्च।

३ अनिर्दिष्टार्थत्वादिति भावः। ४ सङ्कटं—संहतम्। सम्बाधमिति यावत्। ५ प्रकटं = प्रसिद्धम्। प्रकाशितम्। उत्कटम्—उद्भूतम्। विकटं—विकृतम्। ६ 'संघाते कटच्' इत्यादीनि वक्ष्यमाणानि अस्यैव प्रपञ्चभूतानि।

७ अप्रसृतावयवः समूहः संघातः। प्रसृतावयवः समूहो विस्तारः।

**संख्यादेर्मट्** ।५।२।४९। डटो मडागमः । पञ्चानां पूरणः— पञ्चमः । नान्तात्किम् ? विंशः[1] । असंख्यादेः किम् ? एकादशः । **षट्कतिकतिपयचतुरां थुक्** ।५।२।५१। डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्याऽसंख्यात्वेऽपि अतएव ज्ञापकात् डट् । कतिपयथः । चतुर्थः । **चतुरश्छयतावाद्यक्षरलोपश्च** । तुरीयः । तुर्यः । **बहुपूगगणसङ्घस्य तिथुक्** ।५।२।५२। डटि । बहुतिथः । **वतोरिथुक्** ।५।२।५३। डटि । यावतिथः । **द्वेस्तीयः** ।५।२।५४। डटोऽपवादः । द्वयोः पूरणो द्वितीयः । **त्रेः संप्रसारणं च** ।५।२।५५। तृतीयः । इह 'हलः' इति दीर्घो न । द्वितीय-तृतीयेतिनिर्देशात् । **विंशत्यादिभ्यस्तमडन्यतरस्याम्** ।५।२।५६। एभ्यो डटस्तमडागमो वा स्यात् । विंशतितमः । विंशः । एकविंशतितमः । एकविंशः । **नित्यं शतादिमासार्धमाससंवत्सराच्च** ।५।२।५७। शतस्य पूरणः—शततमः । मासादेरत एव ज्ञापकात् डट् । मासतमः । **षष्ट्यादेश्चासंख्यादेः** ।५।२।५८। षष्टितमः । संख्यादेस्तु— 'विंशत्यादिभ्यः' इति विकल्प एव । एकषष्टः । एकषष्टितमः । **मतौ च्छः सूक्तसाम्नोः** ।५।२।५९। मत्वर्थे छः । अच्छावाकशब्दोऽस्त्यस्मिन्—अच्छावाकीयं सूक्तम् । वारवन्तीयं साम ।

**श्रोत्रियंश्छन्दोऽधीते** ।५।२।८४। श्रोत्रियः । वेत्यनुवृत्तेः

---

१ विंशतेः पूरणः—विंशः । डटि 'ति विंशतेर्डिति' इति तिलोपः ।

२ एषां थुगागमः स्याड्डटि ।

छान्दसः । **श्राद्धमनेन भुक्तमिनिठनौ** ।५।२।८५। श्राद्धी । श्राद्धिकः । **पूर्वादिनिः** ।५।२।८६। पूर्वं कृतमनेन पूर्वी । **सपूर्वाच्च** ।५।२।८७। कृतपूर्वी । **इष्टादिभ्यश्च** ।५।२।८८। इष्टमनेन इष्टी । अधीती । **अनुपद्यन्वेष्टा**[1] ।५।२।९०। अनुपदमन्वेष्टा[2]—अनुपदी गवाम्[3] । **साक्षाद् द्रष्टरि संज्ञायाम्**[4] ।५।२।९१। साक्षाद्द्रष्टा साक्षी[5] । इति पाञ्चमिकाः ।

## अथ मत्वर्थीयाः ।

**तदस्यास्त्यस्मिन्निति**[6] **मतुप्** ।५।२।९४। गावोऽस्याऽस्मिन्वा सन्ति गोमान् । **तसौ मत्वर्थे** ।१।४।१९। तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । संप्रसारणम्[7] । विदुष्मान् । **गुणवचनेभ्यो मतुपो लुगिष्टः** । शुक्लो गुणोऽस्यास्ति शुक्लः पटः । कृष्णः । **प्राणिस्थादातो लजन्यतरस्याम्**[8] ।५।२।९६। चूडालः[9] । चूडावान् । प्राणिस्थात्किं ? शिखावान्दीपः । **प्राण्यङ्गादेव** । नेह—मेधावान् । **सिध्मादिभ्यश्च**

---

१ अन्वेष्टरि इनिप्रत्ययो निपात्यते । २ पदस्य पश्चात्–अनुपदम् । ३ अनुपदी गवाम् = गवां पदानां पश्चाद्गवामन्वेष्टेत्यर्थः । गवामिति षष्ठी पदापेक्षया । ४ द्रष्टर्यर्थे इनिः स्यात् । ५ 'अव्ययानां भमात्रे टिलोपः' ।

६ तदिति प्रथमान्तादस्य अस्मिन्वा अस्तीत्यर्थे मतुप् स्यात् । इह इतिशब्दाद्विषयविशेषो लभ्यते । तथाहि—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ इति ।

७ वसोः सम्प्रसारणमिति सम्प्रसारणम् । ८ प्राणिवाचकादाकारान्ताल्ल्ज्वास्यात् । ९ 'चूडा शिखा केशपाशः' इत्यमरः ।

**काण्डाण्डादीरन्नीरचौ** ।५।२।१११। काण्डीरः । आण्डीरः । **रजःकृष्यासुतिपरिषदो वलच्** ।५।२।११२। रजस्वला स्त्री । कृषीवलः । 'वले' इति दीर्घः । आसुतीवलः—शौण्डिकः । परिषद्वलः । पर्षदिति पाठान्तरम् । पर्षद्वलः । **अन्येभ्योऽपि दृश्यते** । भ्रातृवलः । पुत्रवलः । शत्रुवलः । 'वले' इत्यत्र सञ्ज्ञायामित्यनुवृत्तेर्नेह दीर्घः । **दन्तशिखात्संज्ञायाम्** ।५।२।११३। दन्तावलो हस्ती । शिखावलः केकी[1] । **अत इनिठनौ** ।५।२।११५। दण्डी । दण्डिकः । **व्रीह्यादिभ्यश्च** ।५।२।११६। व्रीही । व्रीहिकः । **तुन्दादिभ्य इलच्च** ।५।२।११७। चादिनिठनौ, मतुप् च । तुन्दिलः । तुन्दिकः । तुन्दवान् । उदर । पिचण्ड । यव । व्रीहि । इति तुन्दादिः । **रूपादाहतप्रशंसयोर्यप्**[2] ।५।२।१२०। आहतं रूपमस्यास्तीति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्तीति रूप्यो गौः । **अन्येभ्योऽपि दृश्यते** । हिम्याः पर्वताः । गुण्याः ब्राह्मणाः । **अस्मायामेधास्रजो विनिः** ।५।२।१२१। यशस्वी[3] । यशस्वान्[4] । मायावी । मायावान् । व्रीह्यादिपाठान्मायी । मायिकः । स्रग्वी । *** शृङ्गवृन्दाभ्यामारकन्** । शृङ्गारकः । वृन्दारकः । **फलबर्हाभ्यामिनच्**

---

१ मयूरः । २ आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात् । आहतम् = आघातः । ताडनमिति यावत् । (ठप्पा) । ताडनेन निष्पन्नं यद्रूपन्तदपि आहतमित्युच्यते कार्ये कारणोपचारादिति आहतरूपयोः सामानाधिकरण्यमुपपद्यते । ३ 'तसौ मत्वर्थे' इति भत्वाद्रुत्वं न । ४ इहान्यतरस्यां ग्रहणं सम्बध्यते, 'तसौ मत्वर्थे' इत्यत्र यशस्वानिति भाष्योदाहरणात् ।

फलिनः[1] । बर्हिणः[2] । *** हृदयाच्चालुरन्यतरस्याम्** । हृदयालुः[3] । हृदयी । हृदयिकः । हृदयवान् । **शीतोष्णतृप्रेभ्यस्तदसहने** । शीतं न सहते शीतालुः । उष्णालुः । तृप्रः पुरोडाशस्तन्न सहते तृप्रालुः । **तप्पर्वमरुद्भ्याम्** । पर्वतः । मरुत्तः । **ऊर्णाया युस्** ।५।२।१२३। उर्णायुः[4] । **वाचो ग्मिनिः** ।५।२।१२४। वाग्मी । **आलजाटचौ बहुभाषिणि** ।५।२।१२५। **कुत्सिते इति वक्तव्यम्** । कुत्सितं बहु भाषते वाचालः । वाचाटः । यस्तु सम्यग्बहु वदति तत्र वाग्मीत्येव । **स्वामिन्नैश्वर्ये** ।५।२।१२६। ऐश्वर्यवाचकात् स्वशब्दान्मत्वर्थे आमिनच् । स्वामी । **अर्श आदिभ्योऽच्** ।५।२।१२७। अर्शांसि अस्य विद्यन्ते अर्शसः । आकृतिगणोऽयम् । **वातातीसाराभ्यां कुक् च** ।५।२।१२९। चादिनिः । वातकी । अतिसारकी । **पिशाचाच्च** । पिशाचकी । **हस्ताज्जातौ** ।५।२।१३३। हस्ती । **वर्णाद्ब्रह्मचारिणि** ।५।२। १३४। वर्णी । **पुष्करादिभ्यो देशे** ।५।२।१३५। पुष्करिणी । पद्मिनी । देशे किं ? पुष्करवान् करी । **कंशंभ्यां बभयुस्तितुतयसः** ।५।२।१३८। कमित्युदकसुखयोः । शमिति सुखे । आभ्यां सप्त प्रत्ययाः स्युः । युस्यसोः सकारः पदत्वार्थः । कंवः । कंभः । कंयुः । कन्तिः । कन्तुः । कन्तः । कंयः । एवं शंव इत्यादि । **तुन्दिवलिवटेर्भः** ।५।२।१३९। तुन्दिभः । वलिभः । वटिभः ।

---

१ फलिनः = फलवान् । २ बर्हिणः—मयूरः । ३ सहृदयः ।

४ इह सित्त्वात्पदत्वेन यस्येति चेत्याकारलोपो न । उर्णायुः—मेषः ।

**अहंशुभमोर्युस्** ।५।२।१४०। अहंयुः—अहङ्कारवान् । शुभंयुः—शुभान्वितः । इति मत्वर्थीयाः ।



## अथ प्राग्दिशीयाः ।

**प्राग् दिशो विभक्तिः** ।५।३।१। 'दिक्शब्देभ्य—' इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाः स्युः । अथ स्वार्थिकाः[1] प्रत्ययाः । समर्थानामिति प्रथमादिति च निवृत्तं, वेति त्वनुवर्त्तते एव । **किंसर्वनामबहुभ्योऽद्व्यादिभ्यः**[2] ।५।३।२। किमः सर्वनाम्नो बहुशब्दाच्चेति प्राग्दिशोऽधिक्रियते । **पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् वा । **कु तिहोः** ७।२।१०४। किमः कुस्तादौ हादौ च विभक्तौ । कुतः[3] । कस्मात् । **इदम इश्** ।५।३।३। प्राग्दिशीये परे । अस्मात्—इतः । **एतदोऽन्** ।५।३।५। एतदः प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः[4] । यतः । ततः । बहुतः । द्व्यादेस्तु-द्वाभ्याम् । **पर्यभिभ्यां च** । ।३।९। तसिल् । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः । **सप्तम्यास्त्रल्** । ।३।१०। कुत्र । यत्र । तत्र । बहुत्र । **इदमो हः** ।५।३।११। त्रलोऽप-

१ प्रायेण स्वीयप्रकृतेरर्थे भवाः—स्वार्थिकाः ।

२ द्व्यादिपर्युदासात्किमः पृथगुपादानम् । ३ 'न विभक्तौ तुस्माः' इति निषेधात्तस्य हलन्त्यमिति नेत्सञ्ज्ञा । ४ 'अदसो सेः—' इति मुत्वम् ।

वादः । इह । **किमोऽत्** ।५।३।१२। वा[1] स्यात् । **क्वाऽति** ।७।२।१०५। किमः क्वेत्यादेशः । क्व । कुत्र । **इतराभ्योऽपि दृश्यन्ते** ।५।३।१४। पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम्[4] । एवं दीर्घायुः[5] । देवानांप्रियः । आयुष्मान् । **सर्वैकान्यकिंयत्तदः काले दा** ।५।३।१५। सप्तम्यन्तेभ्यः एभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् । **सर्वस्य सोऽन्यतरस्यां दि** ।५।३।६। दादौ प्राग्दिशीये सर्वस्य सो वा । सर्वस्मिन् काले—सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् ? सर्वत्र देशे । **इदमो र्हिल्** ।५।३।१६। सप्तम्यन्तात् । काले इत्येव । हस्यापवादः । **एतेतौ रथोः** ।५।३।४। इदम 'एत' 'इत्' एतौ स्तौ रेफादौ थकारादौच प्राग्दिशीये परे । अस्मिन्काले एतर्हि । काले किम् ? इह देशे । **अधुना** ।५।३।१७। इदमो निपातोऽयम् । **दानीं च** ५।३।१८। इदमो दानींप्रत्ययः काले । इदानीम् । **तदो दा च** ।५।३।१९। तदा । तदानीम् । तदो दावचनमनर्थकं, विहितत्वात् ।

---

१ हलन्त्यमिति तकारस्येत्सञ्ज्ञा । 'न विभक्तौ तुस्माः' इति निषेधस्त्वत्र न प्रवर्त्तते, मकारपरित्राणार्थेन थमोरुकारेण तदनित्यत्वज्ञापनादिति **मनोरमा-कृतः** । २ वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् ।

३ किमः क्वादेशः स्यादति । ४ ततो भवता । तत्र भवता । ततो भवते । तत्र भवते इत्याद्यूह्यम् । ५ ततो दीर्घायुः । तत्र दीर्घायुः । ततो देवानांप्रियः । तत्र देवानांप्रियः । इत्याद्यूह्यम् ।

**अनद्यतने र्हिलन्यतरस्याम्** ।५।३।२१। कर्हि। कदा । यर्हि । यदा । तर्हि । तदा । **एतेतौ रथोः** ।५।३।४। एत इत् एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये । एतस्मिन्काले [1]एतर्हि ।

**सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः** ।५।३।२२। एते निपात्यन्ते। **समानस्य सभावो द्यश्चाहनि** । समानेऽहनि—सद्यः । **पूर्वपूर्वतरयोः पर उदारी च संवत्सरे** । पूर्वस्मिन्वत्सरे परुत् । पूर्वतरे वत्सरे परारि । **इदम इश् समसण् प्रत्ययश्च संवत्सरे** । अस्मिन्संवत्सरे ऐषमः । **परस्मादेद्यव्यहनि** । परस्मिन्नहनि परेद्यवि । **इदमोऽश् द्यश्च** । अस्मिन्नहनि—अद्य । **पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस्** । पूर्वस्मिन्नहनि—पूर्वेद्युः । अन्यस्मिन्नहनि—अन्येद्युः । उभयोरह्नोः—उभयेद्युः । **द्युश्चोभयाद्वक्तव्यः** । उभयद्युः । **प्रकारवचने थाल्** ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् । तेन प्रकारेण तथा । यथा । **इदमस्थमुः** ।५।३।२४। थालोऽपवादः । **एतदोऽपि वाच्यः** । अनेन एतेन वा प्रकारेण [2]इत्थम् । **किमश्च** ।५।३।२५। केन प्रकारेण कथम् । इति प्राग्दिशीयाः ।

---

## अथ प्रागिवीयाः ।

**दिक्शब्देभ्यः सप्तमीपञ्चमी[3]प्रथमाभ्यो दिग्देशकाले-**

---

[1] अत्र एतद एतादेशः। [2] इत्थमित्यत्र—'एतेतौ रथोः' 'एतदः' इत्याभ्याम् एतद इदमश्च इदादेशः । [3] 'यथासङ्ख्यमत्र नेष्यते, अस्वरितत्वात् ।

**अस्तातिः** ।५।३।२७। सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देश-कालवृत्तिभ्यः स्वार्थेऽस्तातिः । **पूर्वाधरावराणामसिपुरधवश्चैषाम्** ।५।३।३९। एभ्योऽस्तात्यर्थेऽसिस्तद्योगे चैषां 'पुर्' 'अध्' 'अव्' इत्यादेशाः स्युः । **अस्ताति च** ।५।३।४०। पूर्वादीनां पुरादयः स्युः । पूर्वस्याम् पूर्वस्याः पूर्वा वा दिक्—पुरः । पुरस्तात् । अधः । अधस्तात् । अवः । **विभाषाऽवरस्य** ।५।३।४१। अस्तातौ अव्वा स्यात् । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम् ? ऐन्द्र्यां वसति । सप्तम्याद्यन्तेभ्यः किम् ? पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् ? पूर्वस्मिन् गुरौ वसति । अस्ताति चेति ज्ञापकादसिरस्तातिं न बाधते । **दक्षिणोत्तराभ्यामतसुच्** ।५।३।२८। अस्तातेरपवादः । दक्षिणतः । उत्तरतः । **विभाषा परावराभ्याम्** ।५।३।२९। परतः । परस्तात् । अवरतः । अवरस्तात् । **अञ्चेर्लुक्** ।५।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात् । **लुक्तद्धितलुकि** । प्राच्यां प्राच्याः प्राची वा दिक्—प्राक् । उदक् । **उपर्युपरिष्टात्** ।५।३।३१। निपातावेतौ[1] । **पश्चात्** ।५।३।३२। तथा । **उत्तराधरदक्षिणादातिः** ।५।३।३४। उत्तरात् । अधरात् । दक्षिणात् । **एनबन्यतरस्यामदूरेऽपञ्चम्याः** ।५।३।३५। उत्तरादिभ्य एनब्वा स्यादवध्यवधिमतोः सामीप्ये, पञ्चम्यन्तात्तु न । उत्तरेण । अधरेण । दक्षिणेन । पक्षे—यथास्वं[2]

1 निपातः । २ यथास्वं = यथासम्भवम् । तदेवं—दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात् ।

प्रत्ययाः । इह केचिद्दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् । **दक्षिणादाच्** ।५।३।३६। अस्तातेर्विषये । दक्षिणा वसति । अपञ्चम्या इत्येव । दक्षिणादागतः । **आहि च दूरे** ।५।३।३७। दक्षिणात् । चादाच् । दक्षिणाहि । दक्षिणा । **उत्तराच्च** ।५।३।३८। उत्तराहि । उत्तरा । **संख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारे[1] वर्तमानात् संख्याशब्दात्स्वार्थे धा स्यात् । चतुर्धा । पञ्चधा । **एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। ऐकध्यम् । एकधा । **द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां 'धा' इत्यस्य धमुञ् वा । द्वैधम् । द्विधा । त्रैधम् । त्रिधा । **एधाच्च** ।५।३।४६। द्वेधा । त्रेधा । **याप्ये पाशप्** ।५।३।४७। कुत्सितो भिषक्—भिषक्पाशः । **तीयादीकक् स्वार्थे वा वाच्यः** । द्वैतीयीकः । द्वितीयः । तार्तीयीकः । तृतीयः । **न विद्यायाः** । द्वितीया विद्येत्येव । **एकादाकिनिच्चासहाये**[2] ।५।३।५२। चात्कन्लुकौ । एकः । एकाकी । एककः । **भूतपूर्वे चरट्** ।५।३।५३। आढ्यो भूतपूर्वः—आढ्यचरः । **षष्ठ्या रूप्य च** ।५।३।५४। षष्ठ्यन्ताद्भूतपूर्वे रूप्यः स्याच्चरट् च । कृष्णस्य भूतपूर्वो गौः—कृष्णरूप्यः । कृष्णचरः । **अतिशायने तम-**

---

१ इह हि विधायामिति वक्तव्ये अर्थग्रहणं विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यादित्येवमर्थम् । तादृशश्चार्थः प्रकार एव । स च क्रियाविषयक एव गृह्यते, अभिधानस्वाभाव्यात्तदाह—क्रियाप्रकारे वर्तमानादिति ।

२ असहायवाचिन एकशब्दादाकिनिच् स्यात् ।

**बिष्ठनौ** ।५।३।५५। अतिशयविशिष्टार्थे एतौ स्तः । अयमेषामतिशयेनढ्या आढ्यतमः । लघुतमः । लघिष्ठः । **तिङश्च** ।५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् । **तरप्तमपौ घः** ।१।१।२२। **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** ।५।४।११। किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु—उच्चैस्तमस्तरुः । **द्विवचनविभज्योपपदे तरबीयसुनौ** ।५।३।५७। द्वयोरेकस्याऽतिशये विभज्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुतरो लघीयान् । उदीच्याः प्राच्येभ्यः पटवः । पटुतराः । पटीयांसः । **अजादी गुणवचनादेव** ।५।३।५८। इष्ठन्नीयसुनौ । नेह—पाचकतरः । पाचकतमः । **प्रशस्यस्य श्रः** ।५।३।६०। अस्य श्रादेशः स्यादिष्ठेयसोः परतः । **प्रकृत्यैकाच्** ।६।४।६३। इष्ठादिष्वेकाच् प्रकृत्या स्यात् । श्रेष्ठः । श्रेयान् । **ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेश इष्ठेयसोः ।

---

१ अवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदाऽस्य तरबीयसुनावपवादौ वक्ष्येते । एवञ्च परिशेषाद्बहूनां मध्ये यदा एकस्य निर्धारणं तत्रायं प्रवर्त्तते इत्याशयः ।

२ अयमेषामतिशयेन लघुर्लघुतमः । लघिष्ठः । ३ अजादी=इष्ठन्नीयसुनौ । एवञ्च इष्ठन्नीयसुनौ गुणोपसर्जनद्रव्यवचनादेव स्त इत्यर्थः । यथा पटिष्ठ इत्यादौ । ४ पाचकशब्दस्य क्रियोपसर्जनद्रव्यवाचकतया गुणोपसर्जनद्रव्यवाचकत्वाभावान्नेह । ५ तेन श्रेष्ठ इत्यादौ यस्येति चेति टेरिति वा टिलोपो न ।

ज्येष्ठः । **ज्यादादीयसः** ।६।४।१६०। 'आदेः परस्य' । ज्यायान् । **वृद्धस्य च** ।५।३।६२। ज्यादेशः—अजाद्योः । ज्येष्ठः । ज्यायान् । **अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३। अजाद्योः । नेदिष्ठः । नेदीयान् । साधिष्ठः । साधीयान् । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः** ।६।४।१५६। एषां यणादिपरं लुप्यते पूर्वस्य च गुण इष्ठादिषु । स्थविष्ठः । यविष्ठः । ह्रसिष्ठः । क्षेपिष्ठः । क्षोदिष्ठः । एवमीयसुन् । ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात्—ह्रसिमा । क्षेपिमा । क्षोदिमा । **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः** ।६।४।१५७। प्रियादीनां प्रादयः स्युरिष्ठादिषु । प्रेष्ठः । स्थेष्ठः । स्फेष्ठः । वरिष्ठः । बंहिष्ठः । गरिष्ठः । वर्षिष्ठः । त्रपिष्ठः । द्राघिष्ठः । वृन्दिष्ठः । एवमीयसुन् । प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्—प्रेमेत्यादि । **बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिष्ठेयसोर्लोपः स्याद्बहोश्च भूरादेशः । भूमा । भूयान् । **इष्ठस्य यिट् च** ।६।४।१५९। बहोः परस्य इष्ठस्य लोपो यिडागमश्च । भूयिष्ठः । **विन्मतोर्लुक्** ।५।३।६५। इष्ठेयसोः परतः ।

---

१ ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात् । २ यण् आदिर्यस्य तच्च तत्परञ्च—यणादिपरम् । परं यणादीत्यर्थः । तेन स्थूलदूरादेरव्यहितस्य लकाररेफादेर्लोपः । परग्रहणात्—यविष्ठो ह्रसिष्ठ इत्यादौ पूर्वस्य यणादेर्लोपो न ।

३ 'इमनिचि' इति शेषः । ४ आदेः परस्येति आदेरेव लोपो भवति ।

५ पूर्वसूत्रं सकलमनुवर्त्तते । तेन बहोर्भूरादेशश्चेत्यपि बोध्यम् ।

६ अत्र इष्ठस्य आदेर्लोपे यकार आगमः ।

अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान्—त्वचिष्ठः। त्वचीयान्। **प्रशंसायां रूपप्** ।५।३।६६। सुबन्तात्तिङन्ताच्च। प्रशस्तः पटुः—पटुरूपः। पचतिरूपम्। **ईषदसमाप्तौ कल्पब्देश्यदेशीयरः** ।५।३।६७। ईषदूनो विद्वान् विद्वत्कल्पः। विद्वद्देश्यः। विद्वद्देशीयः। पचतिकल्पम्। **विभाषा सुपो बहुच् पुरस्तात्तु** ।५।३।६८। ईषदूनः पटुर्बहुपटुः। पटुकल्पः। सुपः किम्? यजतिकल्पम्।

**प्रागिवात्कः** ।५।३।७०। इवे प्रतिकृताविति्यतः प्राक्काधिकारः। **अव्ययसर्वनाम्नामकच् प्राक् टेः** ।५।३।७१। कापवादः। तिङश्चेत्यनुवर्तते। **कस्य च दः** ।५।३।७२। कान्तादव्ययस्य दादेशोऽकच्च। **अज्ञाते** ।५।३।७३। कस्यायमश्वः—अश्वकः। उच्चकैः। नीचकैः। सर्वके। पचतकि। धकित्। **कुत्सिते** ।५।३।७४। कुत्सितोऽश्वः—अश्वकः। **अल्पे** ।५।३।८५। अल्पं तैलं तैलकम्। ह्रस्वो वृक्षो वृक्षकः। **अस्मिन् प्रकरणे हलादौ प्रत्यये द्वितीयादचः परस्य लोपो वा वाच्यः**। देवदत्तकः। देवकः। **लोपः पूर्वपदस्य च**। दत्तकः। **विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः**। देवदत्तः। दत्तः। देवः। सत्यभामा। भामा। सत्या। **कुटीशमीशुण्डाभ्यो रः** ।५।३।८८। ह्रस्वा कुटी कुटीरः। शमीरः। शुण्डारः। **कुत्वा**

---

१ ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्। सच प्रकृतेः प्राग्भवति न तु परत इत्यर्थः।

डुपच् ।५।३।८९। ह्रस्वा कुतूः कुतुपः । 'कुतूः कृत्तेः स्नेहपात्रं[1] ह्रस्वा सा कुतुपः[2] पुमान्' । **कासूगोणीभ्यां ष्टरच् ।५।३।९०।** आयुधविशेषः कासूः। ह्रस्वा सा—कासूतरी । गोणीतरी । **वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे[3] ।५।३।९१।** वत्सतरः। उक्षतरः । अश्वतरः । ऋषभतरः[4] । **किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ।५।३।९२।** अनयोः कतरो वैष्णवः । यतरः । ततरः । महाविभाषया—कः। यः । सः । **वा बहूनां जातिपरिप्रश्ने डतमच् ।५।३।९३।** 'जातिपरिप्रश्ने' इति प्रत्याख्यातमाकरे । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः । महाविभाषया—यः । सः । **एकाच्च प्राचाम् ।५।३।९४।** डतरच् डतमच्च स्यात् । अनयोरेकतरो मैत्रः । एषामेकतमः ।

## इति प्रागिवीयाः ।

---

## अथ तद्धितेषु स्वार्थिकाः ।

**इवे प्रतिकृतौ ।५।३।९६।** कन्स्यात् । अश्व इव प्रतिकृतिः—अश्वकः । प्रतिकृतौ किं ? गौरिव गवयः । **शाखादिभ्यो यः ।५।३।१०३।** शाखेव शाख्यः । मुख्यः । जघन्यः ।

---

१ चर्मनिर्मितं घृतादिभाण्डम् । (कुप्पा)। २ ह्रस्वाः कुतूः कुतुपः (कुप्पी) ।

३ तनुत्वं न्यूनता, साच प्रवृत्तिनिमित्तस्यैव, प्रत्यासत्तेः। क्वचित्तु तत्सहचरितधर्मान्तराणामपि । यथा अश्वतर इत्यत्र प्रवृत्तिनिमित्तमश्वत्वं, तत्सहचरितस्य अश्वादश्वायामुत्पन्नत्वस्य धर्मस्य तनुत्वे = गर्दभादश्वायामुत्पन्नत्वरूपे वैकल्येऽपि प्रत्ययः । (अश्वतरः = खच्चर) । ४ ऋषभतरः = निर्बलो वृषः ।

अग्र्यः । शरण्यः । **कुशाग्राच्छः ।५।३।१०५।** कुशाग्रीयः । **तत्प्रकृतवचने मयट् ।५।४।२१।** प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं=प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये—प्रकृतमन्नम्-अन्नमयम् । अपूपमयम् । द्वितीये—अन्नमयो यज्ञः । अपूपमयं पर्व । **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।५।४।१७।** अभ्यावृत्तिर्जन्म[1] । क्रियाजन्मगणनवृत्तेः संख्यायाः स्वार्थे कृत्वसुच् । पञ्चकृत्वो भुङ्क्ते । संख्यायाः किम् ? भूरिवारान्भुङ्क्ते । **द्वित्रिचतुर्भ्यः सुच् ।५।४।१८।** कृत्वसुचोऽपवादः । द्विर्भुङ्क्ते । त्रिर्भुङ्क्ते । **रात्सस्य ।** चतुर्भुङ्क्ते । **एकस्य सकृच्च ।५।४।१९।** सकृदादेशः चात्सुच् । सकृद्भुङ्क्ते । **देवतान्तात्तादर्थ्ये यत् ।५।४।२४।** तदर्थ एव तादर्थ्यम् । अत एव स्वार्थे ष्यञ् । अग्निदेवतायै इदम्—अग्निदेवत्यम् । पितृदेवत्यम् । **पादार्घाभ्यां च ।५।४।२५।** पादार्थमुदकं पाद्यम् । अर्घ्यम् । **अतिथेर्ञ्यः ।५।४।२६।** अतिथये इदम्—आतिथ्यम् । **नवस्य नू आदेशस्त्नप्तनप्खाश्च वक्तव्याः ।** स्वार्थे । नूत्नम् । नूतनम् । नवीनम् । **भागरूपनामभ्यो धेयः ।** भागधेयम्[2] । रूपधेयम्[3] । नामधेयम् । **आग्नीध्रसाधारणादञ् ।** आग्नीध्रम् । साधारणम् । **देवात्तल् ।५।४।२७।** देव एव देवता । अवेः

१ अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते तदा षट्कृत्वःप्रवृत्तौ पञ्चकृत्व इति स्यादतोऽत्र विवक्षितार्थमाह—**अभ्यावृत्तिर्जन्मेति** ।

२ भागधेयं=भाग्यम् । ३ रूपधेयं=रूपम् ।

कः ।५।४।२८। अविरेव अविकः[1] । **यावादिभ्यः कन्** ।५।४।२९। याव एव यावकः । मणिकः । **सर्वप्रातिपदिकेभ्यः स्वार्थे कन्** । बहुतरकम् । **मृदस्तिकन्** ।५।४।३९। मृदेव मृत्तिका । **सस्नौ प्रशंसायाम्** ।५।४।४०। रूपपोऽपवादः । प्रशस्ता मृत्—मृत्सा । मृत्स्ना । **प्रज्ञादिभ्यश्च** ।५।४।३८। अण् स्यात् । प्रज्ञ एव प्राज्ञः । दैवतः । बान्धवः[2] । **पूगाञ्ञ्योऽग्रामणीपूर्वात्** ।५।३।११२। स्वार्थे । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः । लौहितध्वज्यः । **ञ्यादयस्तद्राजाः** ।५।३।११९। 'पूगाञ्ञ्यः' इत्यारभ्य उक्ता एतत्सञ्ज्ञाः स्युः । तेनाऽस्त्रियां बहुषु तद्राजस्येति लुक् । लोहितध्वजाः । व्रातेति चफञ् । कापोतपाक्यः । कपोतपाकाः । कौञ्जायन्यः । ब्राध्नायन्यः । इत्यादि । **बह्वल्पार्थाच्छस्कारकादन्यतरस्याम्[3]** ।५।४।४२। बहूनि ददाति—बहुशः । अल्पशः । **बह्वल्पार्थान्मङ्गलामङ्गलवचनम्** । नेह—बहूनि ददात्यनिष्टेषु[4] । अल्पं ददात्याभ्युदयिकेषु[5] । **संख्यैकवचनाच्च वीप्सायाम्** ।५।४।४३। द्वौ द्वौ ददाति द्विशः । माषं माषं ददाति माषशः । प्रस्थशः । परिमाणशब्दा वृत्तावेकार्था एव । संख्यैकवचनात्किम् ? घटं घटं ददाति । वीप्सायां किम् ? द्वौ ददाति । कारकादि-

१ मेषः । २ बन्धुरेव बान्धवः । ३ अर्थग्रहणात्पर्यायग्रहणम् । तेन भूरिश इत्याद्यपि भवति । ४ भयादिनिमित्तेषु राजादिभ्यो दानेषु ।

५ अभ्युदयहेतुषु यज्ञादिषु ।

त्येव । द्वयोर्द्वयोः स्वामी। **प्रतियोगे पञ्चम्यास्तसिः** ।५।४।४४। प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता तदन्तात्तसिः । प्रद्युम्नः कृष्णतः प्रति[1]। **आद्यादिभ्यस्तसेरुपसंख्यानम्** । आदौ—आदितः । मध्यतः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण—स्वरतः । वर्णतः । **कृभ्वस्तियोगे संपद्यकर्तरि च्विः** ।५।४।५०। **अभूततद्भावे इति वक्तव्यम्** । विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे । **अस्य च्वौ** ।७।४।३२। ईत् । अकृष्णः कृष्णः संपद्यते तं करोति कृष्णी करोति[3]। ब्रह्मी भवति । गङ्गी स्यात् । **अव्ययस्य च्वावीत्वं नेति वाच्यम्** । **क्यच्व्योश्च** ।६।४।१०२। हलः परस्यापत्ययस्य लोपः क्ये च्वौ च परतः । गार्गी भवति । **च्वौ च** ।७।४।२६। दीर्घः । शुची भवति । पटू स्यात् । **अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च** ।५।४।५१। चात् च्विः । अरू करोति । उन्मनी करोति । उच्चक्षू करोति । विरही करोति । विरजी करोति । **विभाषा साति कात्स्न्ये** ।५।४।५२। च्वेर्विषये सातिर्वा स्यात्साकल्ये । **सात्पदाद्योः** । कृत्स्नं शस्त्रमग्निः संपद्यते—अग्नि साद्भवति । अग्नी भवति । कात्स्न्ये

१ प्रतिः प्रतिनिधिप्रतिदानयोरिति कर्मप्रवचनीयसञ्ज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति कृष्णशब्दात्पञ्चमी ।

२ सम्पद्यश्चासौ कर्त्ता चेति विग्रहः । सम्पद्यतेः कर्त्तेत्यर्थः । ३ च्वेर्लोपः च्व्यन्तत्वात्स्वरादिनिपातेत्यव्ययत्वम् ।

किम् ? एकदेशेन शुक्ली भवति पटः । **अभिविधौ संपदा च ।५।४।५३।** संपदा कृभ्वस्तिभिश्च योगे सातिर्वा व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । सम्पदा तु वाक्यमेव । अग्निसात् संपद्यते । अग्निसाद्भवति शस्त्रम् । अग्नीभवति । जलसात्संपद्यते । जलीभवति लवणम् । **तदधीनवचने ।५।४।५४।** सातिः कृभ्वस्तिभिः संपदा च योगे । राजसात्करोति । राजाधीनमित्यर्थः । **देये त्रा च ।५।४।५५।** तदधीने देये त्रा स्यात्सातिश्च क्रादियोगे । विप्राधीनं देयं करोति—विप्रत्राकरोति । विप्रत्रा संपद्यते । पक्षे विप्रसात्करोति । देये किम् ? राजसाद्भवति राष्ट्रम् । **देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।५।४।५६।** एभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च त्रा स्यात् । देवत्रा वन्दे[1] रमे वा । बहुलोक्तेरन्यत्रापि । बहुत्रा जीवतो मनः । **अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् ।५।४।५७।** द्व्यच—अवरं न्यूनं न तु ततो न्यूनम् । अनेकाजिति यावत्, तादृशमर्धं यस्य तस्माड्डाच् कृभ्वस्तिभिर्योगे । **डाचि बहुलं द्वे भवतः ।** डाचि विवक्षिते द्वित्वम् । **नित्यमाम्रेडिते डाचीति वक्तव्यम् ।** डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तपयोः पः[2] । पटपटाकरोति । अव्यक्तानुकणात्किम् ? दृषत्करोति । व्यजवरार्धात्किम् ? श्रत्करोति । अवरेति किम् ? खरटखरटा-

---

१ देवान् वन्दे इति देवत्रा वन्दे । देवेषु रमे इति देवत्रा रमे ।

२ तकारपकारयोः स्थाने पररूपेण पकार इत्यर्थः ।

करोति । अनितौ किम् ? पटिति[1] करोति । **कृञो द्वितीयतृतीयशंबबीजात्कृषौ** ।५।४।५८। द्वितीयादिभ्यो डाच् कृञो योग एव । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं तृतीयं कर्षणं करोति द्वितीया करोति । तृतीया करोति । शंबा[2] करोति । बीजा करोति[3] । **संख्यायाश्च गुणान्तायाः** ।५।४।५९। द्विगुणाकरोति क्षेत्रम् । **समयाच्च यापनायाम्** । ५।४।६०। कृषाविति निवृत्तम् । समयाकरोति[4] कालम् । यापयतीत्यर्थः[5] । **सपत्रनिष्पत्रादतिव्यथने** ।५।५।६१। सपत्राकरोति मृगम् । सपुङ्खशरप्रवेशनेन सपत्रं[6] करोतीत्यर्थः । निष्पत्राकरोति । सपुङ्खस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्रं करोतीत्यर्थः । अतिव्यथने किम् ? सपत्रं निष्पत्रं वा करोति भूतलम् । **निष्कुलान्निष्कोषणे**[7] ।५।४।६२। निष्कुलाकरोति दाडिमम् । निर्गतं कुलमन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच् । **सुखप्रियादानुलोम्ये** ।५।४।६३। सुखाकरोति । प्रियाकरोति गुरुम् । अनुकूलाचरणेनानन्द-

---

१ 'अव्यक्तानुकरणस्यात इतौ' इति टेः पररूपम् । २ शम्बशब्दः प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षति शम्बाकरोति । ३ वीजेन सह कर्षति—वीजाकरोति ।

४ कर्त्तव्यस्य देयस्य वाऽवसरप्राप्तिः समयः, तस्यातिक्रमणं यापना ।

५ 'अद्य कार्यान्तरासक्तोऽस्मि, श्वः परश्वो वा भवतां कार्यमवश्यं मयाकरणीयम्, इदं वा मया देयम्' इत्यादिना वहुशः कथनेन कालं यापयतीत्यर्थः । ( 'टालमटोल करना' 'वहाना करना' ) । ६ लक्ष्ये शराः पतन्त्यनेनेति पत्रं—शरपुङ्खवद्धो मयूरादिपिच्छः । ७ आतर्गतस्य सारभागस्य वहिर्निष्कासनं—निष्कोषणम् । ( गूदा निकालना ) ।

यतीत्यर्थः । **दुःखात्प्रातिलोम्ये** ।५।४।६३। शूलाकरोति स्वामिनम् । पीडयतीत्यर्थः । **शूलात्पाके** ।५।४।६५। शूला करोति । शूलेन पचतीत्यर्थः । **सत्यादशपथे** ।५।४।६६। सत्या करोति[1] भाण्डं वणिक् । क्रेतव्यमिति तथ्यं करोतीत्यर्थः । शपथे तु-सत्यं करोति विप्रः । **मद्रात्परिवापणे** ।५।४।६७। मद्रशब्दो मङ्गलार्थः । परिवापणं मुण्डनम् । मद्राकरोति कुमारम् । माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः । **भद्राच्चेति वक्तव्यम्** । भद्रा करोति । अर्थः प्राग्वत् । परिवापणे किम् ? मद्रं करोति । भद्रं करोति । इति तद्धितप्रक्रिया ।

——:०:——

## अथ द्विरुक्तप्रक्रिया ।

**सर्वस्य द्वे** ।८।१।१। इत्यधिकृत्य[2] । **परेर्वर्जने** ।८।१।५। परेर्वर्जनेऽर्थे द्वे स्तः। परि परि वङ्गेभ्यो[3] वृष्टो देवः। **उपर्यध्यधसः सामीप्ये** ।८।१।७। उपर्युपरि ग्रामम् । ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः । अध्यधि सुखम् । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोधो लोकम् । लोकस्याधस्तात्समीपदेशे इत्यर्थः । **वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु**[4] ।८।१।

१ किञ्चिद् द्रव्यदानेन मयैवेदं ग्राह्यमिति निश्चितं करोतीत्यर्थः । ( 'साई देना' 'बयाना देना' ) ।

२ वक्ष्यमाणानां 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोयमिति भावः । एतदर्थरूपमधिकृत्येत्यर्थः ।

३ 'अपपरी वर्जने' इति कर्मप्रवचनीयसञ्ज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । वङ्गान् विहायेत्यर्थः । ४ वाक्यादेरामन्त्रितस्य द्वित्वमसूयादौ ।

८। सुन्दर-सुन्दर वृथा ते सौन्दर्यम्[1]। देव देव वन्द्योऽसि[2]। दुर्विनीत दुर्विनीत इदानीं ज्ञास्यसि। धानुष्क धानुष्क वृथा ते धनुः। चोर चोर घातयिष्यामि त्वाम्। **एकं बहुव्रीहिवत्** ।८।१।९। द्विरुक्त एकशब्दो बहुव्रीहिवत्। तेन सुब्लोपपुंवद्भावौ[3]। एकैकमक्षरम्। इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप्। तच्च एकवचनमेव। एकैकया आहुत्या। **आबाधे च** ।८।१।१०। पीडायां द्वे स्तो बहुव्रीहिवच्च। गतगतः[4]। गतगतौ[5]। **प्रकारे गुणवचनस्य** ।८।१।१२। सादृश्ये द्योत्ये गुणवचनस्य द्वे स्तस्तच्च कर्मधारयवत्। पटुपट्वी। पटुपटुः। पटुसदृशः। ईषत्पटुरिति यावत्। **आनुपूर्व्ये द्वे वाच्ये**। मूलेमूले स्थूलः। **संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः**। सर्प २ बुध्यस्व २। सर्प ३ बुध्यस्व ३। **कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये। समासवच्च बहुलम्**। बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्। **असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः**। अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि। **स्त्रीनपुंसकयोरुत्तरपदस्थाया विभक्ते-**

---

१ असूयायामिदमुदाहरणम्। गुणेषु दोषाविष्करणम्—असूया।

२ इमानि क्रमशः संमत्यादावुदाहरणानि। ३ यद्यप्येतौ सुब्लोपपुंवद्भावौ बहुव्रीहौ विशिष्य न विहितौ तथापि तत्र दृष्टावित्यनयोरतिदेशः सिद्ध्यति। ४ विरहादिपीडया नायिकादेरियमुक्तिः। ५ विरहिणो नायकस्येयमुक्तिः। बहुव्रीहिवद्भावात्पुंवद्भावः।

शम्भावो वाच्यः । अन्योन्याम्, अन्योन्यम्, परस्पराम्, परस्परम्, इतरेतराम्, इतरेतरं वा इमे ब्राह्मण्यौ कुले वा भोजयतः।

**दलद्वये टावभावः क्लीवे चादड्विरहः स्वमोः ।**
**समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम् ॥**

अन्योन्यमित्यादौ दलद्वये टाप्प्राप्तः । अदड्‌डतरेत्यदड् च प्राप्तः । 'अन्योन्यसंसक्तमहस्त्रियामम्', अन्योन्याश्रयः, परस्पराक्षि-सादृश्यम्, अदृष्टपरस्परैरित्यादौ सोर्लुक्[1] च प्राप्तः । सर्वं बाहुलकात्समाधेयम् ।

## इति द्विरुक्तप्रक्रिया ।

—:०:—

## अथ स्त्रीप्रत्ययाः ।

**स्त्रियाम्** ।४।१।३। अधिकारोऽयम् । समर्थानामिति यावत् ।

**अजाद्यतष्टाप्**[2] ।४।१।४। अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात् । अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी[3] । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम् ।

---

१ प्रकृतवार्त्तिकभाष्योदाहरणं, स्त्रियामितिसूत्रे 'अन्योन्यसंश्रयत्वे तत्' इति भाष्यञ्चात्र प्रमाणमिति **दीक्षिताः** । **इति तद्धिताः** । २ अजशब्द आदिर्यस्येति बहुव्रीहिः । अच् आदिर्यस्येति तु नाऽर्थः । 'टावृचि' इत्यत्र 'ऋचि' इति निर्देशात् । अजादिगणपाठसामर्थ्याच्च । अदिति च न स्वरूपग्रहणं, सङ्ख्याया इत्यादिनिर्देशात् । ३ पञ्चानामजानां समाहारः पञ्चाजी । तद्धितार्थेति समासः । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे द्विगोरिति ङीप् ।

**अतः**—खट्वा । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । **संभस्त्राजिनशणपिण्डेभ्यः फलात्** । संफला । भस्त्रफला । इत्यादि । **सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्** । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । * **शूद्रा[1] चाऽमहत्पूर्वा जातिः** । पुंयोगे तु—शूद्री । अमहत्पूर्वा किम् ? महा[2]शूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेपि । कोकिला—जातावपि । **मूलान्नञः** । अमूला । **उगितश्च** ।४।१।६। ङीप्[3] । भवन्ती । पचन्ती । **वनो र च** ।४।१।७। वन्नन्तात्तदन्ताच्च ङीप् स्याद्रश्चाऽन्तादेशः । सुत्वान[4]मतिक्रान्ता अतिसुत्वरी । अतीधीव[5]री । शर्व[6]री । **वनो न हश इति वक्तव्यम्** । अवावा[7] ब्राह्मणी । राजयुध्वा[8] । **बहुव्रीहौ वा** । बहुधीवा । बहुधीवरी । **पादोऽन्यतरस्याम्** ।४।१।८। द्विपदी । द्विपात् । **टाबृचि** ।४।१।९। द्विपदा ऋक् । एकपदा । **मनः** ।४।१।११। मन्नन्तान्न ङीप् । सीमा । सीमानौ । **अनो बहुव्रीहेः** ।४।१।१२। अन्नन्ताद्बहुव्रीहेर्न ङीप् ।

---

१ शूद्रशब्दष्टापमुत्पादयति जातिश्चेद्वाच्या । महत्पूर्वः शूद्रशब्दष्टापं नोत्पादयति । 'जातिश्चेद्वाच्ये'तीहाऽपि सम्बध्यते । तेन महती शूद्रा महाशूद्रेति टाब्भवत्येव । २ 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः ।

३ उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप् स्यात् । ४ 'सुयजोर्ङ्वनिप्' 'अत्यादयः' इति समासः । ५ दधातेः—अन्येभ्योऽपि दृश्यते' इति क्वनिप् । घुमास्थेतीत्त्वम् । ६ शृधातोः—'अन्येभ्योऽपि दृश्यते' इति वनिप् । गुणः । रपरत्वम् । ७ ओणते इति अवावा । वनिप् । विड्वनोरित्यात्त्वम् ।

८ राजानं योधवती राजयुध्वा । 'राजनि युधि कृञः' इति ङ्वनिप् ।

बहुयज्वा। बहुयज्वानौ। **डाबुभाभ्यामन्यतरस्याम्** ।४।१।१३। सूत्रद्वयोपात्ताभ्यां डाब् वा। सीमा। सीमे। सीमानौ। दामे। दामे। दामानौ। बहुयज्वा। बहुयज्वे। बहुयज्वानौ।

**अन उपधालोपिनोऽन्यतरस्याम्** ।४।१।२८। अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्। पक्षे डाब्-निषेधौ। बहुराज्ञी। बहुराज्ञ्यौ। बहुराजे। बहुराजानौ। **प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः** ।७।३।४४। प्रत्ययस्थात्ककारात्पूर्वस्याकारस्येकारः स्यादापि परे स आप्सुपः परो न चेत्। सर्विका। कारिका। अतः किम्? नौका। प्रत्ययस्थात्किम्? शक्नोतीति शका। असुपः किम्? बहुपरिव्राजका नगरी। **मामकनरकयोरुपसंख्यानम्**[1]। मामिका[2]। नरिका[3]। **त्यक्त्यपोश्च**। दाक्षिणात्यिका[4]। इहत्यिका[5]। **न यासयोः** ।७।३।४५। यत्तदोरस्येन्न स्यात्। यका[6]। सका। यकाम्। तकाम्। **त्यकनश्च निषेधः**। उपत्यका[7]। अधित्यका। **आशिषि वुनश्च न**। जीवका[8]। भवका[9]। **उत्तरपदलोपे न**। देवदत्तिका। देवका।

१ इह ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम्। २ 'केवलमामक' इत्यादिना सञ्ज्ञाछन्दसोरेवेति नियमान्न ङीप्। ममेयं मामिका।

३ रात्रौ नरान् कायतीति नरिका = डाकिनी। ४ दक्षिणस्यामदूरे दक्षिणा। 'दक्षिणादाच्'। दक्षिणा भवेति विग्रहे—'दक्षिणापश्चात्पुरसस्त्यक्'। 'किति च' इत्यादिवृद्धिः। टाप्। ततोऽज्ञातार्थे कः। 'केऽणः' इति ह्रस्वः। टाप्। ५ अव्ययात्त्यप्। ६ यत्तदोरव्ययसर्वनाम्नामित्यकच्। त्यदाद्यत्वम्। टाप्। ७ 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्।

८ जीवतात्—जीवका। ९ भवतात्—भवका। 'आशिषि च' इति वुन्।

**क्षिपकादीनां च** । क्षिपका । ध्रुवका । चटका । कन्यका । **तारका ज्योतिषि** । अन्यत्र—तारिका । **वर्णका तान्तवे** । अन्यत्र—वर्णिका । **वर्तका शकुनौ प्राचाम्** । उदीचान्तु—वर्त्तिका । **अष्टका पितृदेवत्ये** । अन्यत्र—अष्टिका । **सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्** । एषां वा अकारो भवतीत्यर्थः । सूतिका । सूतकेत्यादि । **उदीचामातः स्थाने यकपूर्वायाः** ।७।३।४६। यकपूर्वस्य स्त्रीप्रत्ययस्याऽतः स्थाने योऽत् तस्य कात्पूर्वस्येद्वा स्यादापि परे । 'केऽणः' इति ह्रस्वः । आर्यका । आर्यिका । चटकका । चटकिका । आतः किम् ? सांकाश्ये[1] भवा सांकाश्यिका । यकेति किम् ? अश्विका । स्त्रीप्रत्ययस्य किम् ? शुभंयिका ।

**अभाषितपुंस्काच्च** ।७।३।४८। एतस्माद्विहितस्यातः स्थानेऽत इद्वा । गङ्गका । गङ्गिका । **आदाचार्याणाम्** ।७।३।४९। पूर्वसूत्रविषये । गङ्गाका । **अनुपसर्जनात्** ।४।१।१४। अधिकारोऽयं यूनस्तिरित्यभिव्याप्य[2] । **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ।४।१।१५। अनुपसर्जनं यट्टिदादि तदन्तं[3] यददन्तं ततो ङीप् । कुरुचरी[4] । उपसर्जनत्वान्नेह—बहुकुरुचरा ।

१ साङ्काश्यः—पाञ्चालदेशस्थो नगरविशेषः । ('कासगंज'—जिला एटा) ।

२ अतएव बहुयुवा शालेत्यत्र यूनस्तिरिति तिप्रत्ययो न भवति ।

३ टिदादीनां प्रत्ययतया प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । तच्च प्रातिपदिकस्य विशेषणम् । एवम्—'अजाद्यतः' इत्यतोऽत इत्यनुवर्त्तमानं प्रातिपदिकविशेषणं, ततस्तदन्तविधिः । तदेवं—टिदाद्यन्तं यददन्तं प्रातिपदिकमित्यर्थः । तत्र अनुपसर्जनमिति टिदादिविशेषणम् । ४ कुरुषु चरति । चरेष्टः । टित्त्वान्ङीप् ।

नदट्[1]—नदी । देवट्—देवी । सौपर्णेयी[2] । ऐन्द्री[3] । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । **नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्** । स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यंकरणी । तरुणी । तलुनी । **यञश्च** ।४।१।१६। यञन्तात्प्रातिपदिकान्ङीप् । अकारलोपे कृते—**हलस्तद्धितस्य** ।६।४।१५०। हल उत्तरस्योपधाभूतस्य तद्धितयस्य लोप ईति परे । गार्गी । **प्राचां ष्फ तद्धितः** ।४।१।१७। यञन्तात्ष्फो वा स्यात् स्त्रियां स च तद्धितः । **षः प्रत्ययस्य** ।१।३।६। प्रत्ययादिः ष इत्स्यात् आयनेयीनीयीत्यायनादेशः । षित्वसामर्थ्यात्षिद्गौरेति ङीष् गार्ग्यायणी । **वयसि प्रथमे** ।४।१।२०। प्रथमवयवोवाचिनोऽदन्तान्ङीप् । कुमारी । **वयस्यचरमे इति वाच्यम्** । वधूटी । चिरण्टी । **द्विगोः** ।४।१।२१। अदन्तात् द्विगोर्ङीप् । त्रिलोकी । अजादित्वात्—त्रिफला । त्र्यनीका । **अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि** ।४।१।२२। अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्न ङीप् तद्धितलुकि । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । आर्हीयष्ठक् । अध्यर्धेति लुक् । द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणात्तु—द्व्याढकी । तद्धितलुकि किम् ? समाहारे-पञ्चाश्वी । **काण्डान्तात्क्षेत्रे**[4] ।४।१।२३।

---

१ पचादिषु नदडित्यादिनिपातनाट्टित्त्वान्ङीप् । २ सुपर्ण्या अपत्यं स्त्री सौपर्णेयी । सुपर्णीशब्दात् स्त्रीभ्यो ढगिति ढक् । ३ इन्द्रो देवता अस्याः ऐन्द्री ऋक् । 'साऽस्य देवता' इत्यण् । ४ षोडशहस्तमितो दण्डः काण्डम् ।

क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि । द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः । मात्रचः 'प्रमाणे लो द्विगोर्नित्य'मिति लुक् । क्षेत्रे किम् ? द्विकाण्डी रज्जुः । **पुरुषात्प्रमाणेऽन्यतरस्याम्** ।४।१।२४। [1]प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीब्वा स्यात्तद्धितलुकि । द्वौ पुरुषौ[2] प्रमाणमस्या द्विपुरुषी, द्विपुरुषा वा परिखा । **ऊधसोऽनङ्** ।५।४।१३१। ऊधोऽन्तस्य बहुव्रीहेरनङ् स्त्रियाम् । **बहुव्रीहेरूधसो ङीप्** ।४।१।२५। ऊधोन्ताद्बहुव्रीहेर्ङीप् । कुण्डोध्नी । स्त्रियां किम् ? कुण्डोधो धैनुकम् । **दामहायनान्ताच्च** ।४।१।२७। संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् । द्विदाम्नी । द्विहायनी बाला । **त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्** । **वयोवाचकस्यैव हायनस्य ङीप् णत्वं चेष्यते** । त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र—त्रिहायना, चतुर्हायना शाला । **अन्तर्वत्पतिवतोर्नुक्** ।४।१।३२। नान्तत्वान्ङीप् । अन्तर्वत्नी । पतिवत्नी । **गर्भभर्तृसंयोग एवेष्यते** । अन्यत्र तु अन्तरस्त्यस्यां शालायां घटः—(—[3]अन्तर्वती )। पतिवती पृथिवी । **पत्युर्नो यज्ञसंयोगे** ।४।१।३३। पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे । वसिष्ठस्य पत्नी । **विभाषा सपूर्वस्य** ।४।१।३४। पतिशब्दान्तस्य नो वा । गृहपतिः । गृहपत्नी ।

---

१ अपरिमाणान्तत्वान्निषेधे प्राप्ते वचनम् । २ पुरुषशब्दो जातिवचनोऽपि अत्र प्रमाणशब्दसामानाधिकरण्यात्प्रमाणेऽपि वर्तते । ( पुरसा )।

३ अन्तर्वती पतिवतीति प्राचोक्तं प्रत्युदाहरणमयुक्तम्, आद्येऽस्तिसामानाधिकरण्याभावान्मतुपोऽसम्भवात् । द्वितीये वत्वाऽसम्भवादितितु परे ।

दृढपत्नी। दृढपतिः। **नित्यं[1] सपत्न्यादिषु** ।४।१।३५। सपत्नी। एकपत्नी। वीरपत्नी। **पूतक्रतोरै च** ।४।१।३६। पूतक्रतोः स्त्री पूतक्रतायी। **वृषाकप्यग्निकुसितकुसिदानामुदात्तः** ।४।१।३७। एषामुदात्त ऐ आदेशो ङीप् च। वृषाकपेः[2] स्त्री वृषाकपायी। अग्नायी। कुसितायी। कुसिदायी। **मनोरौ वा** ।४।१।३८। मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा ङीप् च। मनायी। मनावी। मनुः। **वर्णादनुदात्तात्तोपधात्तो नः** ।४।१।३९। वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्ताद्वा ङीप् तस्य नः। एता[3]। एनी। रोहिता। रोहिणी। **षिद्गौरादिभ्यश्च** ।४।१।४१। ङीष्। नर्तकी[4]। गौरी। **आमनडुहः स्त्रियां वा वाच्यः**। अनडुही। अनड्वाही। **पिप्पल्यादयश्च**। आकृतिगणोऽयम्। **मत्स्यस्य ङ्याम्**। यलोपः। मत्सी। **जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनाऽयोविकारमैथुनेच्छाकेशवेशेषु**।४।१।४२। एकादशभ्यः क्रमाद्वृत्त्यादिष्वर्थेषु ङीष्। जानपदी वृत्तिश्चेत्[5]। अन्या जानपदा। अञन्तत्वान्ङीपि आद्युदात्तः।

१ आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्।

२ 'शिवविष्णू वृषाकपी'। 'वृषाकपायी श्रीगौर्योः' इति च कोशः।

३ एतशब्दो रोहितशब्दश्च 'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तौ। एवञ्च 'अनुदात्तं पदम्' इत्यनेन शेषनिघातेनानुदात्तान्तता बोध्या। **एनी** = चित्रवर्णा। ४ नृत्यतेः 'शिल्पिनि ष्वुन्' इति ष्वुन्।

५ वर्त्ततेऽनया वृत्तिः—जीविका।

कुण्डी अमत्रं[1] चेत् । कुण्डाऽन्या । गोणी आवपनं[2] चेत् । गोणाऽन्या । स्थली अकृत्रिमा चेत् । स्थलाऽन्या । भाजी श्राणा चेत् । भाजा-अन्या । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । नागी स्थूला चेत् । नागाऽन्या । काली वर्णश्चेत् । कालाऽन्या । नीली अनाच्छादनं चेत् । नीलाऽन्या । नील्या रक्ता शाटीत्यर्थः । कुशी[3] अयोविकारश्चेत् । कुशाऽन्या । कामुकी मैथुनेच्छावती चेत् । कामुकाऽन्या । कबरी केशानां सन्निवेशविशेषश्चेत् । कवराऽन्या । **शोणात्प्राचाम्** ।४।१।४३। शोणी । शोणा । **वोतो गुणवचनात्** ।४।१।४४। उदन्ताद्गुणवाचिनो वा ङीष् । मृद्वी । मृदुः । उतः किम् ? शुचि । गुणेति किम् ? आखुः । **खरुसंयोगोपधान्न** । खरुः[3] । पाण्डुः । **बह्वादिभ्यश्च** ।४।१।४५। वा ङीप् । बह्वी । बहुः । **कृदिकारादक्तिनः** । रात्री । रात्रिः । **सर्वतोऽक्तिन्नर्थादित्येके**[4] । शकटी । शकटिः । **पुंयोगादाख्यायाम्** ।४।१।४८। या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी । **पालकान्तान्न** । गोपालिका । अश्वपालिका । **सूर्याद्देवतायां चाप्** । सूर्यस्य स्त्री देवता सूर्या । देवतायां किम् ? सूरी[5] कुन्ती ।

---

१ अमत्रं भाजनम् । ( वर्त्तन–कुण्डी ) । २ गोणी–शणनिर्मितं धान्यावपनम् । ( 'गोंन' 'बोरी' ) । ३ कुशी–('कुश इति') प्रसिद्धा । ( 'रंभी' 'फाल' ) ।

३ 'खरुः–पतिंवरा कन्या' इत्यमरः । ४ कृतः अक्तोऽपि चेकारात् क्तिन्नर्थभिन्नार्थकान्ङीषित्यर्थः । ५ सूर्यस्य स्त्री सूरी ।

मानुषीयम् । **इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्** ।४।१।४९। एषामानुगागमः स्यात् ङीष् च । इन्द्राणी । **हिमाऽरण्ययोर्महत्त्वे** । महद्धिमं हिमानी । **यवाद्दोषे** । दुष्टो यवो यवानी[1] । **यवनाल्लिप्याम्** । यवनानां लिपिर्यवनानी । **मातुलोपाध्याययोरानुग्वा** । मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी । **आचार्यादणत्वं च** । आचार्यानी । **अर्यक्षत्रियाभ्यां वा स्वार्थे** । अर्याणी । अर्या । क्षत्रियाणी । क्षत्रिया । पुंयोगे तु अर्यी । क्षत्रियी । **क्रीतात्करणपूर्वात्** ।४।१।५०। क्रीतान्तादकारान्तात्करणादेर्ङीष् । वस्त्रक्रीती[2] । क्वचिन्न—धनक्रीता । **क्तादल्पाख्यायाम्** ।४।१।५१। करणादेः क्तान्तादकारान्तान्ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती द्यौः । **बहुव्रीहेश्चान्तोदात्तात्** ।४।१।५२। क्तान्तान्ङीष् । ऊरुभिन्नी । **अस्वाङ्गपूर्वपदाद्वा** ।४।१।५३। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती[3] । सुरापीता । **स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ।४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताद्वा ङीष् । अतिकेशी । अतिकेशा । चन्द्रमुखी । चन्द्रमुखा । संयोगोपधात्तु—सुगुल्फा ।

---

१ यवत्वजातेरभावेऽपि तदाकारानुकृतिः—दोषः । (यवानी = अजवाइन)

२ वस्त्रेण क्रीता—वस्त्रक्रीती गौः ।

३ पीता सुरा यया सा । 'जातिकाल' इति सूत्रवार्तिकाभ्यां निष्ठाया अन्तोदात्तत्वपरनिपातौ ।

**अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।**
**अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथा युतम् ॥ १ ॥**[1]

सुस्वेदा—द्रवत्वात्[2] । सुज्ञाना—अमूर्तत्वात्[3] । सुमुखा शाला—अप्राणिस्थत्वात्[4] । सुशोफा[5]—विकारजत्वात् । सुकेशी सुकेशा वा रथ्या[6]—अप्राणिस्थस्यापि[7] प्राणिनि दृष्टत्वात् । सुस्तनी सुस्तना वा प्रतिमा—प्राणिवत्प्राणिसदृशे[8] स्थितत्वात् । **नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।४।१।५५।** वा ङीष् । तुङ्गनासिकी । तुङ्गनासिका । **पुच्छाच्च ।** सुपुच्छी । सुपुच्छा । **कबरमणिविषशरेभ्यो नित्यम् ।** कबरपुच्छी । **उपमानात्पक्षाच्च पुच्छाच्च ।** उलूकपक्षी शाला । उलूकपुच्छी सेना । **न क्रोडादिबह्वचः ४।१।५६।** क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोयम् । सुजघना । **सहनञ्विद्यमानपूर्वाच्च ।४।१।५७।** न ङीष् । सकेशा । अकेशा । विद्यमाननासिका । **नख-**

---

१ अद्रव्यं मूर्त्तिमत्प्राणिस्थमविकारजं, किञ्च सम्प्रति अप्राणिस्थमपि प्राणिनि क्वचिद् दृष्टं, किञ्च यत् प्राणिवदप्राणिनि स्थितं, यच्चासंयोगोपधमुपसर्जनं स्वाङ्गं तदन्ताद्वा ङीषित्यर्थः । २ अत्र ङीष् न, स्वेदस्य द्रवत्वात् ।

३ अत्र ङीष् न, ज्ञानस्य अमूर्त्तत्वात् । एवमग्रेऽपि योज्यम् ।

४ अत्र ङीष् न —मुखस्य प्राणिभिन्नशालास्थत्वात् ।

५ शोफः = शोथः । ( सूजन ) स्थौल्यं वा । ६ प्रतोली । ( गली ) ।

७ रथ्यायाः प्राणित्वाभावात्तत्र विकीर्णानां केशानामप्राणिस्थत्वेऽपि तेषां केशानां कदाचित् प्राणिस्थतया ङीष्विकल्पो भवत्येवेत्याशयः ।

८ यथा प्राणिनि स्तनयोः स्थितिरेवमेव प्रस्तरप्रतिमायामिति ङीष्विकल्पो भवत्येवेत्याशयः ।

-यस्यां बहुयुवा । युवतीति तु यौतेः शत्रन्तान्[1] ङीपि बोध्यम् ।

इति स्त्रीप्रत्ययाः ।

---

## अथ वैदिकप्रक्रिया ।

**षष्ठीयुक्तश्छन्दसि वा ।४।१।९।** पतिशब्दो घिसंज्ञः । क्षेत्रस्य पतिना[2] वयम् । इह वेति योगं विभज्य छन्दसीत्यनुवर्तते । तेन सर्वे विधयश्छन्दसि वैकल्पिकाः । बहुलं छन्दसीत्यादिरस्यैव प्रपञ्चः । **अयस्मयादीनि च्छन्दसि ।१।४।२०।** साधूनि । भपदसंज्ञाधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम् । तथा च वार्तिकम्—**उभयसंज्ञान्यपीति वक्तव्यमिति ।** ससुष्टुभा सऋक्वता गणेन । पदत्वात्[3]कुत्वम् । भत्वाज्जश्त्वाभावः । नैनं हिन्वन्त्यपि वाजिनेषु । अत्र[4] पदत्वाज्जश्त्वं भत्वात्कुत्वाभावः । **ते प्राग्धातोः । छन्दसि परेऽपि[5] ।१।४।८१। व्यवहिताश्च ।१।४।८२।** हरिभ्यां याह्योक[6] आ । आ मन्द्रैरिन्द्र[7] हरिभिर्याहि । **तृतीया च होश्छन्दसि ।२।३।३।** जुहोतेः कर्मणि

---

१ उगितश्चेति ङीपि युवतीति रूपमित्याशयः ।

२ घित्वादाङो नेति नाभावः । ३ 'ऋच्वता' इत्यत्र पदत्वाच्चोः कुरिति चस्य कुत्वम् । भत्वाच्च जश्त्वेन जकारो नेति भावः । ४ 'वाजिनेषु' इत्यत्र । जश्त्वं = वाचश्चकारस्य 'झलां जशोऽन्ते' इति जकारः । कुत्वाभावः = चोः कुरिति कुत्वाभावः ।

५ ते इत्युपसर्गसञ्ज्ञाः छन्दसि परेऽपि व्यवहिता अपि च प्रयुज्यन्ते इत्यर्थः । ६ आयाहीति लोके । ७ मन्द्रैः—हरिभिर्वाजिभिरायाहीत्यर्थः ।

तृतीया स्याद् द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। **मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्** ।३।२।७१। **श्वेतवहादीनां डस् पदस्येति वक्तव्यम्**। यत्र पदत्वं भावि तत्र ण्विनोऽपवादो डस्वक्तव्य इत्यर्थः। श्वेतवाः[1]। श्वेतवाहौ। श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः। उक्थशासौ। पुरो दास्यते—दीयते पुरोडाः[2]। **अवे यजः** ।३।२।७२। अवयाः। अवयाजौ। अवयाजः। **अवयाः श्वेतवाः पुरोडाश्च** ।८।२।६७। एते संबुद्धौ कृतदीर्घा निपात्यन्ते। चादुक्थशाः। **लिङर्थे लेट्**[3] ।३।४।९७। **सिब्बहुलं लेटि** ।३।१।३४। **इतश्च लोपः परस्मैपदेषु** । ३।४।९७। लेटस्तिङां वा। **लेटोऽडाटौ**। ३।४।९४। स्तो वा[4], तौ च पितौ। **सिब्बहुलं णिद्वक्तव्यः**। वृद्धिः। प्र ण आयूंषि तारिषत्। सुपेशस्करति जोषिषद्धि। आसाविषदर्शसानाय। सिपइलोपस्य चाभावे—पताति विद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति। **स उत्तमस्य**। ३।४।९८। लेट उत्तमस्य वा लोपः। करवावः। करवाव। टेरेत्वम्। **आत ऐ** ।३।४।९५। लेट आकारस्य। सुतेभिः सुप्रयसामादयैते। आतामित्याकारस्य ऐ। **वैतोऽन्यत्र** ।३।४।९६। लेट एकारस्य ऐ स्याद्वा आत ऐ इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्यान्तै। अन्यत्र किम्? सुप्रयसा मादयैते। **उपसंवादाशङ्क-**[5]

१ श्वेता वहन्त्येतं श्वेतवाः—इन्द्रः। अत्वसन्तस्येति दीर्घः।

२ पुरोडाशः। ३ विध्याद्यर्थेषु छन्दसि लेडित्यर्थः। ४ लेटोऽडाटौ वा स्तुः, तौ च पितावित्यर्थः। ५ उपसम्वादः—पणबन्धः ( शर्त, बाज़ी )।

**योश्च ।३।४।८।** पणबन्धे आशङ्कायां च लेट् । अहमेव पशूनामीशै । नेज्जिह्मायन्तो[1] नरकं पताम । **व्यत्ययो बहुलम् ।३।१।८५।** विकरणानां छन्दसि । आण्डा शुष्मस्य भेदति । भिनत्तीति प्राप्ते । जरसा मरते पतिः । म्रियते इति प्राप्ते । इन्द्रो वस्ते नेषतु । नयतेर्लोट् । शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उः सिप् शप् चेति त्रयो विकरणाः ।

**सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।**
**व्यत्ययमिच्छति शास्त्रकृदेषां[2] सोऽपि च सिध्यति बाहुलकेन ॥**

धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । **उपग्रहः**—परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । 'युध्यते' इति प्राप्ते । मधोस्तृप्ता इवासते । 'मधुनः' इति प्राप्ते । नरः पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । वियूयादिति प्राप्ते । **कालः**—कालवाची प्रत्ययः । श्वोऽग्नीनाधास्यवानेन । लुटो विषये लट् । तमसो गा अदुक्षत् । अधुक्षदिति प्राप्ते । मित्र वयं च सूरयः । मित्रा वयमिति प्राप्ते । स्वरव्यत्ययस्तु वक्ष्यते । **कर्तृशब्दः**—कारकमात्रपरः । तथा च

---

१ कौटिल्यं कुर्वतां नरके पातः, सोऽस्माकं माभूदित्यर्थः । इच्छब्दो निपात आशङ्काद्योतकः । २ पाणिनिर्व्यत्ययमिच्छति । सोऽपि = व्यत्ययोपि ।

तद्धाचिनां कृत्तद्धितानां व्यत्ययस्तु—अन्नादायः। अण्विषये अच्। यङो यशब्दादारभ्य लिङ्याशिष्यङिति ङकारेण प्रत्याहारः। तेषां व्यत्ययो भेदतीत्यादिरुक्त एव। **छन्दस्युभयथा** ।३।४।११७। धात्वधिकारोक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञः स्यात्। वर्धन्तु त्वा सुष्टुतयः। वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाण्णिलोपः। विश्रृण्विरे। सार्वधातुकत्वात् श्नुः शृभावश्च। हुश्नुवोरिति यण्। **तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः** ।३।४।९। से—वक्षे रायः। सेन्—तावामेषे। असे—शरदो जीवसे धाः। असेन्—नित्त्वादाद्युदात्तः। क्से—प्रेषे। कसेन्—गवामिव श्रियसे। अध्यै अध्यैन्—जठरं पृणध्यै। पक्षे—आद्युदात्तम्। कध्यै—कध्यैन्—आहुवध्यै। शध्यै। राधसः सह मादयध्यै। शध्यैन्—वायवे पिबध्यै। तवै—दातवा उ। तवेङ्—सूतवे। तवेन्—कर्तवे। **प्रयै रोहिष्यै अव्यथिष्यै** ।३।४।१०। एते निपात्यन्ते। प्रयातुं रोढुम् अव्यथितुमित्यर्थः। **दृशे विख्ये च** ।३।४।११। निपातौ। द्रष्टुं विख्यातुमित्यर्थः। **कृत्यार्थे तवैकेन्केन्यत्वनः** ।३।४।१४। धातोरेते स्युः। तवै—अन्वेतवै। केन्—अवगाहे। केन्य—दिदृक्षेण्यः। त्वन्—कर्त्वम्। **सृपितृदोः कसुन्** ।३।४।१७। तुमर्थे। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जत्रुभ्य आतृदः। **प्रकृत्याऽन्तःपादमव्यपरे** ।६।१।११५। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यान्न तु वकारपरे अति। उप-

प्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तःपादं किम् ? एतास एतेऽर्चन्ति । अव्यपरे किम् ? ते वदन् । **अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च** ।६।१।११६। एषु अव्यपरेऽप्यति एङ् प्रकृत्या । वसुभिर्नो अव्यात् । मित्र महो अवद्यात् । मा शिवासो अवक्रमुः । ते नो अव्रत । शतधारो अयं मणिः । ते नो अवन्तु । कुशिकासो अवस्यवः । **सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः** ।७।१।३९। ऋजवः सन्तु पन्थाः । पन्थान इति प्राप्ते सुः । परमे व्योमन् । व्योमनीति प्राप्ते ङेर्लुक् । धीती । मती । सुष्टुती । धीत्या । मत्या । सुष्टुत्येति प्राप्ते **पूर्वसवर्णदीर्घः** । या सुरथा रथीतमा । यौ सुरथाविति प्राप्ते आ । नताद् ब्राह्मणम् । नतमिति प्राप्ते आत् । या देव विद्म तात्वा । यमिति प्राप्ते । न युष्मे वाजबन्धवः । अस्मे इन्द्रा बृहस्पती । युष्मासु अस्मभ्यमिति प्राप्ते शे । उरुया । धृष्णुया । उरुणा धृष्णुनेति प्राप्ते या । नाभा पृथिव्याः । नाभाविति प्राप्ते डा । ता अनुष्ठ्योच्यावयतात् । आड्यो ड्या । साधुया । साध्विति प्राप्ते याच् । वसन्ता यजेत । वसन्ते इति प्राप्ते आल् । **इयाडियाजीकाराणामुपसंख्यानम्** । उर्विया । उरुणेति प्राप्ते इया । सुक्षेत्रिया । सुक्षेत्रिणेति प्राप्ते डियाच् । 'दृतिं न शुष्कं सरसी शयानम्' । सरस्यामिति प्राप्ते ई । **आज्जसेरसुक्** ।७।१।५०। ब्राह्मणासः । **तन्वादीनां वेयङुवङौ** । तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गो लोकः । सुवर्गो लोकः ।

त्र्यम्बकम् । त्रियम्बकम् । वरेण्यम् । वरेणियम् । 'अतो भिस् ऐस्' । **बहुलं छन्दसि** ।७।१।१०। अग्निर्देवेभिः । **मन्त्रेष्वाङ्यादेरात्मनः** ।६।४।१४१। आत्मन्शब्दस्यादेर्लोप आङि । त्मना देवेषु । अपो भि । **मासश्छन्दसीति वक्तव्यम्**[1] । माद्भिः शरद्भिः । **प्रसमुपोदः पादपूरणे** ।८।१।६। एषां द्वे स्तः । प्र प्रायमग्निः । संसमिद्युवसे । उपोप मे परामृश । किन्नो दुदु हर्षसे । **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** ।८।३।५३। विसर्गस्य सः स्यात् । वाचस्पतिं विश्वकर्माणम् । दिवस्पुत्राय सूर्याय । दिवस्पृष्ठं भन्दमानः । तमसस्पारमस्य । परिवीत इळस्पदे । दिवस्पयो दिधिषाणाः । रायस्पोषं यजमानेषु धत्तम् ।

## इति वैदिकप्रक्रिया ।

---

## अथ स्वरप्रक्रिया ।

**धातोः** ।६।१।१६२। अन्त उदात्तः स्यात् । **अनुदात्तं पदमेकवर्जम्** ।६।१।१५८। परिभाषेयं स्वरविषया । यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यात् । गोपायतं नः । अत्र 'सनाद्यन्ता धातवः' इति धातुत्वे[2] धातुस्वरेण[3] थकारोकार[4] उदात्तः । शिष्टं[5]-

---

१ मासस्तकारो भादौ प्रत्यये छन्दसि । पद्दन्नोमासिति सूत्रेण मासस्य 'मास्' आदेशः । २ गोपायेत्यस्य धातुत्वे । ३ 'धातोः' इत्यनेन । ४ धात्वन्ततया । ५ शिष्टम् = 'गोपा' इत्यत्र ओकार आकारश्चेति द्वयम् ।

मनुदात्तम्। **उदात्तादनुदात्तस्य स्वरितः** ।८।४।६६। इति तकाराकारः स्वरितः। **स्वरितात्संहितायामनुदात्तानाम्** ।१।२।३९। एकश्रुतिः स्यात्। इति नकाराकारः प्रचयः। **अनुदात्तस्य च यत्रोदात्तलोपः** ।६।१।१६१। यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्योदात्तः। देवीं वाचम्। अत्र ङीबुदात्तः[1]। **आद्युदात्तश्च** ।३।१।३। प्रत्ययस्याद्युदात्तः स्यात्। कर्तव्यम्। **अनुदात्तौ सुप्पितौ** ।३।१।४। पूर्वस्यापवादः। यज्ञस्य। न यो युच्छति[2]। शितिपोरनुदात्तत्वे स्वरितप्रचयौ। **चितः** ।६।१।१६३। अन्त उदात्तः स्यात्। **चितः सप्रकृतेर्बह्वकजर्थम्**। चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यान्त उदात्तो वाच्य इत्यर्थः। नभन्तामन्यके समे। यके सरस्वतीम्। तकत्सु ते। **तद्धितस्य** ६।१।१६४। चितस्तद्धितस्यान्त उदात्तः। पूर्वेण सिद्धे ञित्स्वरबाधनार्थम्। कौञ्जायनाः। **कितः** ।६।१।१६५। कितस्तद्धितस्याऽन्त उदात्तः। यदाग्नेयः। **तित्स्वरितम्** ।६।१।१८५। क्व नूनम्। **उपोत्तमं रिति** ।६।१।१२७। रित्प्रत्ययान्तस्योपोत्तममनुदात्तं स्यात्। यदाहवनीये। **ञ्नित्यादि-**

---

१ देवशब्दस्य पचाद्यजन्ततया 'चितः' इत्यन्तोदात्तता। ङीप् च पित्त्वात् सुप्पितौ चानुदात्तावित्यनुदात्तः। तस्मिन्परतश्च यस्येति चेत्यकारस्य लोपः। तत्र अकार उदात्तः, ईकारश्चानुदात्त इति प्रकृतसूत्रप्रवृत्त्या ङीबीकारस्योदात्ततेत्याशयः।

२ युच्छ प्रमादे। धातोरित्यन्तोदात्तः। ततः परः शप्—'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। ततः परस्य तिपस्तु—'स्वरिताद्

**नित्यम्** ।६।१।१९७। ञिदन्तस्य निदन्तस्य चादिरुदात्तः । यस्मिन्विश्वानि पौंस्या । पुंसः कर्मणि ब्राह्मणादित्वात्ष्यञ् । सुते दधिष्व नश्चनः । चायतेरसुन् । चायतेरन्ने ह्रस्वश्चेति चकारादसुनो नुडागमः । **लिति** ।६।१।१९३। लित्प्रत्ययात्पूर्वमुदात्तं स्यात् । चिकीर्षकः । अत्र ईकारस्योदात्तता । इत्यादि प्रयोगमनुसृत्यान्वाख्यातव्यम् । **इति स्वरप्रक्रिया** ।

एषा वरदराजेन बालानामुपकारिका ।
अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी ॥ १ ॥
कृतिर्वरदराजस्य मध्यसिद्धान्तकौमुदी ।
तस्याः संख्या तु विज्ञेया खबाणकरवह्निभिः (३२५०) ॥२॥

इति श्रीवरदराजकृता मध्यसिद्धान्तकौमुदी ।



---

संहितायामनुदात्तानाम्' इत्यनेन ( स्वरितात्परेषामनुदात्तानां संहितायमेकश्रुतिःस्यादित्यर्थकेन ) प्रचयापरपर्याया एकश्रुतिरिति सिद्धम् ।

इति श्रीपण्डितराजमरुमण्डलमार्त्तण्ड**श्रीस्नेहिरामजिशास्त्रिणां** पौत्रेण, पण्डितप्रकाण्ड**श्रीशिवनारायणशास्त्रिणां** पुत्रेण, सतीसार्वभौम**श्रीराजलक्ष्मी**गर्भसम्भूतेन **श्रीगुरुप्रसादशास्त्रिणा** कृतायां मध्यसिद्धान्तकौमुदीबालमनोरमायां स्वरप्रकरणम् । शुभम् ।
( कार्तिकी पूर्णिमा १५।१९९४ वै० )

## ॐ अथ लिङ्गानुशासनम् ॐ

लिङ्गम् । स्त्री । अधिकारसूत्रे एते ॥ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः ।१। एते पञ्चैव स्त्रीलिङ्गाः । अन्यूप्रत्ययान्तो धातुः ।२। अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । मिन्यन्तः ।३। मिनिप्रत्ययान्तः स्त्रियाम् । भूमिः । ग्लानिः ॥ क्तिन्नन्तः ।४। कृतिरित्यादि ॥ ईप्रत्ययान्तश्च ।५। लक्ष्मीः ॥ ऊङाबन्तश्च ।६। कुरूः अजा । य्वन्तमेकाक्षरम् ।७। श्रीः । भूः ॥ विंशत्यादिरानवतेः ।८। इयं विंशतिः ॥ तलन्तः ।९। शुक्लता ॥ भास्स्रुग्दिग्गुष्णिगुपानहः ।१०। इयं भाः ॥ स्थूणोर्णे नपुंसके च ।११। स्थूणा । स्थूणम् ॥ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ।१२। एते स्त्रियां स्युः । इयं शष्कुलिः । अप्सुमनस्समासिकतावर्षाणां बहुत्वं च ।१३। अबादीनां पञ्चानां स्त्रीत्वं स्याद् बहुत्वं च । आप इमाः ॥ ताराधाराज्योत्स्नादयश्च ।१४। इयं तारा ॥ इति स्त्रीलिङ्गाधिकारः ॥

पुमान् । अयमधिकारः ॥ घञबन्तः ।१। पाकः । करः । भावार्थ एवेदम् । घाजन्तश्च ।२। विस्तरः । चयः ॥ भयलिङ्गभगपदानि नपुंसके ।३। भयमित्यादि ॥ नङन्तः ।४। पुंसि स्यात् । यज्ञ इत्यादि ॥ याच्ञा स्त्रियाम् ।५। पूर्वस्यापवादः ॥ क्यन्तो घुः ।६। आधिः । प्रधिः ॥ इषुधिः स्त्री च ।७। चात्पुंसि । इयमयं वा इषुधिः ॥ द्यौः स्त्रियाम् ।८। क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ।९। क्रतुरध्वरः ॥ अभ्रं नपुंसकम् ।१०। पूर्वस्यापवादः ॥ उदन्तः ।११। अयं पुंसि स्यात् । प्रभुः । विभुः ॥ धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ।१२। इयं धेनुः ॥ रुत्वन्तः ।१३। मेरुः । सेतुः ॥ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ।१४। इदं दारु । सक्तुर्नपुंसके च ।१५। सक्तु । सक्तुः । अदन्तः इत्यधिकृत्य ॥ कोपधः ।१६। कोपधोकारान्तः पुंसि स्यात् । स्तवकः । कल्कः ॥ चिबुकादीनि नपुंसके ।१७। चिबुकम् ॥ टोपधः ।१८। अदन्तः पुंसि । घटः । पटः ॥ किरीटादीनि नपुंसके च ।१९। किरीटम् । किरीटः ॥

**णोपधः ।२०।** अदन्तः पुंसि । गणः । पाषाणः ॥ **ऋणादीनि नपुंसके ।२१।** ऋणम् ॥ **कार्षापणादीनि नपुंसके च ।२२।** चात्पुंसि ॥ **थोपधः ।२३।** अदन्तः पुंसि । रथः । यूथः ॥ **नोपधः ।२४।** अदन्तः पुंसि । इनः । फेनः । **जघनादीनि नपुंसके ।२५।** जघनम् ॥ **पोपधः ।२६।** अदन्तः पुंसि । दीपः । पर्पः ॥ **पापादीनि नपुंसके ।२७।** पापम् ॥ **शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ।२८।** चात्पुंसि ॥ **भोपधः ।२९।** कुम्भः । सरभः ॥ **तलभं नपुंसकम् ।३०। जृम्भं नपुंसके च ।३१। मोपधः ।३२।** होमः । धर्मः ॥ **रुक्मादीनि नपुंसके ।३३।** इदं रुक्ममित्यादि । **संग्रामादीनि नपुंसके च ।३४।** चात्पुंसि । संग्रामः । संग्रामम् । **योपधः ।३५।** हयः । समयः । **किसलयादीनि नपुंसके ।३६। गोमयादीनि नपुंसके च ।३७। रोपधः ।३८।** क्षुरः । खुरः । अङ्कुरः । **द्वारादीनि नपुंसके ।३९।** इदं द्वारम् ॥ **शुक्रमदेवतायाम् ।४०।** देवतायां तु शुक्रः ॥ **षोपधः ।४१।** वृषः । वृक्षः ॥ **शिरीषादीनि नपुंसके ।४२।** इदं शिरीषम् ॥ **सोपधः ।४३।** वायसः । महानसः ॥ **पनसबिसबुससाहसानि नपुंसके ।४४। चमसादीनि नपुंसके च ।४५।** चात्पुंसि ॥ **कंसं चाप्राणिनि ।४६।** कंसः कंसं वा पानपात्रम् । प्राणिनि तु कंस औग्रसेनिः ॥ **रश्मिदिवाभिधानानि ।४७।** अत इति निवृत्तम् ॥ **दीधितिः स्त्रियाम् ।४८। दिनाहनी नपुंसके ।४९।** दिनं अहः ॥ **मानाभिधानानि ।५०।** कुडवः ॥ **द्रोणाढकौ नपुंसके च ।५१।** चात्पुंसि ॥ **खारीमानिके स्त्रियाम् ।५२।** इयं खारिः ॥ **दाराऽक्षतलाजाऽसूनां बहुत्वं च ।५३।** इमे दाराः । **मरुद्गरुत्तरदृत्विजः ।५४।** अयं मरुत् ॥ **ध्वजगजमुञ्जपुञ्जाः ।५५।** एते पुंसि ॥ **वंशांशपुरोडाशाः ।५६।** अयं वंशः ॥ **ह्रदकन्दकुन्दबुद्बुदशब्दाः ।५७।** अयं ह्रदः ॥ **अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ।५८।** अयमर्घः ॥ **सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ।५९। पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः ।६०।** अयं पल्लव इत्यादि ॥ **ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ।६१।** एते पुंसि

स्युः। अयमृषिः ॥ हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ।६२। एते पुंसि। अयं हस्त इत्यादि। इति पुंलिङ्गाधिकारः ॥

नपुंसकम्। अयमधिकारः ॥ भावे ल्युडन्तः ।१। ज्ञानम्। हसनम्। भावे किम्? पचनः ॥ निष्ठा च ।२। भावे या निष्ठा तदन्तं क्लीबं स्यात्। गीतम् ॥ त्वष्यञौ तद्धितौ ।३। शुक्लत्वम्। शौक्ल्यम्। षित्वसामर्थ्यात्पक्षे स्त्रीत्वे ङीष्। चातुरी ॥ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ।४। ब्राह्मण्यम् ॥ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि ।५। एतानि क्लीबानि। स्तेयम्। सख्यम्। कापेयम्। सैनापत्यम्। औष्ट्रम्। द्वैहायनम्। पितापुत्रकम्। अच्छावाकीयम् ॥ अव्ययीभावः ।६। अधिहरि ॥ द्वन्द्वैकत्वम् ।७। पाणिपादम् ॥ अनल्पे छाया ।८। शरच्छायम् ॥ इसुसन्तः ।९। हविः। सर्पिः। धनुः ॥ अर्चिः स्त्रियां च ।१०। इदमियं वाऽर्चिः ॥ छदिः स्त्रियामेव ।११। इयं छदिः ॥ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि। १२। एषामभिधायकानि क्लीबे स्युः। मुखमाननं वक्त्रम् इत्यादि। सीरार्थोदनाः पुंसि ।१३। वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ।१४। चात् क्लीबे ॥ अटवी स्त्रियाम् ।१५। पूर्वस्येयं त्रिसूत्री बाधिका ॥ लोपधः ।१६। कुशलम् ॥ शीलादीनि पुंसि च ।१७। चात् क्लीबे। शीलम् ॥ शतादिसंख्या। १८। शतम्। सहस्रम् ॥ शतायुतप्रयुताः पुंसि च ।१९। लक्षा कोटिः स्त्रियाम् ।२०। इयं लक्षा ॥ सहस्रः पुंसि ।२१। मन् द्व्यच्कोऽकर्तरि ।२२। मन्प्रत्ययान्तो द्व्यच्कः पुंसि स्यात् चात् क्लीबे नतु कर्तरि। वर्मा। वर्म। अकर्तरि किम्? ददातीति दामा ॥ ब्रह्मन्पुंसि च ।२३। अयं ब्रह्मा। इदं ब्रह्म ॥ सामरोमणी क्लीबे ।२४। पूर्वस्यापवादः ॥ असन्तो द्व्यच्कः ।२५। यशः। मनः। तपः। अप्सराः ॥ स्त्रियाम् ।२६। एना अप्सरसः ॥ त्रान्तः ।२७। पत्रम्। छत्रम् ॥ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।२८। इति नपुंसकाधिकारः ॥

स्त्रीपुंसयोः ।१। अयमधिकारः। गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ।२। इयमयं वा गौः ॥ अपत्यार्थतद्धिते ।३। औपगवः। औपगवी। इति स्त्रीपुंसाधिकारः ॥

पुंनपुंसकयोः। अधिकारोऽयम् ॥ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ।१। अयं घृतः । इदं घृतम् ॥ कबन्धौपधायुधान्ताः ।२। स्पष्टम् ॥ दण्डमण्डखण्डशवसैन्धवपार्श्वकाशाङ्कुशकुलिशाः ।३। दण्डः । दण्डम् ॥ इति पुंनपुंसकाधिकारः ॥

अव्ययम्-अवशिष्टलिङ्गम् ।१। कतियुष्मदस्मदः ।२। ष्णान्ता संख्या ॥ शिष्टा परवत् ।३। एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ गुणवचनम् । ४। शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ॥ कृत्याश्च ।५। करणाधिकरणयोर्ल्युट् च ।६। सर्वादीनि सर्वनामानि ।७। स्पष्टार्थेयं त्रिसूत्री ॥

इति श्रीवरदराजविरचिता सङ्क्षिप्तलिङ्गानुशासनसूत्रवृत्तिः ।



वन्देनवद्यसद्ग्रन्थविद्योद्भासितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्ड-स्नेहिरामजिशास्त्रिणः ॥



॥ श्रीः ॥ हरि ॐ तत्सत् ॥ श्रीः ॥

# अथ मध्यकौमुदीस्थसूत्राणां सूची ।




मन्दिर,